केन्द्रीयनिबन्धसंख्या ( र० न० ) ४२९६

विहारराज्यसंस्कृतसाहित्यसम्मेलनस्य त्रैमासिकं मुखपत्रं

## संस्कृत-सम्मेलनम्

तस्याऽयं

# महामहोपाध्याय-
# हरिहरकृपालुद्विवेदि-विशेषाङ्कः

सम्पादकमण्डलम्

श्रीजटाशङ्करझाः
श्रीब्रह्मदत्तद्विवेदी
श्रीभगवान्दत्तमिश्रः
श्रीकमलाप्रसादमणित्रिपाठी
श्रीचन्द्रदीपशुक्लः

विहारराज्य-संस्कृतसाहित्यसम्मेलनम्, पटना सिटी

१९७१

प्रकाशकः : विहारराज्यसंस्कृतसाहित्यसम्मेलनम्, पटना सिटी
मुद्रकः : अमर प्रेस, वाराणसी, वि० सं० २०२७
मूल्यं : रु०·१२–००

संरक्षकाः

श्रीरामपदार्थशर्मा श्रीपन्नालालरस्तोगी

श्रीदुर्गाप्रसादशर्मा

( अध्यक्षः वैद्यनाथ-आयुर्वेदभवनम्, पटना )

( मार्चमासपर्यन्तस्य संयुक्तोऽङ्कः )

उद्गमस्थानम्

श्रीरामनिरञ्जनदासमुरारकासंस्कृतमहाविद्यालयः

पटना सिटी

स्व० म० म० श्रीहरिहरकृपालुद्विवेदिमहाभागाः



विहारराज्यसंस्कृतसम्मेलनस्य संस्थापकाः

# विहारप्रान्तीय कांग्रेस कमिटी

तार का पता :—कांग्रेस, पो० मुरादपुर ( पटना )

ता० ३१-१-१६२८

माघशुक्लनवमी भौमवार १६८४

पूज्य श्री पण्डित हरिहरकृपालुशर्म्माजी, सादर प्रणाम।

आपको स्मरण होगा कि विहार-पण्डितसभा की एक पिछली बैठक में मुझे आपके दर्शन हुए थे, उस अवसर पर मैंने आपसे संस्कृतपाठशालाओं में गीता के पठनपाठन को सम्मिलित करने की चर्चा की थी। आपने इसको पसन्द किया था। अब यह आवश्यक है कि इसको कार्यरूप में परिणत करने के लिये संस्कृत एसोशियेशन के द्वारा इसकी स्वीकृति करायी जाए और संस्कृत के पाठ्यक्रम में इसे उचितरूप से सन्निविष्ट किया जाय। मैं आशा करता हूँ कि आप एसोशियेशन की अगली बैठक में इस विषय का प्रस्ताव लाकर इस विषय को सफल करने की पूर्ण चेष्टा करेंगे। विशेष कुशल है।

आपका सेवक—

राजेन्द्र प्रसाद

( स्वतन्त्र भारत के प्रथम राष्ट्रपति )

## म० म० श्रीहरिहरकृपालुद्विवेदिविशेषाङ्कस्यास्य प्रकाशने विशिष्टाः सम्मतिदातारः

१. डॉ० वेंकटगिरिवराहगिरिः : भारतस्य वर्तमानो राष्ट्रपतिः ।
२. श्रीगोपालस्वरूपपाठकः : भारतस्य उपराष्ट्रपतिः ।
३. श्रीमती इन्दिरागान्धी : भारत-प्रधान-मन्त्री ।
४. श्रीगुलजारीलालनन्दाजी : केन्द्रीय-रेलविभाग-मन्त्री ।
५. श्रीनित्यानन्दकानूनगो : विहार-राज्य-पालः ।
६. श्रीकन्हैयालालमाणिकलालमुंशी : भारतीयविद्याभवन, बंबई ।
७. श्री रामदेव महतो : विधायकः-पटना ।



······लोकोत्तरवैदुष्यसम्पन्नानां तादृक्षाणां श्रीहरिहरकृपालु-द्विवेदिमहानुभावानां चरितं ज्ञातुं वक्तुं प्रकटीकर्तुं वा मादृक्षो जनः कथं प्रभवेत्। स्मृतिरपि तेषां पुण्यप्रदा इति।

—जगद्गुरुशङ्कराचार्याः ( पुरी )

# विषय-सूची

## द्वितीयो भागः





# सम्पादकीयं निवेदनम्

आसीत् स्मरणीयो रमणीयः कश्चिद् विद्याविवेकसमृद्धिसम्भारभासुरोऽमन्दानन्दसन्दोहमयः समयो विपश्चिदपश्चिमानाम्। यस्मिन् पण्डितपञ्चाननारविन्देषु सुखं वाचां लास्येन उल्लसन्ती, विद्यामन्दिराणि सजीवनानि रुचिरं भासयन्ती गिरामधीश्वरी भगवती शारदा शारदाम्भोजवदना विराजमाना समालक्ष्यत। तदानीं क्वचित् समभ्यस्तसमस्तसस्वरविकस्वरश्रुतिपटुबटूनामुच्चैः समुद्घोषः। क्वचित् फणिभणितिनिरूपणपरो वाग्विलासः। क्वचिदविच्छिन्नावच्छिन्नावच्छेदकताच्छन्ना गिरां राजयः। क्वचिन्नितान्तदुर्दान्तवेदान्तकान्तशान्तचिन्तनप्रवाहः। क्वचिन्मृद्वीकामधुमाधुरीमप्यधरयन् साहित्यस्य सौहित्यकरो रसोल्लासः।

परमद्य क्व पटुबटूनां श्रुतिसुखकरः श्रुतिरवः क वा फणिभणितिवाग्विलासः, क वा अवच्छेदकावच्छिन्नानां गिरामविच्छिन्नप्रवाहः, क वा ग्रन्थग्रन्थीनां श्लथीकरणग्रहिलोऽभिलाषः। क वा तत्त्वबुभुत्सूनां विदुषां शान्तः समुदयः। हा हन्त सर्वं बलीयसाऽनेहसा कवलितमिव प्रतिभाति। दवीयान् सदाचारविचारयोः पन्थाः, ह्रसीयान् सुरसरस्वतीरसास्वादः, स्थवीयान् शास्त्रविचारप्रसारः। चिरात् सञ्चितोऽयममूल्यो विद्यानिधिर्महता कालवेगेन तिरोधापितः सर्वान् सहृदयान् सुरभारतीसेवकान् दुःखाकरोति। तदयं वर्त्तमानः कालोऽस्मासु औदासीन्यं निरुत्साहञ्च निदधानः संसरति। यदा मानवो वर्त्तमानकालेन खिन्नोऽशान्तिमधिगच्छति तदा अतीताभिः कथाभिः कियन्तं कालं न स्मरति अशान्तिम्। अनुभवति चात्मनो जीवनाधायिनीं प्रेरणाम्। सम्भावयति च सुखमयं भविष्यत्कालम्। अतीतं विस्मृत्य न कश्चिल्लोकः क्षणमपि श्वसितुं प्रभवति। अतः प्रेरणां समुत्साहञ्च ग्रहीतुमवश्यमतीतां कथां संस्मरेत्।

कतिपयेभ्यो वर्षेभ्यः पूर्वं वैदुष्यप्रकर्षस्य परां सीमानमधिरूढाः म० म० श्रीबालशास्त्रि-श्रीशिवकुमारशास्त्रि-श्रीराममिश्रशास्त्रि-श्रीनकछेदरामद्विवेदि-श्रीबच्चाझा-श्रीहरिहरकृपालुद्विवेदि-श्रीबालकृष्णमिश्र-श्रीचिन्नस्वामि-श्रीयोगेन्द्रनाथवागची-श्रीश्याम-

नारायणचतुर्वेदप्रभृतयः सर्वतन्त्रस्वतन्त्राः प्रकाण्डपण्डिताः विद्वद्रत्नमालायमानाः समभवन्। येषां विज्ञानालोकेन न केवलमिदं भारतवर्षमपि तु निखिलमिदं विश्वं चमत्कृतमालोकितं चाभवत्। तेषां स्मृताऽपि कथा सर्वथाऽमङ्गलं समूलमुन्मूलयन्ती लोकानां कल्याणाय कल्पते। येभ्यो वैदेशिका अपि आकृष्टमानसा अश्रुतपूर्वं विषयं सश्रद्धं जिज्ञासमानाः पण्डितानां सरलचित्तानां चरणयोरन्तेवासितामुपगम्य सश्रमं सनियममधीत्य परं वैदुष्यं प्रसादञ्चावापुः। आधुनिकेन विज्ञानेन सौन्दर्येण वैभवेन वा न तेषामाकर्षणं भारतस्य गौरवं वा अपि तु संस्कृतसाहित्यभाण्डागार-सञ्चितापूर्वविषयाधिगमेन समाकर्षणं भारतस्य च परं गौरवम् आसीत्। संस्कृतं संस्कृतज्ञाश्चेत्युभावपि तेषामादरभाजनतामुपगतौ।

तेष्वेव गौरवशालिषु प्रखरतरपाण्डित्यप्रभाप्रकर्षेण पारम्पर्यक्रमागताचार-विचारेण चातिशय्य भासमानानां श्रीगुरुचरणानां काचिदपूर्वा सुषमा व्यराजत। एनान् पण्डिततल्लजान् उत्पाद्य भगवती धर्मधुरन्धरा भारतवसुन्धरा अन्वर्थां स्वाममन्यत, तथा लोकशास्त्रोभयविज्ञानिमानासाद्य पूर्वाचार्यराहित्यं विसस्मार। विद्वद्रत्नमालाया इमे भासुरं रत्नम्। दिव्याकृतयो वाग्देव्या वरदपुत्रा एते इत्यनतिशयं वचः। शास्त्रार्थेऽनल्पकल्पनाजल्पनजलधिनिमग्नो न कोऽपि पारीणता-मुपागमत्। तादृशमनितरसाधारणं प्रतिभाप्रागल्भ्यं विभाव्य को नाचित्रीयत। को वा द्वित्रान् साधुशब्दान् प्रसह्य सहसा नोदचीचरत्। एषां वैदुष्यचमत्कारिता निर्लोभता स्वतन्त्रता लोकनिपुणता च केनापि साकल्येन वर्णयितुं न शक्या। केनचिद् विदुषा कश्चिदंशः केनचित् कश्चिदंशः स्वलेखे विवृतः। मिथिलामही-मण्डनैः श्रीरमेश्वरसिंहमहाराजाधिराजैरधिष्ठितायां विद्वत्परिषदि—

"नायं कामयतेऽन्यतोऽर्थकणिकां न क्लीबकल्पां कृपां
नापि क्वापि पदोन्नतिं न विजयख्यातिं न चान्यत्परम्।"

इत्यादिश्लोकेन स्वाभिप्रायं प्रकाशयद्भिरेभिर्निर्लोभतात्यागादिगुणाः स्पष्ट-मुद्भाविताः। एवं महामनोमदनमोहनमालवीयमहोदयेनासकृन्निवेदिता अपि काशी-हिन्दूविश्वविद्यालयस्य संस्कृतविभागाध्यक्षपदालङ्करणाय, श्रेष्ठिश्रीरामनिरञ्जन-दासमुरारकामहोदयानां पाटलिपुत्रस्थमहाविद्यालयप्रवर्त्तकानाम् अनुमतिमन्तरा तत्पदं ग्रहीतुं न शक्नोमीति सादरं तमब्रुवन्। अनेन श्रेष्ठिप्रवरे स्नेहाधिक्यदयालु-

तादयो गुणाः व्यक्तीभवन्ति। शास्त्रार्थे विजयख्यातेः पुस्तकानां प्रणयनेन च अदूष्यो वैदुष्यप्रकर्षः सर्वत्र प्रकाशते। श्रीगीतामधुसूदन्याः संस्कृतनिहितविषयाणां सुबोधतासम्पादनाय भाषानुवादेन विषमस्थलटिप्पण्या च लोककल्याणभावना स्फुटं प्रतिभाति। सरलया मधुरया वाचा साधारणजनानपि विप्रतिपन्नान् बोधयन्तो विश्वबन्धुतामेते प्राकटयन्।

चरमे वयसि सर्वविधसौख्यशालिपरिवारमावासं महाविद्यालयप्रधानाचार्यपदं परित्यज्य भगवन्तमतुलशक्तिसनाथमनाथनाथं विश्वनाथं समर्चयितुं काशीपुरीं पञ्चदश वर्षाणि प्रायेणाध्यवात्सुरिति शास्त्रीयमर्यादायाः स्तुत्यः समादरः। जन-सम्मर्देऽपि श्रीविश्वनाथमन्दिराभ्यन्तरे पश्चिमोत्तरकोणे स्थित्वा अवकाशं प्रतीक्षमाणैः कृतं भगवतो विश्वनाथस्य समर्चनं परमां भक्तिमालक्ष्यति, इत्येवंविधलोकोत्तरगुण-गणालङ्कृतानामेषां चरित्रलवानुबन्धि-संस्कृतसाहित्य-सम्मेलनविशेषाङ्कः प्रकाश्यते, अनेन पाठकानां भूयानुपकारः सम्भाव्यते। ईदृशा महापुरुषाः कदाचिदेव क्वचि-दवतरन्ति। धन्या भारतभूमिः, धन्यः संस्कृतसमाजः, धन्या वयं संस्कृतसाहित्य-सम्मेलनसदस्याः यत्र ईदृशानां महाविदुषामालोको यदा कदा उपलभ्यमानः सर्वान् आप्याययति आदर्शोपस्थापनद्वारेण श्रुतिस्मृत्योः पन्थानं च विमली-करोति। एतेषामादर्शचरितेन वैदुष्यप्रकर्षेण च सुरभारतीसेवका विद्वांस-श्छात्राश्च आदर्शं गृहीत्वा संस्कृतसाहित्यस्य गौरवमभिरक्षन्तु वर्धयन्तु चेति। एभिरेव शब्दैः सुगहीतनामधेयेभ्यः श्रीगुरुचरणेभ्यः श्रद्धासुमनोऽञ्जलिं समर्पयामः।

विहारराज्य-संस्कृतसाहित्य-सम्मेलनाधिकारिणो महानुभावा विशेषाङ्कप्रकाशन-समितिसदस्याश्च अपि भूरिशो धन्यवादानर्हन्ति येषामसीमकृपया संस्कृत-सम्मेलन-पत्रिकाया एष विशेषाङ्कः सर्वथोपादेयः सुरसरस्वतीसमुपासकानां करकमलयोरुपा-यनीक्रियते।

अस्य द्विवेदिशताब्दीस्मारक-विशेषाङ्कस्य कृते यैर्महानुभावैः स्वरचनाः समुदं सकृपं च प्रदत्तास्तेऽस्माकं धन्यवादार्हाः। लेखानां रचनानाञ्च प्राचुर्यात् बृहत्कायोऽयं विशेषाङ्कः सम्पन्नः, अथापि सर्वे लेखाः न प्रकाशिताः इत्येतन् महामहो-पाध्यायान् प्रति संस्कृत-विद्वत्-समाजस्यापरिमेयां श्रद्धां भक्तिं च विपुलं व्यनक्ति। भृशमनुगृहीतोऽयं सम्पादक-वर्गस्तेषां समेषामपि विदुषाम्।

श्रेष्ठिवर्य-मुरारका-परिवारस्याऽपि विशेषतः श्रीकमलाप्रसाद-मुरारका-महोदयस्य श्रीमहावीरप्रसादमुरारकामहोदयस्य च सुमहान् सहयोगः साहाय्यं च विशेषाङ्कस्यास्य प्रकाशने महदवलम्बनमिति नातिशयोक्तिः। महामहोपाध्यायाः श्रीद्विवेदिमहोदया मुरारकापरिवारेण सहात्मनिर्विशेषं चिरं सम्बद्धा आसन् इति तु विदितचरमेव विदुषाम्। मुरारकापरिवारस्तु सामान्यतो भारतीयसंस्कृतेः, धर्मस्य, देवभाषायाश्च महान् पोषकः कल्पतरुरिव सकलकामनासाधकश्चिरात् वरीवर्त्ति चर्कर्ति च सदोपकृतिं कृतिमतामिति निश्चप्रचम्।

संस्कृत-शिक्षा-प्रणयिनां संस्कृत-निदेशकश्रीरामपदार्थशर्मणां सहयोगं साहाय्यञ्चावाप्य आप्यायितः सम्पादकवर्गः चिरं कृतज्ञतां बिभर्ति। एवमेव चौखम्बा-पुस्तकालयाधिपति-श्रीमोहनदासगुप्तशुभोदयाय साशीर्वचनं धन्यवादान् प्रयच्छति। यस्य श्रमानुग्रहाभ्यामस्य कलेवरं समं सुषमया समवर्धत।

प्रकाशने विलम्बातिशयभिया साकल्येनांऽशतो वा ये लेखा न प्रकाशितास्ते अग्रिमेष्वङ्केषु क्रमशः प्रकाशयिष्यन्ते। लेखप्राप्तिक्रमेण प्रायेणात्र लेखाः प्रकाशिताः। प्रमादादापतितानां दोषाणां विलम्बस्य च कृते क्षमैव शरणम्।

काशिकोर्ध्वाम्नायसुमेरुपीठाधीशशङ्कराचार्याणां पदवाक्यप्रमाण-
पारावारपारीणस्वामिश्रीमहेश्वरानन्दसरस्वतीमहाराजानां

## प्रसूनानि

गर्जन्मेघमृदङ्गमांसलदृढध्वानः प्रभावोद्धुरः
पाण्डित्यप्रतिभाप्रतापमथितावष्टम्भवादिव्रजः ।
वाग्धाराप्रबलप्रवाहचकिताकुण्ठत्सभव्याजन-
स्तेजोमण्डलमण्डितो हरिहराद्वैतस्तथैवेक्ष्यते ॥ १ ॥

मध्याह्नार्कमरीचिवीचिनिचयस्तोमोद्गमं संस्तुमो-
ग्रस्ताशेषजगत्त्रयं न सहते स्थातुं तमो यत्पुरः ।
खद्योताः प्रसरन्तु निर्जनवने क्वाणं शनैः कुर्वता-
मुद्यन्तो मशकाः शशाः प्रविचरन्त्वेकान्ततः संश्रिताः ॥ २ ॥

वेदान्तैकधुरन्धरः प्रविदिताशेषार्थसार्थः क्षमी
दृप्यत्खण्डनखण्डखाद्यविगलद्ग्रन्थ्येकहर्षः कविः ।
व्याकृत्यासमया चमत्कृतमतिर्मीमांसयालिङ्गित-
स्तर्केष्वप्रतिमो विभूतिमहती वाग्देवता दीप्यते ॥ ३ ॥

तेजः किंचन भास्वरं समुदितं, सा संस्कृता वैखरी,
शास्त्रार्थप्रतिभाबृहस्पतिवपुः सर्वा समुज्जृम्भिता ।
गूढार्थग्रथनाविभेदनपटुर्लोकोत्तरा तीक्ष्णता,
सर्वाश्चर्यमयः स कोऽपि पुरुषः कीर्त्या श्रिया द्योतते ॥ ४ ॥

छात्राः सन्ति सहस्रशः श्रुतधरा देदीप्यमाना भुवि
प्रख्याता रचनाः स्फुरन्ति शतशो विद्वद्वरैः श्लाघिताः ।
धर्म्याः सत्कृतयो मनोहरसदाचारोऽनवद्या गिरः
सम्पर्को मधुमाधवीविगलितो मूर्तो गुणानां गणः ॥ ५ ॥

दृश्यौ हरिहरौ यत्र संस्फुरन्ती कृपालुता ।
महामहोपाध्यायश्रीः परब्रह्मेव सा स्थिरा ॥ ६ ॥



अनन्तश्रीविभूषितज्योतिष्पीठाधीश्वरजगद्गुरु-
शङ्कराचार्यस्वामि-श्रीकृष्णबोधाश्रममहाराजानां

## शुभाशंसा

पण्डितप्रवरमहामहोपाध्यायश्रीहरिहरकृपालुद्विवेदिनां विशेषाङ्क-पत्रं समुपलब्धम् । एतदर्थं समितिसदस्या धन्यवादार्हाः, यत् स्वभावना-भरितैः शब्दकुसुमाञ्जलिरञ्जितैः श्रद्धाकुसुमैर्महामहोपाध्यायश्रीद्विवेदिमहा-भागं सभाजयन्ति । 'कृते च प्रतिकर्त्तव्यमेष धर्मः सनातनः' इत्यभियुक्तोक्त-वचोभिरसत् पाञ्चभौतिकं यशःकायं विद्वद्धृदयनिहितनिकायं श्रीहरिहर-कृपालुद्विवेदिनं स्मरतां विशेषाङ्कसदस्यानां, तत्प्रसङ्गो नान्येषां पत्रपाठकानाञ्च विदुषां स्वान्तमञ्जसा पवित्रयिष्यति एष प्रयासः । अस्य महाविदुषः संस्मर-णानि भविष्यतां विदुषां तदन्तेवासिनाञ्च हृदये संस्कृतवाङ्मयाङ्कुराण्याधा-स्यन्तीति विश्वासः । महापुरुषाणाञ्चरित्राण्यधीयानानान्तदनुकुर्वतामेव मनस्तादृशं भवितुं चेष्टते । अनेन भवतां प्रयासेन सांस्कृतिकजगति महान् समुन्मेषो भविष्यतीत्याशासते श्रीमज्जगद्गुरवः ।



## वाराणसीस्थ'धर्मसङ्घ'संस्थापकानां पूज्यपादानां स्वामिश्रीकरपात्रीजीमहोदयानां

# शुभेच्छा

इदमतीव प्रमोदजनकं यत् पण्डितप्रकाण्डानां यशःशरीरमात्रेण भुवमलङ्कुर्वतां महामहोपाध्यायपदवीभृतां श्रीहरिहरकृपालुद्विवेदिमहोदयानां जन्मशताब्दीपूर्त्यवसरे विहारप्रदेशसंस्कृतसम्मेलनस्य मुखपत्रिकायाः श्रीहरिहरकृपालुद्विवेदिविशेषाङ्कः प्रकाशितः।

इमे हि न केवलं जन्मभूमेरुत्तरप्रदेशस्य, न वा साधनावसुन्धराया विहारस्यापि तु समस्तस्य संस्कृतलोकस्य सम्मानभाजनान्यासन्, येषां यशःशरीरे जरामरणजं भयन्नास्ति, ते लेखका, अध्यापकाः, शास्त्रार्थकुशला भवन्ति विद्वांसः। इमे महाभागा ग्रन्थलेखनेनाध्यापनेन, प्रवचनेन, शास्त्रार्थकौशलेन लोकान् चकितान् विधाय परमां प्रतिष्ठां विद्वत्स्वपि प्राप्तवन्तः। प्रायो दृश्यन्ते भारतीयताया विभूतयो विद्वांसो भौतिकं शरीरं परित्यज्य, स्वीयानुपदेशान् लोकेषु, अध्यापनपरिपाटीः प्रियशिष्येषु, आख्यायिकाः प्रियजनेषु, आचरणमनुगतेषु वितीर्य निवृत्ता भवन्ति। तदुत्तराधिकारिष्विदं कार्यं स्वयमापतति यत्तेषां जीवने याः सम्मानभरिताः घटनाः अध्यापने, शास्त्रार्थे वा विषयोपस्थापनप्रकाराः, भाषणानि, लेखाः प्रकाशिताः सन्ति, भविष्यतो लोकस्योपदेशाय प्रकल्पेरन्। तानि ततस्ततः समाहृत्य प्रकाश्येरन्। तेन समाजस्य महानुपकारो भवेदिति।

येषां नामग्रहणं गौरवेण भवति, तेष्वेते महाभागाः सन्ति। अध्यापनपाटवं, शास्त्रार्थप्रकारः, दुरूहग्रन्थग्रन्थिभेदक्षमं पाण्डित्यं, के गुणा वा विशेषेण न सन्ति। अयन्त्वेको महान् गुण आसीत्, यत् कलावपि स्वाभिमानित्वमाचारनिष्ठता च।

सम्मेलनस्य सदस्यान् शुभाभिराशीर्भिर्योजयमाना, अयं विशेषाङ्क एषां विद्वद्वरेण्यानां जीवनसम्बन्धिनीभिरुपदेशप्रदाभिः सामग्रीभिः पूर्णो भवेदिति सभाजयन्तो नारायणस्मरणानि मङ्गलमयानि वितरन्तो विरमामः। इति शिवम्।



# गुरुस्तवः

( सन्तः श्रीहनुमान्दासमहोदयाः, कबीरचौरा, वाराणसी )

सर्वाभिमानभयरोषविवर्जितो यो, ब्रह्माभिमानसुयुतः करुणासमुद्रः ।
वादीन्द्रवारणनिवारणकर्मठोऽसौ सिंहद्विपास्यतनुतः कृतसारमुद्रः ॥ १ ॥
ब्रह्माद्वितीय इव साधुसुसर्जनेऽद्धा, मायाविकारपरिवर्जनसाधुमुख्यः ।
ब्रह्मण्यमुख्यहरिरन्तहरो दयालुः, सद्यः कृपालुगुरुवर्यमहाकृपालुः ॥ २ ॥

श्रीहरिहरसुकृपालुगुरु, मोहमार करिदूर ।
पक्षपात से रहित नित, दिये अभयपदपूर ॥ १ ॥
अभयदानि रक्षक सदा, शरणागत के देव ।
देखा सुना न और कहूँ, पाया अद्भुत भेव ॥ २ ॥

अहं श्रीमतां गुरुवराणां सम्बन्धे बहु अन्वभवम् । परं सर्वान् विषयान् क्रमेण लेखितुमसमर्थः । परमहं संक्षेपेण इदमावेदये यत् तेषु दयापात्राणां कृते शिरीषपुष्पादपि अधिकं मार्दवम् श्रीजाह्नवीतोयादपि प्रभूतं शैत्यमासीत् ।

गङ्गा पापं शशी तापं दैन्यं कल्पतरुर्हरेत् ।
पापं तापं तथा दैन्यं सद्यः साधुसमागमः ॥

अस्योदाहरणस्वरूपाः गुरुवरा आसन् । रोगरागाद्यभितप्तोऽहं तेषां श्रीगुरुचरणानां शरणमगमम् । ततश्च शान्तिमवाप्नवम् । अतोऽयं कदापि न विस्मरणीयतां भजते । प्लेगरोगसमये तत्र रानीपुरग्रामे मैथिलो विद्यार्थी प्लेगरोगाक्रान्तः निःसहायः खिन्नमना आसीत् । तदानीं तत्सौविध्यसम्पादनाय मया सह श्रीगुरवोऽपि गताः । तत्र तमाश्वास्य औषधाद्युपचारेण सर्वविधसौविध्यं विधाय परावर्तिताः । एवंविधानि उदाहरणानि बहूनि दृष्टानि । ममोपरि दयाभावो वाचामगोचरः ।



# संस्मरणम्

( पद्मभूषण पण्डितराज श्रीराजेश्वरशास्त्री, वाराणसी )

व्याकरणादिशास्त्रेषु प्रतिभासम्पन्नानां संस्कृतभाषाबद्धविचित्रतरप्रयोगरचनायां निपुणमतीनां तर्कविद्यास्वादरसिकानां महामहोपाध्यायानां कै० श्रीहरिहरकृपालशास्त्रि-द्विवेदिमहाभागानामस्मिन् प्रसक्ते शताब्दीसमारोहे कतिपयानि संस्मरणानि संस्मृत्यायं वाक्यकुसुमाञ्जलिर्विदुषां सेवायामुपाह्रियते ।

इमे महाभागाः गुरुशिक्षोपलब्धशास्त्रवनेषु विहरन्तः स्वतन्त्रवृत्तय आसन् । अभूवंश्चातितरां विनयनयनिपुणाः । ये किल विद्यारससुखनिभृतचेतसो भवन्ति, ते न कदाचित् महात्मभिः सह किञ्चिज्ज्ञैः सह वा विरोधमुपयान्ति । गुरुभक्तिबलादेभिः श्रीमद्भगवद्गीतामधुसूदन्या भाषायामनुवादं प्रकाश्य स्वकीयमान्वीक्षिकीविद्यायामतिगाम्भीर्यं ख्यापितमस्ति विद्वत्समाजे, इति सर्वे एवेमामुपकृतिं संस्मरन्ति विद्वांसः । एतेषां मतेरान्वीक्षिकीविद्याविषयेऽत्रैव विश्रामो नाभूदपि तु इमे तत्रातीव स्निग्धा आसन् । प्रायः कतिपयान् विहाय कृतशास्त्रपरिश्रमा अप्यान्वीक्षिकीं विद्यामुपेक्षन्ते, परमस्या उपयुक्ततां विजानानेष्वेतेषां महाभागानामस्मिन् प्रसङ्गे स्मृतिर्भवति । यद्येते वर्त्तमान-समयेऽभविष्यन् तर्ह्यवश्यमेव द्विद्याध्ययनाय विदुषः प्रैरयिष्यन्निति । ईदृशानामद्य दौर्लभ्ये-नान्वीक्षिकीविद्येयमुपेक्षणीयस्थितिं प्राप्ता सती नीतितत्त्वालोकं च्यावयतीति महर्षिगौतमेन दृष्ट इतिहासः पुनरावर्तते । यदा किल जगदान्वीक्षिकीं विस्मरति तदा दुःखपङ्के निमग्नं सद्दुरपनेयां दुरवस्थां प्राप्नोतीति प्राचीनेतिहासो यदा नृत्यति स्म तदा भगवान् गौतम इमां प्रणिनाय, जगदुद्दधार च । तथैवाद्यापि तत्सधर्माणो गुरुभक्ता उक्तविद्याप्रचाराया-पेक्षन्ते, ये खल्वेतन्मुखेन समस्तमितरविद्यास्वन्तर्निहितं प्रकाशमानाय्य मोहान्ध्याज्जगद्र-क्षयितुं सफलप्रयत्नाः स्युः, अस्यामेव मोहापसरणसामर्थ्यस्य सात्त्विकतामूलभूतस्य बीज-स्य विद्वद्भिरनुभूतत्वात् । तदुक्तम्—

मोहं रुणद्धि विमलीकुरुते च बुद्धिं
सूते च संस्कृतपदव्यवहारशक्तिम् ।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न कुरुते कमिहोपकारम् ॥ इति ।

इदं त्वन्यदेतत्, यत् यस्मिन् समये लोके सात्त्विकताया रागद्वेषविरहितायाः स्थितिरासीत्, तदेयं विद्या विदुषां चेतसि सरस्वतीवन्निगूढं निवसन्ती न प्रकाशं प्राप इति। परं यदा लोके इयमुपवर्णिता स्थितिर्न भवति, अपि तु श्रीमद्भगवत्पूज्यपाद-शङ्कराचार्योक्तदिशा कालमहिम्ना यथा यथा लोकोऽयं सांसरिकसुखमवगाह्य तद्विषये सञ्जातरागः प्रमादजाड्यप्रभृतिदोषवशात् अज्ञातपरिणामोदयेन विलुप्तविवेको भवति, तथा तथाऽयमनभ्यस्तश्रुतिः सन् धर्मं तिरस्करोति। सति च तस्मिन्नपाविन्यवशात् कस्मिं-श्चिदंशेऽधीतविद्योऽपि दोषबहुलचक्षुष्मान् भूत्वा अचक्षुष्क एव समास्ते इत्ययमन्धो भवति, तदानीं हर्षशोकौ च शत्रू वर्धेते। किञ्च हर्षशोकाक्रान्तदशायामचक्षुष्मता मानवेन कृतो निर्णयो बाहुल्येन नीतिपथं नानुसरति। तदभावे फलाभावोऽपि नियत एव। तदुक्तम्—

"नीतेर्विना फलं नास्ति शास्त्रेणैकान्तिको नयः।" इति। अतः सफलनीतिनिर्णया-यानुमानप्रामाण्यस्य व्यवस्थापिका आन्वीक्षिकी अवश्यमन्वीक्षणीया भवति।

अत एवोक्तम्

"तत्र सर्वविद्याविचारहेतुत्वात् पूर्वमान्वीक्षिकी।" इति। तामिमामान्वीक्षिकीं विद्यामध्येतुमिमे विदुषः प्रेरयामासुरिदं वर्तमानसमये स्मरणमुचितमेव भवति।

तदिदं प्रेरणं श्रीशास्त्रिमहाभागानामान्तरिकसन्तोषसुखमनुभूयादित्यपि दार्ढ्येन वक्तुं शक्येत, यतः पिता हि महताऽऽयासेन धनं समर्ज्य पुत्रायात्महृदयाय यथा सम-र्पयितुं वाञ्छति, तथोक्तमनाहार्यं सद्यदप्रामाण्यज्ञानानास्कन्दितं ज्ञायेत तदेव निश्छल-पुत्रायोपदिशति। यथाऽनेकेषु शिष्येषु सत्स्वपि महर्षिरात्मजं शुकमधिकारिणं भागवतमध्याप्य तत्प्रतिष्ठापयामास, तथैव एभिः शास्त्रिवर्यैः स्वकीय आत्मजः सहृदय आन्वीक्षिकीमध्येतुं प्रेरितः। तेनात्मजेन श्रीब्रह्मदत्तशास्त्रिणा अन्यैश्च विद्यार्थिभिस्तेषामाज्ञा नोल्लङ्घिता। तदिदं तेषामान्वीक्षिकीं प्रति स्थितं सन्तोषसुखमस्मान् प्रेरयतीति तेषामेषा काशीप्रान्तीय-वर्णाश्रमसङ्घस्य विद्वत्परिषदि प्रकाशितवैदुष्याणामस्मिन् शताब्दीसमारोहे स्मरणं कुर्व-न्नात्मनः कृतज्ञतां प्रकाशयामीति।



# श्रीगुरुचरणश्रुतस्मरणम्

( श्रीकमलाकान्तमिश्रः, भूतपूर्व-प्रधानाचार्यः,
गोयनका-संस्कृत-महाविद्यालयः, काशी । )

तत्त्वाज्ञानान्यथाज्ञानभ्रमो नात्येति यत्पदम् ।
तदक्षरं परं ब्रह्म तुरीयं समुपास्महे ॥ १ ॥

स्मृतोऽपि यद्गिरामोघस्तमस्तापं व्यपोहति ।
श्रीकृपालुं गुरुं वन्दे साक्षाद्धरिहरात्मकम् ॥ २ ॥

परेशानुग्रहोद्भूतसत्त्वनिर्मलमानसम् ।
स्तवीमि गुरुसूनुं श्रीब्रह्मदत्तद्विवेदिनम् ॥ ३ ॥

अधीत्यध्यापनाकालभवं वृत्तमशेषतः ।
गुरोर्वक्तुमशक्तोऽपि वक्ष्ये किञ्चिद् यथाश्रुतम् ॥ ४ ॥

आत्मतत्त्वामृतकथां गुरोः श्रुत्वातिदुर्लभाम् ।
ब्रह्मात्मावगतौ श्रद्धा प्रादुरासीन्ममात्मनि ॥ ५ ॥

श्रद्धाधनो ब्रह्मनिष्ठं गुरुं वेदान्तपारगम् ।
गच्छेदुक्तं साधनेषु श्रुतौ सोपानमादिमम् ॥ ६ ॥

विद्यानिधिमुपाश्रित्य गुरुं वाग्मिदयार्णवम् ।
वेदान्तदर्शनेऽधीती संजातो दृढनिश्चयः ॥ ७ ॥

वेदान्तावगमः क्वायं क्वाहं विषयमग्नधीः ।
गुरोः परानुकम्पैव संजाता तरणे तरिः ॥ ८ ॥

अविलम्बेन कालेन श्रौततत्त्वजिघृक्षया ।
अनुनीतो गुरुर्मह्यं तत्त्वमेकमुपादिशत् । ९ ॥

सारस्वतं मन्त्रराजमधिकाशि शुभेऽहनि ।
प्रभावाद् यस्य मन्दोऽपि वाचस्पत्यं समश्नुते ॥ १० ॥

स्मर्तव्योऽत्र विशेषेण गुरोर्गुरुरुमापतिः ।
सदातनस्य धर्मस्य समुद्धर्ता गिरां पतिः ॥ ११ ॥

चिन्तामणिमहामन्त्रराजस्येयं परम्परा ।
विच्छिन्नापि मुखाद् यस्य गुरोः कर्णान्तिकं गता ॥ १२ ।

यद्बलाद् गुरवः सर्वशास्त्रारामविहारिणः ।
पञ्चानना विपक्षेषु स्वपक्षे चतुराननाः ॥ १३ ॥

तदीयोपकृतिर्नैव विस्मर्तव्या कदाचन ।
यतः सारस्वती विद्या विपश्चित्कुलमाश्रिता ॥ १४ ॥

विज्ञत्वं च विजेतृत्वं वक्तृत्वं ब्रह्मनिष्ठता ।
श्रीहर्षादेरिवाजस्रं गुणाः सर्वे गुरौ स्थिताः ॥ १५ ॥

नैतादृश इतः पूर्वं श्रुतो नाद्यापि वर्तते ।
पुनरुत्पत्स्यते कोऽपि को जानातु विनेश्वरम् ॥ १६ ॥

उमापतिर्गुरुवरान्नकच्छेदोपनामकात् ।
अधीयानोऽधिसाकेतं स्वप्नमेकं व्यलोकयत् ॥ १७ ॥

काचिद्दिव्याम्बरा पूर्वमदृष्टा सुरसुन्दरी ।
प्रसन्नापररात्रान्ते मन्त्रं दित्सुरिवोत्सुका ॥ १८ ॥

तावद्गुरुर्भग्ननिद्रः सर्वं संवादिविभ्रमम् ।
मत्वातुष्यच्छुभं भाविफलमस्य न संशयः ॥ १९ ॥

गुरुपुत्रानुगो यातो द्वितीयेऽह्नि गुरोः कुलम् ।
गोरक्षस्य पुरं गच्छन् पथि च्युतमवाप यत् ॥ २० ॥

वाग्देवीमन्त्रयन्त्राभ्यामुपन्यस्तं समादरात् ।
पत्रं प्रत्यागतोऽयोध्यां गुरवे तन्न्यवेदयत् ॥ २१ ॥

ततोऽर्थं सुप्रसन्नात्मा जगाद परमो गुरुः ।
भवते किं प्रयच्छामि प्रियमन्यदितो धनम् ॥ २२ ॥

इष्टं वस्त्वन्तरं नास्माद् बहोः कालादिदं मया ।
सुरक्षितं प्रयत्नेन दैवादापतितं भुवि ॥ २३ ॥

देवीदत्तमहं मन्ये ततस्तुभ्यं वितीर्यते ।
पत्रमद्य गृहाणेदं द्वारं वैदुष्यसंपदाम् ॥ २४ ॥

मन्त्रयन्त्रविधानादि कालेऽन्यत्र प्रवक्ष्यते ।
ग्रहणे वा गुरौ पुण्ये स्थिरे लग्ने तथोच्चगे ॥ २५ ॥

इत्थं सारस्वती विद्या संप्रदायपरिष्कृता ।
अज्ञानजलधौ मग्नान् जाह्नवीवोद्दिधीर्षति ॥ २६ ॥

कुत्रापि विषयेष्वस्याः प्रसारो न निरुध्यते ।
ब्रह्मतत्त्वार्णवं प्राप्य नदीनृत्यति मेदुरा ॥ २७ ॥

विद्या देवीस्वरूपैव देवी ब्रह्मस्वरूपिणी ।
तदभिन्नाभिदन्यायाद् विद्येयं ब्रह्मरूपिणी ॥ २८ ॥

ब्रह्मानन्दात्मिकामेनां समासाद्य मनीषिणः ।
स्वानुभूतिं कृपापूर्णाः शिष्टानुपदिशन्ति च ॥ २९ ॥

एवं मन्त्रजपन्यासविधिज्ञानादनन्तरम् ।
अन्वतिष्ठद् वर्षमेकं ब्रह्मचर्यव्रतं चरन् ॥ ३० ॥

प्रसन्ना तेन वाग्देवी गुरवेऽतुलमुत्कटम् ।
सर्वागमेषु वैदुष्यं चमत्कारि समार्पिपत् ॥ ३१ ॥

सिद्धमन्त्रान् गुरूनित्थं कृपार्थं ये सिषेविरे ।
न तेषां दुर्लभं किञ्चिद् विद्या तेजो यशो बलम् ॥ ३२ ॥

सरस्वत्याः प्रसादेन प्राप्तं स्वातन्त्र्यमीदृशम् ।
अन्धभक्त्या न कस्यापि वाक्यं किञ्चिदजीगणत् ॥ ३३ ॥

शास्त्रयुक्तिमतं यत्तु वाक्यं कस्यापि कुत्रचित् ।
तद्विचारास्पदत्वेन सादरं बह्वमन्यत ॥ ३४ ॥

काशीवासप्रसङ्गेन बृहदारण्यवार्तिकम् ।
हिन्दीव्याख्यार्चितं कृत्वा गीताया मधुसूदनीम् ॥ ३५ ॥

समाहितेन मनसा व्याचक्षाणो यथागमम् ।
गीतामलं विषीदन्तं पदमेकं सरस्वती ॥ ३६ ॥

विषादं प्राप्नुवन्तं तद्भङ्क्त्वा वाक्यमकल्पयत् ।
स्ववाक्यमपि व्याकुर्वन् मधुसूदनमस्करी ॥ ३७ ॥

विषादस्यात्र कर्मत्वं तेन चागन्तुको मतः ।
तत्र श्रीचरणः स्पष्टं मूलं टीकामनुस्मरन् ॥ ३८ ॥

मूलेऽर्जुनविषादौ द्वौ कर्मात्र माधुसूदने ।
वाक्ये विषादमात्रस्येत्येवं वैषम्यमुक्तवान् ॥ ३९ ॥

तदग्रे मधुसूदन्या भावं व्यक्तमलीलिखत् ।
'विषीदन्तमिदं व्याक्यमुवाच मधुसूदनः' ॥ ४० ॥

द्वितीयाध्यायविवृतौ विक्षेपः समुपस्थितः ।
कश्चिन्मन्दमतिस्तब्धः खण्ड्यते मधुसूदनी ॥ ४१ ॥

नानूद्यते' हि सर्वत्र वृक्षावादमवीभषत् ।
तच्छ्रुत्वा व्यरमत् तस्मात् परतन्त्रविवेचनात् ॥ ४२ ॥

मुरारकावंशकुमारकल्पः सुधीरमेधाविगुणैरनल्पः ।
जैवातृकः श्रीलघुलालवीरस्तस्यानुरोधेन समार्पिपत्ताम् ।

अत्र विषये पाण्डित्यपूर्णं विवेचनं श्रीगुरुचरणानां द्वितीयाध्याय-
प्रथमश्लोकहिन्दीव्याख्याटिप्पणे द्रष्टव्यम् ।

विविध-विरुदावली-विराजमान-मानोन्नतानां तत्रभवतां
विद्वत्तल्लजानां महामहोपाध्यायपदवीभाजां

## श्रीमतां हरिहरकृपालुद्विवेदिमहोदयानां

जन्म-शताब्दी-शुभावसरे सादरं सश्रद्धश्च समर्पितोऽयं

## श्रद्धा-सुमनोऽञ्जलिः

श्रीधरवासुदेव सोहोनी, आई० सी० एस०,
( भू० उपकुलपतिः, कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयः )

( १ )

याऽम्बा लम्बपिचण्डकस्य जगदालम्बाऽम्बिकाऽखर्बिका,
यन्नेत्रारुणिम-प्रभापरिचिति-प्रीतः परेशस्स्वयम् ।
पद्मा यत्पतिभक्ति-प्रौढि-जनितां विद्वेषितामादधे,
सा पायात् परमेश्वरी हरिहर-ख्यातं यशो निर्मलम् ॥

( २ )

महामान्यो मेधाविषु च विपुलख्यातिमतिमान्,
हरी रम्यो लक्ष्म्या स च समभवत्तज्जठरतः ॥
समेषां शास्त्राणां सततमथनावाप्तमहिमा,
हरोऽसौ जाड्यानां जयतु बुधराकेशप्रतिमः ॥

( ३ )

द्विवेदिशब्दान्तक-नामधेयं न चाश्नुते सार्थकतां कदाचित् ।
षडङ्गयुक्ताखिलवेदवेत्तुर्द्विवेदिनामेति कथं प्रसिद्धिः ॥

( ४ )

मन्ये स विद्यां च तथाह्यविद्यां विवेद वेदप्रतिपादितां वै ।
ततो बुधास्तं सकलागमज्ञं द्विवेदिनं साधु वदन्ति सार्थम् ॥

( ५ )

हरिस्स वेदादिकपारदृश्वा संरक्षको वेदविदामुदारः ।
हरश्च लोके हरणाज्जनानामज्ञानदुःखस्य सदर्थकोऽभूत् ॥

( ६ )

कृपालुतां तस्य विदन्ति के नो समग्रजीवेषु निरन्तरा या ।
द्विवेदिताऽन्वर्थतया च तस्य क्रियान्वितं ज्ञानमतो हि जाता ॥

( ७ )

प्राचीनपद्धतितरौ फलराशयस्ते शोभां दधुर्बहु-वितान-विशेषपूर्वाम् ।
तेष्वाविर-स्ति रविरेव महामनीषी सर्वातिशायि-गुणधृग् बुधसेवनीयः ॥
तस्मादयं सकलप्राच्यकलाप्रसारे स्वीयां पुपोष सरणिं सरलां गुणाढ्याम् ।
वैशिष्ट्यमस्य विबुधाः सुधियश्च मेनुः येनास्य कीर्तिलतिका प्रविभाति नित्यम्॥

( ८ )

विश्वस्य स्रष्टा स विरञ्चिदेवो यत्सूनुतां सेवयितुं प्रपेदे ।
वाचस्पतिर्यस्य हि पौत्रभावं प्राप्तोऽभवन्नित्यमशेषदीक्षः ॥

( ९ )

यत्पादपद्मे शतशो बुधानां सन्मण्डली नित्यमुपस्थिताऽऽसीत् ।
तेषां बुधानां हि शताब्दवारः सौभाग्यदोऽयं तु चकास्तु शश्वत् ॥

( १० )

बृन्दारका यद्भवने निषण्णाः, मुरारका यत्पदमामनन्ति ।
विचारकाः शिष्यविशिष्टवर्गाः, प्रचारका देवगिरः स्वयं ते ॥

( ११ )

नीरञ्जनो रामयुतो हि येषां दासत्वमित्थं कलयाञ्चकार ।
तेषां बुधानां शतवार्षिकोऽयं वारो भवेद् भारतभावपूर्णः ॥

( १२ )

एकोऽपि चन्द्रस्तमसां निहन्ता न तारकाः कोटिशताङ्कयुक्ताः ।
एवं हि पुत्रेण यथार्थनाम्ना चैकेन तत्कीर्तिकरेण जातम् ॥

( १३ )

यत्पाण्डित्य-प्रखर-विभया भूषितोऽभूद विहारो,
हारो वा यो निखिल-जगतां विद्यया सोऽनया वा ।
जातो वंशे विपुल-वितते यः प्रयागाञ्चलस्थे,
ख्यातिं प्राप्तो निखिलभुवने सर्वतन्त्र-स्वतन्त्रः ॥

( १४ )

विधेर्विधानं बहुधा विलंघितं, विपश्चिताऽनेन निजेन प्रज्ञया ।
निरक्षरत्वं लिखितं विरञ्चिना कृता बुधास्तेऽपि सहस्रशो जनाः ॥

( १५ )

न कोऽपि शिष्यत्वमवाप्य वञ्चितोऽभवत् कदाप्यध्ययनाद्यथाश्रुतम् ।
जडोऽपि जाड्यं हि जहौ तदन्तिके, तमो यथा भानुकरप्रसारिते ॥

( १६ )

यद्भाले विधिना व्यलेखि जडता ते पण्डिताः कारिताः,
इत्याक्रोशवशात् विरञ्चिरभवत्तेषां तनूजः स्वयम् ।
शैवा ये शिवभक्तिपूजनपरा विष्णोर्मता विद्विषः,
ये वा वैष्णवतामुपेत्य सुधियः शैवं न चक्रुर्व्रतम् ॥

( १७ )

अन्योऽन्यं प्रति प्रेमभावजननात् सौहार्द-संवर्धनात्,
नामैषामभवत् तथा हरिहरो देवैक्य-संदर्शनात् ।
सर्वत्रैक्यविधानज्ञाननिपुणः सौभाग्यशोभाप्रदः,
विद्वन्मौलिमरीचिचर्चितयशाः श्रीशः कृपालुः सदा ॥

( १८ )

शैववैष्णव-विवाददूषिता भारतीयजनसंहतिर्यदा ।
एकता हि खलु तद्द्वयोः कृता नामतोऽथ निजकर्मणामुना ॥

( १९ )

विष्णुरेव हरतां गतोऽभवद् नामभेदमिह तं प्रचक्षते ।
सिद्धमेतदभिधानदर्शनात् सार्थकं हि खलु नाम चाभवत् ॥

( २० )

वासुदेवतनुजन्मनाऽमुना श्रीधरेण रचितोऽयमञ्जलिः ।
प्रीतये भवतु पुष्पमाल्यवद् विप्रवर्यचरणे समर्पितः ॥

●

# तद्वैशिष्ट्यम्

**मीमांसारत्नं पं० सुब्रह्मण्यशास्त्री**

( विभागाध्यक्षः, मीमांसा-धर्मशास्त्रयोः, काशी हिन्दूविश्वविद्यालयः, वाराणसी )

**सर्वविद्यालतोपघ्नपारिजातमहीरुहान् ।**
**पूज्यपादान्नमस्यामि सादरं सर्ववेदसः ॥**

सुविदितमेवमेतत् समेषां विद्वत्तल्लजानां यत् चराचरेऽस्मिन् वैरञ्चे प्रपञ्चे सुरभारती-समुपासकाः, भगवतः परमेशानस्य ज्ञानशक्त्यवतारभूताः प्रादुर्भवन्ति त्रिभुवनमुपकार-श्रेणिभिः प्रीणयन्तः कालमासाद्य कञ्चन तिरोभवन्ति चेति । तादृशीषु विभूतिषु अस्माकं प्रातःस्मरणीयचरिताः पूज्यपादा अपि, **तेषाम् वैदिके धर्मे ईश्वरे च निष्ठा, वाग्मिता, मुखरपाण्डित्यम्, वश्यवाक्त्वम्, कान् विपश्चिदपश्चिमान् न चमत्करोति,** यदि तेषां विषये यद्यत् उच्यते तत्सर्वमत्यन्तमल्पमेव, यथा—जगत्-प्रकाशकस्य भगवतः सहस्ररश्मेः सर्वलोकैकचक्षुषः पूजायाम् अल्पेन दीपेन कश्चन उपचारः शिष्टैराचर्यते । अतः द्वित्रैः शब्दैः तेषामाराधनमेव क्रियते, किम्बहुना, महा-पुरुषाणां चर्चया आत्मीयं वचनं पवित्रीकर्तुमीहते, यथाह तात्पर्याचार्यः—

**आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम् ।**
**रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति ॥**

( न्या० क० पृ० १ इति )

तैरुत्तमश्लोकैः समस्तमेव संस्कृतवाङ्मयमध्यापितम् । एषां शिष्यप्रशिष्याः कीर्तिपताकां विदिशो दिशः विद्योतयन्ति । तेषां महानुभावानां यथा व्याकरणादिशास्त्रे कूलङ्कषं पाण्डित्यम् अनितरसाधारणी प्रवचनशक्तिः, तथैव सर्वेष्वपि दर्शनेषु । **यानुद्दिश्य प्रावर्तिष्ट वचनमिदम् "अश्रुतो बुध्यते ग्रन्थ" इति** । तेषां तदा तदा उपदेश आसीत् उदयनाचार्यप्रणीतः कुसुमाञ्जलिः, भामतीनिबन्धः, खण्डनखण्डखाद्यम्, चित्सुखी, लघु-चन्द्रिकेत्यादीनां ग्रन्थानाम् अध्ययनम् परमावश्यकमिति । येन मूकोऽपि वाचालति प्रगल्भवाक् भवतीत्यर्थः । तैः वेदान्तशास्त्रमधिकृत्य विरचितो ग्रन्थः सुप्रसिद्ध एव । शास्त्रेषु दुर्ग्रहोप्यर्थः कविसूक्तिषु इति । वार्तिकसारस्य तेषां राष्ट्रभाषया अनुवादः सर्वान्

विस्मापयते, एवम् गूढार्थदीपिकायाः हिन्दीभाषया अनुवादः तैः कृतः, यत्र पूर्वोत्तरपक्षरूपेण दार्शनिकानां विवादग्रस्ताः विषया विवेचिताः। 'अर्थशास्त्रात्तु बलवत् धर्मशास्त्रमिति स्थितिः' इति योगीश्वरवचनस्य मिताक्षराबालभट्टीयटीकाद्वयेऽपि उक्तस्य शास्त्रार्थसमग्र्योऽपि समग्राः। "त्रिविधा कर्मचोदने"त्यत्र मीमांसकानां परमं सर्वस्वं विधितत्त्वं शाब्दीभावनाऽर्थीभावनयोः स्वरूपं विदुषामपि सुदुर्बोधम, यत्र शास्त्रमर्यादया अन्यूनातिरेकं समक्षेपि तेषामत्र उल्लेखेन लेखशरीरं नाहं वर्द्धयितुमिच्छामि।

## "शावरभाष्यस्य व्याख्यानम्"

षट्सु दर्शनेषु पूर्वमीमांसादर्शनं शब्दतोऽर्थतश्च बृहत्तमम्, तत्रापि जैमिनीयसूत्राणि। एषां सूत्राणामुपरि आचार्यशबरस्वामिना प्रसन्नपदगम्भीरं भाष्यमभाषि। तच्च भाष्यं परिमितपदमध्यापनकाले विदुषामध्येतृणाञ्च महते श्रमाय अकल्पिष्ट। तेषां सुखावगतये "**कल्पकालिकामना**" व्याख्यानं पूज्यपादैः प्रणीतम्, येन शाबरभाष्यस्य अध्यापने महत् सौविध्यमजनि। तस्मिन् व्याख्याने पूज्यपादैः यत्र प्रतिजज्ञे, यथा—

**श्रीमद्भट्टकुमारिलस्य चरणैर्व्यक्तीकृते शाबरे**
**भाष्येऽस्मिन्नपि नूतनार्थविषयव्याख्यास्पृहा चेत्तदा।**
**स्यादेवं तरुणारुणस्य किरणैरामूलमौलिस्फुटे**
**मेयेऽर्थेऽपि पुनः प्रदीपकलिकालोकाभिलाषः सताम्॥**

**मूलार्थाविगमोपपत्त्यभिमताक्षेपार्थसंयोजनैः,**
**अन्यूनानधिका निरुक्तनियतस्पष्टार्थवाग्विस्तरैः।**
**व्याख्यातानुभवत्यपेतविषयासङ्गो व्यथां यादृशीम्,**
**कस्मै केन स तादृशीं प्रकटये जानन्ति ये तत्कृतः॥**

**नेयं बालमुदे यतोऽतिमधुरैः ख्यातैश्च शब्दैः कथा**
**शक्या कर्तुमियन्तु किन्तु निगमन्यायापनीतार्थिनाम्।**
**धर्माधर्मविवेकिनां, कृतधियां लोकोत्तरश्रेयसे,**
**प्रारब्धेति क्वचित् पदैर्न कठिनैर्दुष्यान्मम व्याहृतिः॥ इति**

## तेषामध्यापने विशेषः—

छात्रेषु सुतनिर्विशेषं स्नेहः अध्यापनकाले यं ग्रन्थमध्यापयन्ति तद्ग्रन्थानुसारेण तत्रत्यं विषयजातं यथावद् उपपाद्य अनन्तरं तत्सम्बन्धिनो विचारस्य अन्यत्र शास्त्रेषु

ग्रन्थेषु तेषामपि संग्रहेण प्रबोधनम्, ग्रन्थयोजनं कथं कर्तव्यमित्यपि विशिष्टा रीतिरेषाम्।

अनेन प्रकारेण ग्रन्थान्तरविषयाणां योजनपाटवम् एतैः शिष्येषु उद्भाव्यते स्म। एवम् विषयप्रतिपादनावसरे प्राचीनग्रन्थेषु प्रतिपादनरीतिः कीदृशी, नवीनग्रन्थेषु कीदृशी इत्यपि बोधनेन शिष्याणाम् अनितरसाधारणव्युत्पत्तिसम्पादनकौशलम् इत्यादयो गुणाः। किम्बहुना, एतेषां सकाशे अध्ययनानन्तरमन्यत्र अध्ययनस्य इच्छैव नोदीयात इति नातिशयोक्तिः किन्तु स्वानुभूतिः। प्रत्यक्षानुमानोपमानशब्दखण्डेषु अप्रतिहता गतिरेषाम्। अतः एतेषाम् छात्राः यत्किमपि शास्त्रमध्यगीषत तेषां स्वकीये विषये असाधारणं पाण्डित्यं दर्शनान्तरप्रसिद्धानाञ्च विषयाणां साम्प्रदायिकसिद्धान्तपरिज्ञानमिति तेषु वैशिष्ट्यमावहति।

## शाब्दबोधविचारधोरणी

शाब्दबोधविषये शाब्दिकानां कीदृशं मतम् कीदृशं च तार्किकाणां कीदृशञ्च भाट्टमीमासकनाम् इति विवेचनापटवः इमे यथा प्रत्यक्षादिषु शिष्याणां व्युत्पत्तिम् आधिषत, तथैव शाब्दबोधेऽपि एतेषां बोधनशक्तिः। तदर्थमस्माकमध्ययनकाले महतानुग्रहेण भाट्टमीमांसकमतेन शाब्दबोधप्रकारः अस्मभ्यमुपदिष्टः, यस्य उल्लेखः भाट्टतन्त्ररहस्ये अस्माभिः कृतः तदेवाधस्तान्निर्दिश्यते, तथाहि—

श्रीमदाचार्यखण्डदेवैः प्रोक्ताः लिङ्घटितवाक्ये, निषेधवाक्ये, नातिरात्रे षोडशिनं गृह्णातीति वाक्ये च शाब्दबोधप्रकाराः लाघवेनानुगमरीत्या परिष्कृत्य अस्मद्गुरुचरणैः श्रीहरिहरकृपामलुहोदयैरस्मभ्यमुपदिष्टाः। तेऽत्र विदुषां प्रमोदाय छात्राणामुपकाराय च प्रकाश्यन्ते।

## विधिस्थले शाब्दबोधः

तथाहि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र लिङर्थः शाब्दीभावना लिङादिशब्दनिष्ठा, आर्थीभावना आख्यातवाच्या पुरुषनिष्ठा, तत्र शब्दपुरुषनिष्ठयोर्भावनयोर्व्यधिकरणत्वात् कथं शाब्दभावनाया आर्थीभावनायामन्वय इति चेत्?

उच्यते— स्वनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञानविशेषनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकायमत्र प्रवर्ततामित्याकारकासेच्छाविषयीभूतकृतिविषयत्वरूपहेतुनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजतनाकसम्बन्धावच्छिन्नावच्छेदकतानिरूपकसाध्यनिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानि-

रूपकाभावनिष्ठाभावीयविशेषणतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाधिकरणनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकवृत्तित्वनिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकेष्टसाधनत्वादिव्याप्यतादृशकृतिविषयत्ववानयमित्यकारकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकेष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वैतत्त्रितयनिष्ठविधेयताख्यविषयताविशेषावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपक- जातपुत्रः कृष्णकेशोऽग्नीनादधीत, वसन्ते ब्राह्मणोऽग्नीनादधीतेत्येवमादिवाक्यविहिताधानादिजनितादृष्टरूपयोग्यतानिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावछिन्नावच्छेदकतानिरूपकत्वविशिष्टयागो मे भूयात् इत्याकारकेच्छानिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकत्वविशिष्टयागं कृत्या साधयामीत्याकारकचिकीर्षानिष्ठजनकतासम्बन्धावच्छिन्नाऽवच्छेदकतानिरूपकत्वविशिष्टयागेन स्वर्गङ्कुर्यादित्याकारककृतिनिष्ठजन्यत्वीयस्वरूपसम्बन्धावच्छिन्नजन्यत्वनिष्ठावच्छेदकतानिरूपकाश्रयत्वनिष्ठासांसर्गिकविषयतानिरूपितत्वविशिष्टप्रजापतिर्यज्ञानसृजतेत्येवमाद्यर्थवादलक्षितप्राशस्त्यज्ञानजनितप्ररोचनारूपेतिकर्तव्यताविशिष्टतदीयसम्बन्धघटकतावत्पदार्थविषयकज्ञाननिष्ठप्रवर्तनाभाव्यप्रवृत्तिनिष्ठजन्यतानिरूपितजनकतारूपसम्बन्धज्ञानकरणतानिरूपकत्वविशिष्टस्वनिष्ठप्रकारतानिरूपितत्वविशिष्टप्रधानयागजन्यपरमापूर्वोत्पत्त्यपूर्वान्यतरवृत्तिशक्तिनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतसामान्यसम्बन्धबोधकप्रकरणपठितवाक्यविहितविजातीयव्यापारत्वतदाश्रयत्वान्यतरवत्त्वरूपेतिकर्त्तव्यतात्वावच्छिन्नेतिकर्त्तव्यताविशिष्टप्रयाजादिभिः प्रधानयागमुपकुर्यामित्याकारकत्वव्यवहितपूर्वकालवृत्तित्वविशिष्टप्रकरणपठिततत्तन्मन्त्रस्मारितद्रव्यदेवतादिरूपोद्भिच्चित्राज्यतत्प्रख्यतद्व्यपदेशान्यतमन्यायसिद्धनामावच्छिन्नधात्वर्थनिष्ठपदश्रुतिबोध्यप्रवृत्तिभाव्यस्वर्गत्वावच्छिन्नजन्यतानिरूपितजनकतारूपकरणत्वनिरूपकत्वविशिष्टप्रयोगविधिविषयीभूत—'समे दर्शपूर्णमासाभ्यां यजेते'त्येवमादिवाक्यविहितसमादिदेशनिष्ठाधिकरणतानिरूपकत्वविशिष्टसाङ्गप्रधानानुष्ठानापेक्षितदर्शादिकालनिष्ठाधिकरणतानिरूपकत्वविशिष्टकाम्यमानस्वर्गत्वावच्छिन्नोद्देश्यतानिरूपकत्वविशिष्टाख्यातैकवचनार्थैकत्वविशिष्टाक्षिप्तकर्तृसमवेता भावनेति भाट्टमीमांसकानां मतेन शाब्दबोधः इति।

न कलञ्जं भक्षयेदित्यत्र शाब्दबोधप्रकारश्चायम्।

न कलञ्जं भक्षयेदित्यत्र लिङा निवर्तनोच्यते, प्रवृत्त्यभावरूपा निवृत्तिराख्यातेनो-

च्यते, नञ्पदं तात्पर्यग्राहकम्, तत्र शब्द-पुरुषनिष्ठयोर्निवर्तनानिवृत्त्योर्व्यधिकरणत्वात् कथं निवर्तनायाः निवृत्तावन्वय इति चेत्? उच्यते— स्वनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकं ज्ञानविशेषनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपककलञ्जभक्षणादयं निवर्ततामित्याकारकाप्तेच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वरूपहेतुनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकानिष्ठसाधनत्वव्याप्यतादृशाभावप्रतियोगिकृतिविषयत्ववत् कलञ्जभक्षणात्मकभक्षनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकनिष्ठसाधनत्ववत् कलञ्जभक्षणमित्याकारकानुमितिनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकस्वनिरूपितकारणतावच्छेदकीभूतसम्बन्धनाशकालीनाभावनिष्ठानुयोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितविषसंसृष्टबाणहतमृगीयमांसं कलञ्जमिति वाक्यशेषावगताप्राशस्त्येतिकर्तव्यताविशिष्टतदीयसम्बन्धज्ञानकरणकत्वविशिष्टस्वनिष्ठप्रकारतानिरूपितजनकतारूपभक्षणात्मकधात्वर्थनिष्ठकरणतानिरूपकत्वविशिष्टजुगुप्साजनितपराङ्मुखत्वादिरूपव्यापारेतिकर्तव्यताविशिष्टस्वप्रतियोगिप्रत्यवायप्रयोजककलञ्जनिष्ठोद्देश्यतानिरूपितत्वविशिष्टविशेष्याश्रयीभूता निवृत्तिरिति शाब्दबोधः इति।

## नातिरात्रे षोडशिनं गृह्णातीत्यत्र शाब्दबोधः

नातिरात्रे षोडशिनं गृह्णातीत्यत्र केवलनिषेधापेक्षया वैलक्षण्यस्य विद्यमानत्वात् तत्प्रदर्शनाय शाब्दबोधप्रकारो लिख्यते, तत्र स्वविषयकज्ञानविशेषनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकषोडशिग्रहणादयम् निवर्ततामित्याकारकाप्तेच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वरूपहेतुनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकातिरात्रानुपकारकत्वव्याप्यतादृशकृतिविषयत्वरूपहेतुमत् षोडशिग्रहणमित्याकारकपरामर्शनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकातिरात्रानुपकारकत्वषोडशिग्रहणमित्याकारकानुमित्यादिनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकातिरात्रनामकयागजन्यपरमापूर्ववृत्तिशक्तिनिष्ठषोडशिग्रहणोपकार्यत्वाभावरूपहेतुनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकतदितराङ्गनिष्ठापकारकतानिरूपितापकार्यत्वरूपसाध्यव्याप्यषोडशिग्रहणोपकार्यत्वाभावरूपहेतुमदतिरात्रनामकयागजन्यपरमापूर्ववृत्तिशक्तिरित्याकारकपरामर्शनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकतदितराङ्गनिष्ठोपकारकतानिरूपितोपकार्य-

त्ववत् तादृशपरमापूर्वनिष्ठा शक्तिरित्याकारकानुमितिनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकपूर्वप्रयोगीयषोडशिग्रहणविशेष्यकेष्टसाधनत्वप्रकारकज्ञानधर्मिकप्रयोगान्तरावच्छिन्नाप्रामाण्यज्ञाननिष्ठप्रयोजकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकस्वनिरूपितकारणतावच्छेदकीभूतसम्बन्धनाशकालीनाभावनिष्ठानुयोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितस्वनिष्ठप्रकारतानिरूपितनिवृत्तिभाव्यवैगुण्याभावप्रयोजकाभावप्रतियोग्यनुष्ठानविषयत्वरूपधात्वर्थनिष्ठकरणतानिरूपकत्वविशिष्टोपेक्षाज्ञानजनितौदासीन्यरूपव्यापारेतिकर्तव्यताविशिष्टविहितप्रतिषिद्धत्वान्यथानुपपत्तिकल्पितवैगुण्याभावरूपफलनिष्ठोद्देश्यतानिरूपकत्वविशिष्टाख्यातैकवचनार्थैकत्वविशिष्टाक्षिप्तकर्तृसमवेता निवृत्तिरिति शाब्दबोधः—इति संक्षेपः।

अन्ते पूज्यपादानां स्मृतिपूर्वकं वैदिकमन्त्रार्थप्रतिपादनपूर्वकं लेखममुम् उपसंहरामि—मन्त्रार्थस्तु लोके यथा वृक्षस्योद्यानादौ स्थितस्य चम्पकपाटलकेतकीपुंनागादेः सम्पुष्पितस्य सम्यग्विकसितपुष्पोपेतस्य यो गन्धः सुरभिरस्ति सोऽयं दूराद्देशाद्वाति वायुना सहाऽऽगच्छति एवं पुण्यकर्मणां अध्ययनाध्यापनादिकर्मणां सत्कीर्तिः सुगन्धसमाना दूराद्वाति मनुष्यलोकात्स्वर्गे गच्छति, इति तथा च मन्त्रः 'यथा वृक्षस्यसम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाती'ति शम्।



# विरुदावली

श्रीरामपदार्थ शर्मा

( संस्कृत-शिक्षा-परिषत्सचिवः, पटना )

( १ )

दर्वीं वाचमुपासते हि बहवो वित्तैषणावेष्टिताः;
केचिद्धर्मधिया धरामरवराः स्वान्तःसुखायापरे।
वाक्चातुर्यमवाप्तुमेव कतिचिद्विज्ञास्तथा कुर्वते;
ये हेतूनवमान्य वाचि निरतास्ते केऽपि धन्या बुधाः॥

( २ )

आसाद्भूसुरभूषणो हरिहरो हारो विहारस्य यो,
वाग्देव्या वरपुत्रतामुपगतो निर्मुक्तस्वार्थः सुधीः।
तेनातानि नितान्ततीव्रप्रभया कीर्तिर्दिगन्तेऽखिले,
लेभे शास्त्रविचारचारुचरितो वैदुष्यशोभां पराम्॥

( ३ )

न मेधया मे हरिकीर्त्ति-गाथा शक्या विधातुं निखिलायुषाऽपि।
नास्ते करी क्वापि नखाग्रदेशे कस्यापि वश्यो वसुधाधिपस्य॥

( ४ )

तरेदयोगोलमपि स्वयं तज्जले निमग्नं च भवेत्पतत्रम्।
न किन्तु विष्णोरवतार-गीतिः संलेखितुं मादृशकेन शक्या॥

( ५ )

हरेर्हरस्यापि च वर्णनं को विधातुमीशो विबुधो भवेद्यः।
दयां कृपालोर्न हि प्राप पूर्णां तदंघ्रिपाथोज-निषेवणेन॥

( ६ )

प्रयाग-तीर्थे जगतो विधाता गतो विलीनां न ददर्श वाणीम्।
अदर्शनाच्चातितरां शुशोच ब्रह्मा कथं नास्ति सरस्वतीति॥

( ७ )

चिराद् विधुन्वन् स्वशिरो विधाता विकल्पमेकं कलयाञ्चकार।
सरस्वती चेन्नहि दर्शनीया भवेज्जनानां महती क्षतिस्सा॥

( ८ )

अतो भवेत् तत्प्रतिरूप एको नरो धरायामवतारभूतः ।
निधाय चैवं मनसि स्वयं वा द्विवेदिदेवो रचितो विधात्रा ॥

( ९ )

जहार जाड्यं मनुजव्रजस्य बभार प्रज्ञां प्रथितां विशालाम् ।
चकार चेतांसि चमत्कृतानि प्रकाण्डपाण्डित्य-प्रदर्शनेन ॥

( १० )

बभूव ब्रह्मापि हि यत्तनूजो वेदादिविज्ञानविशेषविज्ञः ।
हरेर्हरस्याप्यवतारभूतो विभूषितं येन हि भारतं वै ॥

( ११ )

निरक्षरोऽयं भवितेति धात्रा यद्भालपट्टे लिखितं पुरासीत् ।
स पण्डितस्तेन कृतो मनीषी विरञ्चिलेखःसमलोपि नूनम् ॥

( १२ )

हरेस्स्वरूपो हरविग्रहोऽसौ समागमद् भारत-भूमि-भागे ।
विधिश्चिरं खेदमवाप्य तस्मात्तत्सूनुतामेव स्वयं प्रपेदे ॥

( १३ )

गृहं त्रिदेवत्वनिवासरूपं सुरेशलोकायितमेव जातम् ।
धरासुराणामपि संगमेन तद्धाम नाकेन समं बभूव ॥

( १४ )

प्रान्तान्तरादेत्य विहारभूमौ हारायितोऽभूद् विदुषां समाजे ।
सोऽयं कृपालुर्जयतां जनानामात्यन्तिकाखेदकरो मनस्वी ॥

( १५ )

प्रतीपपाण्डित्य-प्रदर्शकानां सर्वावलेपापनये प्रवीणः ।
वीणाकरापूतमुखो मनीषी मान्यो महाबुद्धिमतामुदारः ॥

( १६ )

न वेत्ति कस्तस्य महामहत्त्वं महामहोपाधिविभूषितं यत् ।
येनाभवत्पाटलिपुत्रमेतत् विद्यावतां पूर्वपरीक्षणार्हम् ॥

( १७ )

स पाणिनिर्व्याकरणेऽपरोऽभूत् न्याये स्वयं गौतम एव साक्षात् ।
वेदान्तविद्यासु हरावतारो मीमांसको जैमिनिरेव चान्यः ॥

( १८ )

विद्याबले बुद्धिबलेऽद्वितीये न यस्य साम्यं क्वचिदप्यलम्भि ।
नासादि येनामरणं कदाचिदध्यापनाच्छान्तिरिति प्रसिद्धिः ॥

( १९ )

तदन्वये पण्डितमण्डितेऽभूदनेकसन्मानवरत्नराशिः ।
लेभे जनिं यत्र कृपालुनामा स कौस्तुभो भारतभूप्रदीपः ॥

( २० )

यदा यदा धर्मविनाशशङ्का तदा तदा विष्णुरवाततार ।
विचिन्त्य वेदादिविनाशहेतुं हरिस्स्वयं मानवविग्रहोऽभूत् ॥

( २१ )

ररक्ष वेदादिसमग्रशास्त्रं स पाठनेनाथ विचारणेन ।
अचीकरत्पाटलिपुत्रमेतद् धन्यं वसत्येति न को विवेद ॥

( २२ )

स्वयं मुरारिस्त्रिपुरान्तकारी ब्रह्मा सुतो वाक्पतिरेव पौत्रः ।
त्रिदेववासाच्च तदीयधाम धरागतं स्वर्गनिभं विवेदुः ॥

( २३ )

अनेक-विद्वन्मणिमौलिमण्डिता विखण्डिताशेषविपक्षिपण्डिता ।
बभूव काचिन्नगरी नवोत्थिता सुपूजिता पण्डितपूरिति श्रुता ॥

( २४ )

बभूव तस्यां सकलार्थविज्ञः स्वनामधन्यो बलभद्रनामा ।
मुरारिदेवाप्तगुणो महात्मा द्विवेदिवंशेऽप्यवतंसभूतः ॥

( २५ )

तदात्मजोऽसौ विबुधाग्रनेता कृपालुयुक्तो हरिपूर्वकोऽभूत् ।
विवादिमत्तेभसमूहभङ्गे योऽसावभूत्केसरिरूप एव ॥

( २६ )

तदस्य सूनुत्वमगाद् विधाता दृत्तान्तको ब्रह्मविशिष्टनामा ।
स सर्वशास्त्राम्बुधिमन्थनेऽभून्मन्थाचलो लोचनलोभनीयः ॥

( २७ )

स शैशवेऽभ्यस्तसमस्तविद्यस्तर्कामृताप्यायिततातपादः ।
विवाद-काले बहुधा बभाषे 'वावे'ति तन्नाम हि तस्य जातम् ॥

( २८ )

तर्कान्तराक्षेपनिरासकाले 'वा वा' हि बालो बहुधा बभाषे ।
मुदा ततस्तातपदारविन्दैरकारि 'वावे'ति हि तस्य नाम ॥

( २९ )

जगद् ध्रुवं वा जगदध्रुवं वा बालोऽपि वेदान्तविचारदक्षः ।
उवाच लोकानखिलान् समेतान् ततस्स 'वावे'ति बभूव ख्यातः ॥

( ३० )

महेश्वरस्योरिति नाम ख्यातमकारनामा हरिरेव सिद्धः ।
तयोश्च रक्षापर एष बालो 'वावो'ऽभवत् विष्णुमहेश्वरात्मा ॥

( ३१ )

बकारपूर्वो हि पितामहोऽभूत् स्वयं बकारादिमनोरमाख्यः ।
तदस्य नाम्ना शिवसूत्ररूपा प्रत्याहृतिर्ब्रह्मत्वविबोधिकाऽभूत् ॥

( ३२ )

इति रामपदार्थनिर्मितस्सुमनोऽञ्जलिरर्पितो मुदा ।
विदुषां चरणारविन्दयोः परमप्रीतिपरो विराजताम् ॥

( ३३ )

नहि वाग्विभवो न दक्षता न च काव्यकलासु चातुरी ।
सततं विदुषां सपर्यया यदलम्भि तदर्पितं मया ॥

( ३४ )

स्खलतिस्तु विशेषतो भवेन्मतिमान्द्यकृता नवा नवा ।
गुणिभिर्गुणग्राहकैस्तु सा शिशुप्रोक्तिरिवेह क्षम्यताम् ॥



# काशीपण्डितसभाप्रसङ्गः

श्रीबदरीनाथशुक्लः

( निदेशकः शोधविभागस्य, वाराणसेय-संस्कृत-विश्वविद्यालयः )

महामहोपाध्ययाः साम्प्रतं स्वसम्पर्केण स्वर्लोकशोभाकराः पण्डितप्रवराः श्रीहरिहरकृपालुद्विवेदमहोदयाः संस्कृतवाङ्मयस्य विश्वविश्रुता विशिष्टा विद्वांस आसन्। ते न्यायव्याकरणवेदान्तप्रभृतीनि बहूनि शास्त्राणि श्रमक्रमाभ्यां सर्वथा वशीकृत्य पण्डितजनस्पृहणीयेन पाठनपाटवेन प्रतिमानशून्येन विद्वत्सदोऽनुगुणेन वाग्वैभवेन च सुरभारत्याः क्रीडाभूमिं भारतीयप्रतिभाया अद्वितीयामुन्मेषस्थलीं च मिथिलामहीं सुचिरं चमत्कृत्य चिरकालतो विद्याकेन्द्रतया जगत्प्रसिद्धं पाटलिपुत्र-मात्मनः पावनेन निवासेन अध्यापनेन च पवित्रीकृत्य चरमे वयसि परमपुरुषार्थप्रसविनीं सान्नपूर्णस्य भगवतो विश्वनाथस्य राजधानीं वाराणसीं समाश्रयन्। तत्र च ज्ञानवापीतः पूर्वस्यां नेदीयसि नीलकण्ठनामनि नगरभागे वसन्तः प्रत्यहं प्रातः सायं च भगवत्या भागीरथ्या गङ्गायाः सर्वतारकं तीरं श्रयन्तस्तस्या नीरामृतं निपुणं पिबन्तः श्रेष्ठिवर्यस्य श्रीगौरीशङ्करगोयनकामहोदयस्यापरिहार्यप्रार्थनया[1] काशीस्थविद्वज्जनप्रार्थनया च काश्याः संस्कृतविद्यालयेषु तदानीं मूर्द्धन्ये गोयनकासंस्कृतमहाविद्यालये प्रधानाचार्यपदेन कतिचिद्वर्षाणि शतशो विदुषो विद्यार्थिनश्च विभिन्नानि संस्कृतशास्त्राणि पाठयन्तोऽनन्तर-मुक्तमहाविद्यालयं विमुच्य गृहागतां पण्डितमण्डलीं छात्रसंहतिं च विविधाभिः शास्त्रचर्चाभिः परितोषयन्तो गभीरं गीताज्ञानं सर्वजनसुलभीकर्तुकामनया राष्ट्रभाषया भगवद्गीतां मधुसूदनीप्रभृतीस्तद्व्याख्याश्च विवृण्वन्तो धार्मिकाध्यात्मिकजनतयाऽनुकर-णीयमादर्शजीवनं सानन्दमयापयन् ।

श्रीद्विवेदमहाभागा आत्मनो जीवनकालस्याद्वितीया विद्वांस आसन्नतो वाराणस्याः प्रायः सर्वाः पण्डितसभास्तदाध्यक्ष्ये सर्वे च शास्त्रार्थविचारास्तन्माध्यस्थ्ये तदानीं समा-योज्यन्त । एकदा काश्याः सुविख्यातेन ज्योतिर्विदा श्रीदाऊजीमहोदयेन कृतायोजनाया-

---

१. गोयनकामहोदयैर्नानाकारणोपन्यासपूर्वकं बहुशोऽभ्यर्थिताः श्रीगुरवो ममायं काशी-वासोऽर्चनाय नोपार्जनायेति विचिन्तयन्तः मनसि एवं समकल्पयन् यदितः प्राप्तद्रव्यं धर्मकार्ये शिवमन्दिरादिनिर्माणे व्ययीकरिष्यामि । तदनुसारेण स्वग्रामे शिवमन्दिरं दशसहस्रमुद्रा-भिर्निमितं वर्तते—सम्पादकः ।

सर्वतन्त्रस्वतन्त्रः महामहोपाध्यायः

## पण्डित श्रीहरिहरकृपालु द्विवेदी



प्रधानाचार्यः

श्रीरामनिरञ्जनदासमुरारकासंस्कृतमहाविद्यालयस्य ( पटना सिटी )

मेकस्थां पण्डितसभायां श्रीद्विवेदमहोदयानां साभापत्ये पण्डितानां सुमहान् शास्त्रार्थ-विचारः प्रावर्तत । तत्र विद्वद्भिः साभिनिवेशं विमृष्टो विषयो विपश्चितां मनोविनोदार्थमत्र संक्षेपत उपन्यस्यते ।

अनुगताकारगवादिप्रतीतिनियामकतया गवादिपदप्रवृत्तिनिमित्ततया च न्यायदर्शने गोत्वादिकं सामान्यस्वरूपमभ्युपगतम् । बौद्धदर्शने सामान्यरूपत्वं निरस्य तस्यातद्व्यावृत्त्यर्थकापोहरूपत्वमङ्गीकृतम् । किमत्र तत्त्वमिति केनचिद् विदुषा समुत्थापितः प्रश्नः । एतत्-प्रश्नाश्रयेण प्रवृत्तः प्रकाण्डपण्डितानां सुस्मरणीयो महान् शास्त्रार्थविचारोऽविच्छन्नधारो होरात्रयं प्राचलत् । तत्र गोत्वादेः सामान्यरूपतापक्षपरीक्षणानन्तरमतद्व्यावृत्तिरूपतापरी-क्षणप्रसङ्गे सञ्जातो विचारः । तत्र श्रीद्विवेदमहाभागानां पाण्डित्यपूर्णो योगश्च समुपस्थितः सम्पूर्णं मनीषिनिवहं नितरां चमत्कृतं नवज्ञानलाभेन समुदञ्चितं चाकरोत् विचारप्रकार स्तावदयमवर्त्तत ।

गोत्वं यद्यतद्व्यावृत्तिरूपं तदा तद्गर्भे तत्पदेन गोः गोत्वेन प्रवेशे गर्भगतं गोत्वं किमात्मकमिति प्रश्नस्य किमुत्तरम् ? यदि न्यायदर्शन इव सामान्यरूपं तत, तदा सा-मान्यपक्षोक्तदोषा एतत्पक्षेऽपि शिरोरूढाः । गर्भगतस्य गोत्वस्येव निर्विवक्षितगोत्व-स्यापि सामान्यरूपत्वसम्भवेन निरर्थकश्च तस्यापोहरूपताऽभ्युपगमः ।

यदि पुनर्गर्भगतं गोत्वमपि न सामान्यरूपं किन्त्वपोहरूपमेवेत्युच्येत तदा तद्गर्भ-गतस्य गोत्वस्यापि विषये तादृश एव प्रश्नोऽप्रतिहतप्रसरः, तदित्थं दुर्वचनतैव तस्य प्रसज्ज्येत ।

यद्यतद्व्यावृत्तिगर्भे तत्पदेन गोः प्रवेशो गोत्वव्यतिरिक्तेनैव केनचिद्रूपेण चिकीर्ष्येत, तदा तस्य सर्वगोसाधारणत्वे तेनैव गोत्वस्य सर्वकरणीयानां निर्वाहसम्भ-वेन निरर्थिकैव गर्भगततत्काया अतद्व्यावृत्तेः कल्पना । असर्वगोगतत्वे च तस्य तद्-घटिताया अतद्व्यावृत्तेरननुगततया दुरुपपादा तया गवादीनामनुगताकारा प्रतीतिः प्रवृत्तिश्च गवादिपदानाम् ।

इत्थमतद्व्यावृत्तेर्निर्वक्तुमशक्यतया परित्याज्य एव बौद्धैः गोत्वादेरपोहरूपतापक्षः ।

दुरुत्तरस्यास्य प्रश्नस्य पण्डितवर्यश्रीद्विवेदमहोदयानां समक्षं विद्वद्भिर्यत् समाधानं कृतं तत्तावदित्थम्—

गोत्वादिकमतद्व्यावृत्तिरूपमेव, तत्कुक्षौ तत्पदेन गवादेः प्रवेशो नाभिमतः। किन्तु गोगताऽतद्व्यावृत्तिः सर्वगोषु विद्यमानोऽगवि च क्वाप्यविद्यमानः कश्चित्तादृशोऽखण्डो धर्मो यत्र "अयं भावरूपोऽभावरूपो वा" 'क्षणिकः स्थिरो वा' इत्येवंविधा ऊहा उत्थानं न लभन्ते। अत एव 'अपहृता ऊहा यत्र' इति व्युत्पत्त्याऽतद्व्यावृत्त्यात्मकगोत्वादेरपोहशब्देन व्यपदेशो बौद्धग्रन्थेषु।

इत्थं भावत्वाभावत्व-क्षणिकत्वाक्षणिकत्वादि-चतुष्कोटिषु कतमयाऽपि कोट्याऽऽश्लेष्टुमयोग्यतयाऽपोहशब्दव्यवहारार्हाऽतद्व्यावृत्तिरेव गोत्वादिर्नतु न्यायानुमतसामान्यरूपता तस्येत्येष एवैतद्विषये बौद्धविचारनिष्कर्षो वर्णयितुं शक्यः।

तद्दिने विचारस्यानेनोपसंहारेणैव पण्डितसभा सधन्यवादं सप्रमोदं व्यसृज्यत। एवमनेकानि उदाहरणानि तत्पाण्डित्य प्रकर्षस्य। इत्येवं कतिपयैरेव शब्दैः श्रद्धाप्रसूनानि समर्पये।



# पद्यपुष्पाञ्जलिः



पद्मश्रीः पण्डितविष्णुकान्तझा
ज्यौतिषाचार्यः ( चौहट्टा, पटना )

परं शाब्दं शास्त्रं परम-गहनं दर्शनमपि,
यदीये जिह्वाग्रे सरलसरलं नृत्यमकरोत् ।
विपक्ष्युक्तिस्तोमप्रमथनप्रभूतोर्जितमहा,
महोपाध्यायोऽसौ 'हरिहरकृपालु'-र्विजयते॥

( २ )

गुणानामागारं नृपति-विबुधैर्वन्दितपदः,
प्रकृत्याऽऽकृत्या यो मुनिवरसमो दिव्यचरितः।
पटिष्ठो ग्रन्थानां विरचन-विधौ चोद्भटसुधीः
सुशास्त्रार्थे मान्यो 'हरिहरकृपालु'र्जयति सः॥

( ३ )

विहारे ख्याताऽऽसीत् समितिरिह सत्संस्कृत-कृते,
तदध्यक्षेणासौ विबुध-मिथिलेशेन महितः ।
विचारे शास्त्राणां प्रमुख-पदमापद् द्युतिवृतो
महोपाध्यायोऽस्मद्गुणि-जन-हृदानन्दजनकः ॥

( ४ )

विशिष्टो विद्याभी रघुपति-पदाम्भोजमधुपो
विपश्चिद्वृन्दाढ्यो महित-महिमा पुण्यवलितः ।
बुधालोकः स्तव्यो गुणगणनिधिः 'श्रीहरिहरः'
परं मन्येऽद्यासौ सुरपति-पुरेऽध्यापयति सत् ॥

( ५ )

सुतं योग्यं दृष्ट्वा विबुधजनकस्तुष्यति सदा,
पुराणीयं वाणी 'हरिहरकृपालौ' सुफलिता ।
तदीयः सत्सूनुः शुभ-गुणगणो 'ब्रह्मसहितः,
सदत्तोऽसौ नित्यं स्वपितुरिह कीर्तिं वितनुते ॥

( ६ )

मान्याय तस्मै हरिपूर्वकाय हराय पूज्याय कृपालवेऽद्य ।
सुपद्यपुष्पाञ्जलिमर्पयेऽहम्, श्रद्धान्वितः सन्नत-'विष्णुकान्तः' ॥

# श्रद्धाञ्जलिः

## श्रीविद्यानिवासमिश्रः

( आधुनिकभाषा-भाषाविज्ञानप्राध्यापकः, वाराणसेयसंस्कृतविश्वविद्यालयः )

धन्येयं भारतभूर्यत्र पश्चिमविद्याविद्युदुल्लसिते नभस्तले शीतलं स्वात्मज्योतिः पार्थिवदीपाकारेण पाण्डित्यपरम्परावर्त्तिमुखेनाद्यापि चकास्ति । भारतीयपाण्डित्य-परम्पराया एवात्र वैशिष्ट्यम् । आलोच्यमाने सति तत वैशिष्ट्यं त्रिविधं प्रस्फुरति तद्यथा —सत्यानुसन्धित्सायै परमा श्रद्धा, स्वातन्त्र्यरक्षणाय स्वावलम्बनव्रतपरायणता, अथायाचिव्रतपरायणता, विद्यायाः सविधि सङ्क्रमणेऽभिनिवेशश्चेति । न काऽपि संस्कृतिर्यत्र सत्यस्यैतावानाग्रहो दरीदृश्यते 'सत्यमेव परो धर्मः', 'सत्यमेव परं तपः', 'सत्येनोत्तभिता भूमिरादित्येन यथा द्यौः', 'सत्यमेव जयते नानृतं', 'सत्यं वै देवा अनृतं मनुष्याः' इत्यादिवचनैर्निरन्तरं महर्षिभिरुदबोधि सत्यस्य महिमा । तत् सत्यं सततं विवर्त्तमानं स्फाटिकखण्डमिव विविधं दृश्यमानं प्रतिक्षणं नवं नवं जायमानमपि प्राक्त-नस्मृतिमुद्भावयत् पुराणं सनातनं चास्माकं पूर्वजैराकल्पि । तस्य सत्यस्यान्वेषणं निर-न्तरं समीक्ष्यते, सत्यशोधकथा कदापि न परिसमाप्यते, 'वादे वादे जायते तत्त्वबोधः' अत एव भारतीयगुरवः शिष्यात्पराजयमिच्छन्तः स्वकीयं गौरवं मन्यन्तेस्म, प्रवर्त्तितो दीप इव प्रदीपात्' शिष्योऽपि सत्यान्वेषणेनैव ज्ञानयज्ञेनैव विद्यासम्प्रदानेनैव चानृण्यं समपीपदत् । ज्ञानसाधनाऽपि नितरां कठोरासीत् । कमपि जनमाश्रित्य कमपि जनं याचित्वा कमपि जनं तोषयित्वा वा ज्ञानसाधकस्य जीवनयात्रा प्रवर्त्तेतेति चेत् साधनाया वैफल्यमेवापतेत् तस्मात् साधकैर्यदयाचित्वा प्रापि तदेवालं मत्वा जीवन-मयापि, कस्यापि जनस्य प्रभावो विचारस्वातन्त्र्यं मापकार्षीदिति कृत्वा स्वरूपेनैव तैः सन्तोषः कृतः—

अकृत्वा परसन्तापमगत्वा खलमन्दिरम् ।
अनुल्लङ्घ्य सतां मार्गं यत्स्वल्पमपि तद् बहु ॥

इति महाभारतवचनं तैः प्रमाणीकृतम् । श्रूयन्ते विविधाः कथाः पण्डितानां विपन्नदशानां सरस्वत्यै लक्ष्म्या असूयाया अयाचितव्रतनिर्वहणे महतां क्लेशानां च । किन्तु सत्यमिदमेते साधका आर्थिकीं विपदं, विपदं न मन्यन्तेस्म लक्ष्म्याः कुटिलभ्रूभावं सस्मितमङ्गीकुर्वन्तिस्म, अयाचिव्रतक्लेशं प्रसादरूपेण गृह्णन्तिस्म । तस्मादेव ते सदर्पमीश्वरमप्याह्वयितुं समाशकन्—

**ऐश्वर्यमदमत्तोसि मामवज्ञाय तिष्ठसि ।**
**पुनर्बौद्धे समायाते मदधीना तव स्थितिः ॥**

( श्रीमदुदयनाचार्यस्य भगवन्तं जगन्नाथं प्रति वचनम् )

पण्डितप्रकाण्डा यशःशेषा शास्त्रार्थविजयिनो मान्याः हरिहरकृपालुद्विवेदिनो भारतीयपाण्डित्यपरम्परायाः प्रतिमानमासन् । सत्याभिनिविष्टचेतसा तेन निर्भयं पूजनीयादपि पूजनीयानां सत्यापलापिवचनानां खण्डनं क्रियते स्म, किन्तु खण्डने तेषां तात्पर्यं नासीदपितु सम्यग् गृहीतशास्त्रार्थमण्डन एव ते कृतप्रयत्ना आसन्निति तेषां शाबरभाष्यटीकैवैका प्रमाणयितुमलम् । लक्ष्मीं राज्याश्रयं च तृणं मन्यमानैस्तैः स्वाभिमानस्य क्षतिः क्षणमपि न सोढा । अस्मादपि विस्मयकरो गुणस्तेषां बालवत्सारल्यम् । प्रखरप्रतापा अपि ते वात्सल्यसंस्पर्शमात्रेण व्यगलन् । शास्त्रचर्चासु यथा तेषां समुत्साहः तथैवात्मजस्य वरयात्रासञ्जनेऽपि आध्यात्मचिन्तने यथा तेषां तन्मयीभावः सबहुमानं निष्ठाभावश्च, तथैव निष्कामतया गार्हस्थधर्मपालनेपि ।

अध्ययनाय स्वयं कृतश्रमाः स्वशिष्यानपि कठिने परिश्रमे न्ययूयुजन् । तस्मादेव तेषां शिष्याः पण्डितब्रह्मदत्तकमलाकान्तप्रभृतयः स्वे स्वे शास्त्रे निष्णाताः । शिष्यत्वेन ते सर्वथोदारभावेन दिग्दिगन्तरेभ्य आगतान् गृहस्थान् यतिनश्च जातिरक्तावस्थादिविवेचनमनादृत्य श्रद्धामेकामेव निकषं मन्यमानाः स्वकीयाश्रये गृह्णन्तिस्म पाठशालासु विश्वविद्यालयेषु मठेषु सर्वत्र तेभ्योऽधिगतविद्यासौरभा विद्वच्चञ्चरीका गुञ्जन्तस्तानेव स्तुवन्ति तेषामेव पन्थानमनुसरन्ति तैरेव सह शास्त्रप्रवचनावसरेषु स्वं योजयन्ति च । किमतोऽप्यधिकं जीवनसाफल्यं स्यात ?

श्रूयते किल तेषां शास्त्रतत्त्वमधिकृत्य पूज्यचरणैर्हरिहरानन्दस्वामिभिः करपात्राख्यैः सह कश्चिद् विवादः समजनि, किन्तु द्विवेदिमहाभागानां महाप्रयाणकाले करपात्रमहोदया साक्षाद् विश्वनाथ इव स्वयं तेषां परां गतिं साक्षीकुर्वन्त उपस्थिताः । उभयोर्हरिहरयोर्नेत्रद्वन्द्वे मिलिते । उभयोः संवादः स्वत एव पूर्वं स्थापित दृढीकृतः ।

**धन्योऽयं भारतं देशो यत्र शास्त्रार्थचिन्तनम् ।**
**धन्या वाराणसी चेयं ज्ञानकाशेति विश्रुता ॥**
**धन्यौ हरिहरौ चोभौ याभ्यां काशी प्रकाशिता ।**
**धन्यास्तेपि महाभागा ये तयोः स्नेहभाजनम् ॥**

★

# प्रणतिः

श्रीभवानीदत्तशर्मा, विद्यारत्नम्
( प्राध्यापकः, राजकीयसंस्कृतकालेजः, मुजफ्फरपुर )

दर्शनधनवनवितरणदक्षं, कृतनिजगुणगणगौरवरक्षम् ।
मीमांसार्णवतरणे सेतुं, वैयासिक्यवगाहनहेतुम् ॥

( २ )

शास्त्रचिन्तने धृतपरितोषं, ज्ञानरत्नपरिपूरितकोषम् ।
वटुवृन्दैः संसेवितचरणं, नित्यं कृतशुभकर्माचरणम् ॥

( ३ )

हृतसेवकजनचित्तध्वान्तं, वशीकृतेन्द्रियतनुवाक्स्वान्तम् ।
वादे विजितविपक्षिसमूहं, क्षणेन संहततर्कव्यूहम् ॥

( ४ )

सततामरगणचरणमिलिन्दं, नित्यं सेवितगुरुजनवृन्दम् ।
हरिहरयोरपि सरूपं शुद्धं, क्षमाधारणे जितवहुबुद्धम् ॥

( ५ )

श्रिया गिरा चालिङ्गितदेहं विद्यावित्तसमावृतगेहम् ।
सततं सफलीकृतसर्वेहं कमपि कृष्णमनिशं वन्देऽहम् ॥

( ६ )

पीनकलेवरमपि लघुकायं कृष्णवपुषमप्यनिशममायम् ।
वृतं सुधीभिः प्रातः सायं तपोविजितभवजननापायम् ॥

( ७ )

ग्रन्थाकरनिर्माणगरिष्ठं बुधजनविद्यावयोवरिष्ठम् ।
स्वानुरूपसुतजनितोत्कर्षं वशगकलत्रसमेधितहर्षम् ॥

( ८ )

वन्दे हरिहरयोरहमंशं, कीर्त्तिराशिपरिवर्धितवंशम् ।
वपुषागतमपि कीर्त्याजस्रं, राजमानमिव भवे सहस्रम् ॥

●

# अपूर्वः संस्कृतोन्नायकः

## आचार्यः प्रियव्रतशर्मा

( स्नातकोत्तरायुर्वेदसंस्थान-निदेशकः, काशी हिन्दूविश्वविद्यालयः । )

आधुनिककाले गीर्वाणवाणी-वाङ्मयस्य समुन्नायका ये मनीषिणः प्रादुरभवन् तेषु महामहोपाध्यायपण्डितहरिहरकृपालुद्विवेदिमहाभागानां पदं प्रतिष्ठास्पदम् । ते न केवलं संस्कृतानुरागिणां जनानां सुरभारतीसमाराधनतत्पराणां च च्छात्राणामेव श्रद्धाभाजनमासन् परं च तदानीन्तनाङ्गलीयसर्वकारस्यापि सम्मानपदवीमलङ्कृतवन्तः । निर्धनानां छात्राणां प्रभूतवित्तानां श्रेष्ठिप्रवराणां च युगपदेव निजव्यवहारसाम्येन सौहार्दार्जनमतीव दुःशकम् । परं च द्विवेदिमहोदयानां सर्वेऽपि जनाः समानभावेन स्नेहस्वारस्यं वात्सल्यं च लब्धवन्तः । सर्वशास्त्रेषु प्रौढिं परमामवाप्यापि तेषां व्यक्तित्वमतीव सरलं निश्छलं च शिशुसुलभमिव, हृदयं च निर्मलं निर्दयमृष्टदर्पणमिव प्रतिभाति स्म । अर्थकामौ न कदापि तेषां धर्ममोक्षसाधने विघ्नकरौ दृष्टौ । 'यावज्जीवमधीते विप्रः' इति सरणिमनुसृत्य जीवनपर्यन्तं शास्त्रानुशीलने सक्ताः विद्यादाने चानुरक्ताः अद्वितीयादर्शं दर्शितवन्तः । जीवनचर्यायां सात्त्विकतया लोकव्यवहारे च वत्सलतया महर्षितुल्यतां गताः । को नाम जन एतादृशीं यशःसमृद्धिमारुह्य जाड्यं नाधिरोहति, अहंकारं च नाङ्गीकरोति, परं चैभिरस्पृष्टः पुष्करपलाशवन्निर्लेपतां निस्संगतां चात्मीयामभिव्यनक्ति । हरिरिव श्रीसमन्वितोऽपि हर इव दिगम्बरः एष महानुभावः सर्वभूतेषु कृपालुतमः धर्ममोक्षपरो द्वावेव वेदौ समुपासमानः स्वाभिख्यां सार्थकयति । सर्वतन्त्रस्वतन्त्रः शास्त्राणां गहनविपिने मृगेन्द्र इव संचरणशीलः लीलयैवातिगुर्वीं विद्याधुरं धारयतिस्म ।

इदं तु केषांचिदेव गोचरं यत् द्विवेदिमहाभागाः शब्दविद्यया सार्धं मल्लविद्यायामपि परमनिपुणा आसन् । इत्थं च 'अग्रतश्चतुरो वेदाः पृष्ठतः सशरं धनुः' इति रीत्या शस्त्रे शास्त्रे च, शरीरे मनसि च समानं वैशारद्यं समाप्नुवन्तः ।

कृपालुतावशादेव वत्सवास्तव्योऽपि मगधराजधानीं पाटलिपुत्रं स्वगेहममन्यत । 'अङ्गीकृतं सुकृतिनः परिपालयन्ति' इति कृत्वा यावज्जीवनं तत्रैव मुरारकासंस्कृतमहाविद्यालयेऽध्यापनकर्मणि लीनाः स्वब्राह्मणत्वं चरितार्थितवन्तः । विहारप्रदेशे तदानीं बहवो विद्वांसः आसन् परं च पाटलिपुत्रस्थेऽस्मिन् महाविद्यालये सर्वस्मात् प्रदेशात्

अन्यप्रदेशादपि पिपठिषवश्छात्राः समागच्छन्ति स्म। तस्य हेतुः महामहोपाध्याय-महानुभावानामगाधपाण्डित्यं, शास्त्रसमीक्षणपटुत्वं, शब्दसामर्थ्यं, तर्कप्रवणत्वं, सर्वोपरि सौजन्यं चासीत्। तेषां परश्शता परस्सहस्राश्च शिष्याः देशेऽस्मिन् विभिन्नप्रदेशेषु विदेशेषु च तद्धवलयशोवासः प्रसारयन्ति। विहारप्रदेशे संस्कृतभाषायाः संस्कृतवाङ्म-यस्य च पुनरुज्जीवने परिबृंहणे द्विवेदिमहाभागानां ऐतिहासिको योग आसीत्। तदानीं विहारसंस्कृतसमितेस्तत्त्वावधाने संस्कृतपरीक्षाः संचाल्यन्ते स्म। समितेरन्य-तमकर्णधारत्वेन प्रख्यातोऽसौ महानुभावः। संस्कृतस्य हितानां संरक्षणे च निरन्तरत-त्परोऽसौ विनिद्रप्रहरी। यदा यदा हि संस्कृतोपरि विपत्तिरायाता तदा तदा "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्" ॥ इति श्रीमद्भगवद्गीतोक्तिं स्मारयता तेन तन्निराकरणार्थं महान् निजः सामूहिकश्च प्रयासो विहित इति विदितचरमेव सर्वेषाम्। नम्रोऽपि व्यवहारे सूर्यकान्तमणिरिवापरस्य तेजः सोढुमक्षमोऽसौ। मृगेऽन्द्र इव स्वाभिमाननिर्भरः न कदापि चाटुकारितामाचरत्, सेवा-धर्मे परमगहने सततव्यापृतोऽपि न कदाचन श्ववृत्तिमभजत। मनीषिणोऽस्य तेजस्विता संस्कृतपण्डितानामद्यतनानां कृते सदानुकरणीया।

अस्मिन् प्रकरणे एकः प्रसङ्गः स्मृतिपथमारोहति। विहारप्रान्ते तदा वैद्यरत्न-पण्डितव्रजविहारिचतुर्वेदिमहानुभावाः लब्धप्रतिष्ठाः प्रभावसंपन्नाश्च आसन्। तेषां प्रभावः न केवलमायुर्वेदक्षेत्रे परं चान्येषां संस्कृतपण्डितानां समूहेऽपि आसीत्। संस्कृ-तानुरागितया काले काले पण्डितसभाया अपि आयोजनं क्रियते स्म तत्र भवता। इत्थं विहारसंस्कृतसमितेः कार्यपद्धतौ अपि तस्य प्रभावः स्वभावत आसीत्। पण्डितानां विशालो वर्गः तन्नेतृत्वे परिचालितो दृश्यते स्म। पण्डितहरिहरकृपालुद्विवेदिमहोदयानां कश्चिद् विषयमधिकृत्य चतुर्वेदिमहोदयैः साकं मतभेदः संजातः। तेषां तेजोऽसहिष्णुता मुखरीभूता तदानीम्। ततस्ते पृथगेवात्मरीत्या संस्कृतोन्नत्यर्थं कार्याणि कुर्वन्ति स्म। तदैव चतुर्वेदिमहोदयानाम् आयुर्वेदक्षेत्रेऽपि काचिन्नीतिरभीप्सिताऽऽसीत्। चिरकालात् आयुर्वेदस्य अध्ययनाध्यापनं परीक्षासंचालनं च विहारसंस्कृतसमितेरन्तर्गतम् आसीत्। पाटलिपुत्रे राजकीयायुर्वेदमहाविद्यालयस्य स्थापनानन्तरं चतुर्वेदिमहोदयानां तदात्मजानां तदानीन्तनायुर्वेदीयविद्यालयाध्यक्षाणां च एकः प्रस्तावः प्रेषितः सर्वकारे यत् आयुर्वेदस्य पठनपाठनं परीक्षणं चायुर्वेदमहाविद्यालये एव भवेत् विहारसंस्कृतसमित्यन्तर्गतं मा भूदिति।

विहारप्रान्तस्य वैद्यसमाजोऽपि अनेन विक्षुब्धोऽभूत् । प्रायशः वैद्यानामिदमभिमतमासीत् यत् विहारसंस्कृतसमितेः आयुर्वेदस्य पार्थक्यात् तस्य ( आयुर्वेदस्य ) क्षेत्रं सीमितं संकीर्णं च भविष्यति वैद्यजनानामपि हितं व्यापादितं स्यात् । एतावता महान् विरोधोऽभूत् अस्य प्रस्तावस्य । अस्मत्तातचरणाः स्वर्गीयवैद्यभूषणपण्डित-श्रीरामावतारमिश्र-महोदयाः अस्य नेतृत्वपदेऽभिषिक्ता आसन् । चतुर्वेदिमहोदयानामभिन्नसखोऽपि स आयुर्वेदहितमुद्दिश्य विरोधपक्षमाश्रितवान् । एतत्कार्यसंपादनार्थं वैद्यसमाजस्य संघटनार्थं विहारप्रान्तीयायुर्वेदोपकारिणी महासभा संस्थापिता । तस्याः प्रथमाधिवेशनं मद्ग्रामस्थ-वेदरत्नविद्यालये सुसंपन्नम् । एतत्कार्ये महामहोपाध्यायहरिहरकृपालुद्विवेदिमहाभागैः महत्साहाय्यमनुष्ठितम् । तस्मिन्नेवावसरे दिग्वर्षदेशीयेन मया स्वगृहे तेषामातिथ्यसेवावसरः सद्दर्शनसौभाग्यं च लब्धम् । तत्स्मारं स्मारमद्यापि विशदीभवति चेतः, विकसति हृदयम् , पावनमनोहरं भवति मनः । न केवलं संस्कृतपण्डितैः परं चायुर्वेदज्ञैश्चिकित्सकैश्च द्विवेदिमहाभागानां कृतज्ञैर्भाव्यम् ।

अस्मत्पितुर्जीवनचरितसंपादनावसरे द्विवेदिमहाभागानां संस्मरणमवाप्तुं पत्रमेकं भीतेन सन्दिग्धेन च मनसा प्रेषितं तत्सन्निधौ । ते तदा काश्यां निवसन्ति स्म । पत्रमित्थमासीत्—

श्रीमद्वन्द्यपदारविन्दयुगले यान्तु प्रणामाः मम ,
अत्रत्यं कुशलं लिखामि भवतां गौरीशतः प्रार्थये ।
प्रत्यक्षेण विनापि कीर्तिनिकरं जानाति को न प्रभुम् ,
अज्ञातोऽहमतो भवन्तमधुना सर्वज्ञमेवाश्रये ॥ १ ॥
तातो मे भिषजां विभूषणमसौ रामावतारः सुधीः,
आयुर्वेदसभाप्रचारनिरतो विज्ञायते श्रीमता ।
पक्षाघातगदेन सोयऽमधुना मेहान्वितेनार्दितः,
दिङ्मासैर्नितरां क्रियाविरहितः शय्याशयो वर्तते ॥ २ ॥
तस्यैव प्रथितं विलिख्य चरितं काव्यं मया निर्मितम् ,
सर्गैः सप्तभिरेव देववचसा ग्रन्थः समाप्तिं गतः ।
तूर्णं मुद्रणकर्मणि सुकठिने यास्याम नूनं वयम् ,
शीघ्रं चापि प्रकाशितो हि भविता श्रीमच्छुभाशीर्भरैः ॥ ३ ॥

आशीर्वादमयेन लेखनिवहेन श्रीमतां केनचित्,
ग्रन्थोऽल्पज्ञविनिर्मितोऽपि सुतरामुत्कृष्टतां यास्यति ।
नम्रं तद्धि निवेद्यते चरणयोर्द्वन्द्वं कृपाप्लावितम्,
किंचित्संस्मरणं विलिख्य कृपया मत्सन्निधौ प्रेषितुम् ॥ ४ ॥

आशासेऽहमतीव यत् फलवती वर्त्तिष्यते प्रार्थना,
आस्माकीनमनोरथोऽपि पुरतस्ते पूर्णतां यास्यति ।
किं प्रागल्भ्ययुतेन वाक्यनिचयेनापि प्रभूतेन वा,
सन्तः सन्त्युपकारमग्नमनसोऽन्येषां प्रकृत्यैव यत् ॥ ५ ॥

रुग्णं तातं विहायाहं काशीमागन्तुमक्षमः ।
दर्शनेनापि भवतां वञ्चितोऽस्मि करोमि किम् ॥ ६ ॥

परं च सहजकृपालुतावशात् संस्मरणं त्वरितमेव प्रेषितं सान्त्वनया सार्धम् । सर्वे वयमधमर्णतां गतास्तत्सौहार्देन । तदात्मजानां विद्वद्वरेण्यानां ब्रह्मदत्तद्विवेदिमहानुभावानामपि वृत्तं यशश्च तत्पृष्ठानुधावि एव । महामहोपाध्यायमहोदयैर्निर्धारितेन पथा तदात्मजैरपि संस्कृतस्यायुर्वेदस्य चोन्नयनकार्यं विधीयत इति महत्सन्तोषस्थानम् । सर्वकारैरपि संस्कृतस्योन्नत्यर्थं सर्वत्र बहूनि कार्याणि विधीयन्ते, अनेके विद्यालयाः, महाविद्यालयाश्च सुसंपन्नाः स्थापिताः संचालिताश्च । आशास्महे, एतैः कार्यैः द्विवेदिमहोदयानामभिलाषोंऽशेन पूर्त्तिं यास्यति । तेषां इदमेव सत्यमभिनन्दनं यत् सर्वे वयं संस्कृतभाषायाः संस्कृतवाङ्मयस्य चोन्नत्यर्थं सततप्रयत्नशीला भवेम तद्धितानां च संरक्षणे सतर्काः स्याम इति । अन्ते नतेन शिरसा तत्स्मृतौ श्रद्धाञ्जलिमर्पयामः ।

हरिरिव चरणाब्जे यो रमाया निवासः,
हर इव दुरितानां यो हि सर्वापहारः ।
भयकृदपि विपक्षे शिष्यवर्गे कृपालुः,
स जयति बुधमध्ये कोऽपि दीप्तो द्विवेदी ॥

•

# वन्दनाञ्जलिः

श्रीयुक्त उपेन्द्रनाथमिश्रः 'मञ्जुलः'

( काव्यतीर्थ, साहित्यभूषणम् , सीतामढ़ी । )

( आर्यावृत्तम् )

'विबुधार्चित'-चरणाब्जं, 'द्विजराज'-प्रविराजितं 'गुणातीतम्' ।
विश्रुतसहज'कृपालुं', हरिहरमूर्त्तिं गुरुं वन्दे ॥

( २ )

तेजोभिः स्वैर्दीप्तं, 'शक्त्या परया' सदा समाश्लिष्टम् ।
'भूति-विभूषितममलं, हरिहरमूर्त्तिं गुरुं वन्दे ॥

( ३ )

'रामानन्यमुदारं, 'ब्रह्माऽपररूप'मुत्तमश्लोकम् ।
'देवधुनीपद'मघहरं, हरिहरमूर्त्तिं गुरुं वन्दे ॥

( ४ )

'नागेश-विग्रहरुचिं', 'दर्शन'दूरीकृतान्तर-ध्वान्तम् ।
'निगमागमपारज्ञं' हरिहरमूर्त्तिं गुरुं वन्दे ॥

( ५ )

'नर्तितमतीन्द्रचक्रम्', लोकोत्तरमहिम-लीलया निजया ।
'कामदमुज्ज्वलकीर्त्तिं', हरिहरमूर्त्तिं गुरुं वन्दे ॥

( ६ )

'विविधोपाधि'विभातं, 'ज्ञानाधिष्ठं' 'निरञ्जनाऽख्यातम्' ।
मण्डन-खण्डन-विदितं, हरिहर-मूर्त्तिं गुरुं वन्दे ॥

( ७ )

'दीनोद्धरण-व्रतिनं' धर्मत्राणार्थमुद्यतं सततम् ।
'मञ्जुलमति'महनीयं, 'हरिहर'-मूर्त्तिं गुरुं वन्दे ॥

•

# किञ्चित्स्मरणम्

## पण्डितपट्टाभिरामशास्त्री

( साहित्यविभागाध्यक्षः, वाराणसेयसंस्कृतविश्वविद्यालयः )

पूज्यगुरुचरणानां महामहोपाध्यायश्रीहरिहरकृपालुमहोदयानां मयि सुमहद्वात्सल्यमभवत् । एकदा ते वाराणस्यां म० म० श्रीप्रभुदत्तगौडमहोदयानामावासे पण्डितसभां समायोजयन् । तत्र मत्पूज्यचरणानपि म० म० चिन्नस्वामिपादानामन्त्रन्त । ते च कार्यान्तरव्यापृतास्सभायामुपस्थातुमशक्नुवाना अन्तेवसन्तं मां न्ययूयुजन् । अहं तदानीमाचार्यश्रेण्यामधीयान आसम् । सभास्थलमवाप्य कुहचित्कोण उपाविशम् । विद्वत्तल्लजानां वाराणास्या अनुरूपः शास्त्रार्थो महताऽडम्बरेण समजनि । शास्त्रार्थविचारान्ते सविशेषं पण्डितानपूपुजन् । स्वरचितं शाबरभाष्यतर्कपादव्याख्यारूपं ग्रन्थञ्च विद्वद्भ्यः प्रादुः । अहञ्च ससाध्वसं पूजास्थानमवाप्यातिष्ठम् । म० म० श्रीविद्याधरगौडमहेच्छा मत्परिचयं श्रीकृपालुभ्यः प्रदाय किं शास्त्रिचरणा न समागताः ? उपविश इत्यजिज्ञपन् । मम चासीन्महान् सङ्कोच उपवेष्टुम्, स्थित एवभावम् । मदीयं भावमालक्ष्य त्वं किं पठसि, किं वापठः ? इत्यपृच्छन् । अहञ्चाब्रवमिदमिदमपठम्, इदञ्च पठामीति । शाबरस्य तृतीयाध्यायन्तो भागस्त्वयाधीतः, इदं तर्कपादस्य व्याख्यारूपं पुस्तकं तदिदं पश्येत्याचचक्षिरे । अहमपि पुस्तकं परिगृह्य पृष्ठानि परिवृत्यापश्यम्, जोषञ्चासम् । किं तूष्णीमसि ? ग्रन्थः कथमस्तीति ब्रूहि ? इत्यवदन् । भीतभीतोऽहमवदम्—नवाधिकशततमे पृष्ठे 'न च विदुषामुपदेशो नावकल्पते उपदिष्टवन्तश्च मन्वादयः' इति भाष्यपङ्क्तिरत्र दृश्यते, किन्त्वहं 'नन्वविदुषामुपदेशो नावकल्पते, उपदिष्टवन्तश्च मन्वादयः' इति गुरुचरणैः पङ्क्तिं ग्राहितः । तदत्र किमुचितमिति विचारयन्नस्मीत्यकथयम् । पुस्तकं परिगृह्य सन्दर्भञ्च क्षणं परिचिन्त्य बुद्धिमानयम्, दीर्घैकदृष्टिरयम् इति श्रीगौडमहोदयेभ्यः कथयित्वा वात्सल्यपूरपरिपूरितदृशो मां समाकृष्यासने समुपावेशयन् । प्रथमं मत्पूज्यपादेभ्यस्सभादक्षिणां पुस्तकञ्च प्रदाय विद्यार्थिनेऽपि मह्यं दक्षिणां पुस्तकं च प्रायच्छन्, आशिषा च मां समपूरयन् ।

त्रयस्त्रिंशदुत्तरैकोनविंशतितम ईसवीये १९३३ वत्सरे जूनमासस्य द्वाविंशे दिने 'पटना' पाटलिपुत्रनगरे साक्षात्कारायाहमगच्छम् । मुजफ्फरनगरस्थराजकीयसंस्कृतमहाविद्यालयाय मीमांसाध्यापकपदनिर्वाचनाय समितिस्समायोजिताऽऽसीत् । तत्पदस्य कृतेऽहमपि प्रार्थी कश्चन । मम सर्वथाऽपरिचितं नगरं तत् । तस्मिन्नेव नगरे

एते निवसन्तीति नाहमज्ञासिषम्। धूमशकटावरोधस्थानात् पृष्ट्वा पृष्ट्वा कथमपि भागीरथीतटमवाप्य प्रातःकृत्यं स्नानसन्ध्यावन्दनादिकं निर्वर्त्य पृथुकान् दधिचापणतस्समानीय प्रातरशनं परिसमाप्य प्रायः द्वादशवादनावसरे साक्षात्कारसमित्युद्देशमन्विष्य तत्प्राङ्गणे वस्त्रमास्तीर्य ग्रन्थिञ्चोपधानस्थाने परिकल्प्याशायि। चेन्नपुरीतः ( मद्रास् ) दिनद्वयं निद्रयाहारेण च विहीनो नितरां श्रान्तो गाढया निद्रादेव्याऽभिभूतोऽभवम्। त्रिवादनतः साक्षात्कारस्य समयः। यदाहं तत्स्थानमवापम् तदा तत्र काकोऽपि नासीत्। त्रिवादनसमये कश्चन भृत्यो मन्नाम उच्चैस्तरां भूयो भूयोऽकीर्तयत्। कथमहं तमाक्रोशं शृणुयाम्। सुषुप्तावस्थायां खल्वहमस्मि। कोऽप्यत्र शेत इति विज्ञाय मां स प्राबोधयत् अहञ्चोत्थाय बभ्रुकञ्चुकधारिणं सोष्णीषं तं विलोक्य कोऽपि राजपुरुष इत्यवबुध्य किमर्थं मां प्राबोधयः ? इत्यपृच्छम्। किं नामासि त्वम् ? कच्चिद्भवान् पट्टाभिरामशास्त्री ? इति पृष्ट्वा मां तथाविधनामानमवगत्य साक्षात्काराय त्वामधिकारिणः प्रतीक्षन्ते, सत्वरं याहीत्यचूचुदत्। अहञ्च ग्रन्थिम् आस्तीर्णञ्च वस्त्रमादाय यावत्समितेरपवरकं प्रविशामि तावत्सभानायकं स्थूलमतिगभीरं वेत्रासने निषण्णं नेत्राभ्यां कोपभावमवद्योतयन्तमपश्यम्, पार्श्वे च वेत्रासनेषु निषण्णान् शान्तिमूर्तीः मन्दहासेन विकचवदनान् म० म० बालकृष्णमिश्रान् म० म० हरिहरकृपालुद्विवेदिनोऽन्यांश्च त्रीन् केनापि भावेन विधुरान् उदासीनानन्वभवम्। सभानायकः क्रोधेन मां किमिति विलम्बेन समागच्छसि इत्यध्यक्षैप्सीत। मामुपविश इत्यपि स महात्मा नावोचत् मिश्रमहोदयान् द्विवेदिनश्च यदयं शलाकापरीक्षया परीक्षितव्य इत्यभिधाय पुस्तकालयतस्समानीतेषु समेषु मीमांसाग्रन्थेषु पार्श्वे समासादितेषु, कायेन महान्तं ग्रन्थं यत्नेनान्विष्य निर्णयसागरमुद्रणालये प्रकाशितं शास्त्रदीपिकाग्रन्थं समूहतस्समाकृष्य कृपालुमहोदयेभ्यः प्रादात्। तेऽपि किञ्चिद्विहस्य पुस्तकं परिगृह्य मामुपविश इति कथयन्तः पुस्तकमुद्घाट्य 'इतस्समारब्धो भागः पाठ्यताम्' इति पुस्तकं ददुः। अहं कथं भवत आचार्यान् पाठयितुं शक्नोमि, विषयविवरणं करोमीति पुस्तकं परिगृह्य तृतीयचतुर्थनवमं जञ्जभ्यमानाधिकरणं तदित्यवधार्य पुस्तकं प्रबध्य यावन्निक्षिपामि तावत्सभानायको मस्तके पर्वतः पतित इव उच्चैराक्रोशत्। कथमनेन पुस्तकं प्रबद्धं प्रबद्धमिति, अहञ्च श्रान्तः निद्राकलुषितो बुभुक्षितश्चासम्। नाहं जानामिस्म यच्छलाकापरीक्षायां पुस्तकप्रबन्धनं न कर्तव्यमिति। किञ्चिद्वेगेनाकथयम्-यदत्र जञ्जभ्यमानाधिकरणं समागतम्, विनैव पुस्तकेन तद्विवरणं कर्तुं शक्नोमि, कि-

मिति महाभागस्यायं कोप इति । स मदीयं संस्कृतकथनं नाबुध्यत, हिन्दीभाषयापृच्छत् किमयं ब्रवीतीति । श्रीकृपालुमहोदयास्तं प्रत्यबोधयन्— यत्पुस्तकोद्घाटनेन यत्स्थलमागतं तज्जञ्जभ्यमानाधिकरणमेव, विनैव पुस्तकेन विषयं विवेचयितुं शक्नोमीति वदति, वदतु तपस्वीति । अहमपि अधिकरणस्वरूपं सुविशदं न्यरूपयम् । पुनरपि सभानायकेन नियुक्ताः श्रीकृपालवः तदेव पुस्तकं समुद्घाट्य, पुस्तकं न प्रबद्धव्यम्, उद्घाट्यैव विषयं विवेचय इत्यादिदिशुः । तत्र कर्त्रधिकरणमासीत् । तच्च मया सुविवृतम् । मध्ये मध्ये केचनावान्तरप्रश्ना आसन् येषाञ्चोत्तरं यथाशक्त्यकरवम् । पुनः श्रीमिश्रमहोदयास्सभानायकेन नियुक्ताः काँश्चन प्रश्नानकुर्वन् । पण्डितोत्तमानां समक्षं कोऽहं तपस्वी यथायथं प्रश्नान् समाधातुम्, यथाशक्ति पदार्थान् न्यरूपयम् । सभा समाप्ता। बहिरागत्य शकटावरोधस्थानं प्राप्य वाराणसीं प्रति कदा शकटं गमिष्यतीति निश्चेतुं व्यचिन्तयम् । अस्मिन्नेव व्यतिकरे कश्चन भृत्यस्समागत्य मामवोचत् —श्रीकृपालुमहोदयाः कथयन्ति यत्त्वामत्रैवावस्थातुम्, ते समागत्य भवन्तं द्रक्ष्यन्तीति । अपरः कश्चन साक्षात्काराय प्रार्थी आसीत्, तं परीक्ष्य श्रीकृपालवः श्रीमिश्रमहोदयाश्च बहिरागत्य, श्रीमिश्रमहोदयाः मन्मस्तके हस्तं निक्षिप्य विहस्याशिषा वर्द्धयामासुः, श्रीद्विवेदिन मया सहायाहि, त्वं बुभुक्षितः प्रतिभासि, श्रान्तश्च परिलक्ष्यसे इत्यभिधाय मां करे गृहीत्वा स्वाश्वशकटमारोप्य गृहान्निन्युः । अधिकरणानि तव सत्यं वाचोविधेयानि सन्ति, विषयपरिज्ञानञ्च ते नूनं प्रशंसार्हम् । स सभानायकस्तथाविधस्वभावः, एवमेव स सर्वदाचरति, मनसि त्वया नान्यथा कर्तव्यम् । तव नियोगोऽत्र सञ्जातः । नियुक्तिपत्रसमागमानन्तरमेव त्वमत्रागत्य स्वीयं कार्यं परिचालय इत्यादि प्रेम्णा वदन्तः स्वगृहं नीत्वा पाकाय सामग्रीजातं दुग्धं दधि रसालफलानि च प्रदाय भोजनानन्तरमहं त्वां पश्यामीति पाके मां नियोज्यागच्छन् । कृसरान्नं सम्पाद्य दध्ना तत्सम्मेल्याकण्ठमभक्षयम्, रसालफलानि च स्वादून्यासाद्य दुग्धञ्चापिबम् । तेऽपि नववादनावसरे समागत्य मद्गुरुचरणानां कुशलं पृष्ट्वा त्वं शेष्व, चतुर्वादनावसरे तव शकटमस्ति वाराणसीं गन्तुम् । कोऽपि त्वां प्रबोधयिष्यति इत्यभिधाय विश्रामार्थं गतवन्तः । सत्यं तेषां 'कृपालवः' इत्यन्वर्थं नाम । तेषां छात्रेषु वात्सल्यं, वैदुष्याय स्पृहा, पण्डितेष्वादरभावः, वाचि वैचक्षण्यम्, हृदयङ्गमा विनेयानामध्यापनशैली, शास्त्रेषु गम्भीरं वैदुष्यञ्चेत्यादिकमनुभूयाहं निरचिनवम् यदिमे विद्वदवतंसानां राजान इति । यदा ते 'गोयनका' संस्कृतमहाविद्यालयस्या-

ध्यक्ष्यमावहन्त आसन् तदा किञ्चिन्ममापि सौभाग्यमासीत् यत्तेभ्यः किञ्चिदध्येतुम् ।

तदवसरे जयपुरराजकीयसंकृतमहाविद्यालवाध्यक्षपदायं प्रार्थनापत्रसम्प्रेणाय गुरुवरानहमयाचिषम्—यदाशीःपत्रं प्रदाय मामनुगृह्णन्त्विवति । तैर्दत्तं पत्रमत्र तथैव प्रकाशयितुमिच्छामि—

"पण्डितवरं श्रीपट्टाभिरामशास्त्रिणं न्यायमीमांसासाहित्याचार्यं पञ्चदशवर्षेभ्यः सुपरिचिनोमि । वाराणस्यामयमाबाल्याद् गुरुगृहे न्युष्य सुपरिश्रम्य परम्परामात्रसुलभानि मीमांसान्यायवेदान्तादिशास्त्राणि सम्यगधीत्य तत्र तलस्पर्शिपाण्डित्यप्रकर्षस्सम्प्रति काशीहिन्दूविश्वविद्यालये प्रधानमीमांसाध्यापकपदमधिरूढः नैकविधान् छात्रानध्यापयन् वाराणसेयविदुषां मनांसि जयन्नास्ते । बहुषु समयेष्वहमन्वभवमस्य पण्डितवरस्य पाण्डित्यप्रकर्षम्, येनाहं निश्चिनोमि स्वल्प एव वयसि वाराणसेयविद्वज्जनमनोरञ्जकं वैदुष्यमावहन्नेतादृशः पण्डितो विरल एवेति । अतिदुरूहानपि दार्शनिकान् ग्रन्थान् सरलया हृदयङ्गमया च रीत्याऽध्यापयन्नयं नूनं विदुषां चेतश्चमत्करोति । साकमनेन दार्शनिकवैदुष्यप्रकर्षेण साहित्ये पाण्डित्यमेनं सुशोभयति । विद्वज्जनपूर्णासु सभासु भाषणमाधुर्यं लेखनपाटवञ्च बिभ्राणो विदुषाञ्चेतस्तदा तदा आप्याययति । किञ्चायं क्रमशस्सर्वा अपि पाण्डित्यसामग्रीस्सुसम्पाद्य नैकविधान् ग्रन्थान् मीमांसासाहित्य-धर्मशास्त्रीयान् सटिप्पणान् मुद्रापयन् तस्यापि कलायां प्रावीण्यं बिभर्ति । अतश्चाहमेनं सच्चरित्रं विद्याव्यसनिनं विनीतं मधुरव्यवहारिणं विद्वद्वरम् आशीःपरम्पराभिरभिपूरयन् आशासे इतोऽप्यधिकं विज्ञानराशिं सम्पादयन् सर्वविधानां कल्याणानां श्रेयसाञ्च भाजनं चिरायुश्चायं भवेदिति ।"

**हरिहरकृपालुद्विवेदी**, विद्यालयाध्यक्षः
( श्री जो० म० गोयनका सं० महाविद्यालय,
ललिताघाट, काशी, २७-३-४३ )

ज्ञानलवदुर्विदग्धस्यापि मम जीवने यो यस्समुत्कर्षः प्राप्तः स स सर्वोऽपि गुरुवराणामाशीःपरम्परयैवेति तानहं भूयो भूयस्स्मरन् तेभ्यः प्रमाणकुसुमाञ्जलिं समर्पये ।



# इतिवृत्तम्

श्रीवासुदेवमिश्रः

( भू० पू० प्रधानाध्यापकः, संस्कृतोच्चविद्यालयः, बरौनी, मुङ्गेर । )

विहारोत्कलप्रान्तीया समितिर्निरधारयत् ।
वेदान्तविषयं लेखं लिखन्तु कृतबुद्धयः ॥ १ ॥
येषां लेखस्य प्राथम्यम् ते पुरस्कारभागिनः ।
राजकीयामिमामाज्ञां श्रुत्वा योग्यसुधीजनाः ॥ २ ॥
स्वस्वलेखं लिखित्वा च प्रैषयन् राजमन्दिरम् ।
परीक्षकाश्च तान् सर्वान् प्रसमीक्ष्य यथायथम् ॥ ३ ॥
अङ्कान् यथोचितं दत्त्वा प्रापयन् समितेः पतिम् ।
द्वारवङ्गनरेशश्रीरामेश्वर सिंह सद्बुधम् ॥ ४ ॥
दृष्ट्वा श्रुत्वा च लेखाङ्कौ मिथिलेशः समित्पतिः ।
उवाच सदसो मध्ये द्विवेदी प्रथमोऽभवत् ॥ ५ ॥
श्रुत्वैतत् पण्डिताः शीघ्रं मिथिलेशं गतास्ततः ।
द्विवेदिनश्च प्राथम्यं देशस्यास्य विगर्हणम् ॥ ६ ॥
अस्माकं पण्डितानान्तु संशीतिस्तत्र वर्तते ।
द्विवेदिनश्च पद्यानि प्राचीनानि नवानि वा ॥ ७ ॥
श्रावयेयुः सभामध्ये तदा तन्निश्चयो भवेत् ।
मिथिलेशाज्ञया प्रातः श्रावितं तद् द्विवेदिना ॥ ८ ॥
तत्र शङ्कासमाधानैः रक्षितं स्वात्मगौरवम् ।
द्विवेदिना कृतं पद्यं प्राथम्यं सर्वसम्मतम् ॥ ९ ॥
अतः परं पुनर्विज्ञाः शास्त्रार्थं कर्तुमुद्यताः ।
शास्त्रार्थेन विना कोऽपि पुरस्कारं न लप्स्यते ॥ १० ॥
समित्पतेः समक्षं ते प्रास्तुवन् मुहुरादरात् ।
तेऽपि तेषां वचो मत्वा शास्त्रार्थानुमतिं ददुः ॥ ११ ॥
न्याये व्याकरणे चैव शास्त्रार्थे विजयोऽभवत् ।
पुरस्कारं ततस्तस्मै प्रादात् स मिथिलापतिः ॥ १२ ॥



# स्मृतिवल्लिका

श्रीजटाशङ्करझा, आचार्यः
( राजकीयसंस्कृतमहाविद्यालयः, भागलपुर । )

गङ्गायमुनाऽन्तर्लीनसरस्वतीत्रिवेणीकतया तीर्थराजः प्रयागो जनमनोभिश्चिरचुम्बितां गङ्गा-यमुनयोरिव सरस्वत्या अपि कतमस्यापि स्वरूपस्य दिदृक्षां सफलयितुं मानववपुष्मतीं तां हरिहरकृपालुरूपेण गते शततमे हायने पण्डितपुरे ग्रामे स्वाभ्यर्णमवतीर्णामविन्दत।

गच्छता कालेन कुलाचारपरम्परया समुपनीता इमेऽचिरेण निखिलशास्त्रपारावार-पारदृश्वानः सम्बभूवुः ।

असङ्ख्यशिष्योपशिष्याणां प्रखरवैदुष्यजनुःस्थितिभ्यां तदज्ञानान्धतमसच्छित्या च विरञ्चि-विष्णु-शिवात्मानस्त्रिदेवमूर्त्तयोऽप्यमी त्रिवेण्या एकाङ्गस्य स्वरूपतोऽन्तर्लयेन प्रयागस्तीर्थराज इव नाम्नि विराड्बोधक-रूढिमच्छब्दस्य स्वरूपतोऽन्तर्लयेन गुरवो हरिहरकृपालवः पण्डितराजा इत्युदीर्यन्ते स्म ।

अखण्डभारतपण्डितमण्डलकाननपञ्चाननतया कुत्रापि तत्र शास्त्रार्थेषु जल्पवितण्डा-ताण्डवचमत्कृतिपरायणान् इतरत्र लब्धविजयवैजयन्तीशतानपि कोविदान् प्रतिवादिता-मुपेयुषो हेलयैव कान्दिशीकान्, वादितामुपेयुषश्च हेलयैव म्लानाननानकार्षुः । अनुपमवैदुष्ये-णोतरेषूपमानतामुपमेयताञ्च विधूयोल्लसत्सुधामाधुरीकहृद्यवियतया सद्यः सुखाकुर्वतेऽद्यापि स्मृतिपथावलीढाः ।

शाब्दिकाः सन्तो व्यापारं मुख्यतया स्वीकुर्वन्तोऽपि नैयायिकाः सन्तोऽप्यसाधु-जनव्यापारं गौणतयाऽपि न कदापि संमेनिरे । विद्वद्वृन्दहितशत-सिषाधयिषाशालिनो-ऽप्यशिष्टजनपक्षतां न कदाऽपि लेभिरे । आहितगरिमात्मज्ञानवन्तोऽप्यादेहावसानं सत्क-र्माणि न विजहुः । अतिशयप्रतापोऽपि तरणिः प्रतिवर्षमेकमासं प्रतापपरीक्षणायेव तुला-मधिरोहति, किन्तु निर्विवादतः स्वीकृतवैदुष्यप्रतापा इमे तदर्थमेकदिवसमपि कदापि तुलां नाधिरुरुहुः ।

त इमे पण्डितराजा विहारस्य याज्ञवल्क्य-गौतम-कपिल-गङ्गेशोदयनमण्डनवाच-स्पत्यादि-रत्न-विशिष्टहारहीनतायां तेषामेकमूर्त्तिं धृतवतां स्वेषां निवासेन पुनर्विशिष्टहार-वत्तयाऽन्वर्थतान्तस्य विदधुः । ईदृक्षविलक्षणविचक्षणानां विहारप्रदेशनिवासने पटनासिटी-स्थमुरारकाकुलस्य मुख्ययोगो विजयतेतराम् ।

अतिशायिवैदुष्यविश्रुत्यादिगुणगणलभ्यमाना महामहोपाध्यायपदवी यदैभिः प्राप्ता तदा "पण्डितमण्डलाखण्डला इमे पदव्याऽनया न संमानिताः प्रत्युताधिगत्यैनान् पदवीयमेव संमानिता" इत्येवं देशस्य कोणे कोणे कोविदाः प्रमोमुद्यमाना एकस्वरेणोदीरयाञ्चक्रिरे ।

भारतीयस्वतन्त्रतातः पूर्वमेकदा भ्रमणलीलया लाहौरनगरं गतवतो मे श्रवसोस्तत्र तल्लीलयैव विचरतामनेकेषां विद्वत्सन्न्यासिनां तद्वैदुष्यस्मरणार्द्रचेतसां कथाप्रसङ्गेन "म० म० हरिहरकृपालुरपरो याज्ञवल्क्यः" इति निगदिता वाक् सुधाधारेवाजनयदमन्दानन्दम् । इत्थमेव गुर्जरप्रान्ते अहमदाबादस्थ-काशीविश्वनाथसंस्कृतमहाविद्यालयेऽध्यापयतो मे तत्र सन्न्यासाश्रमे यतस्ततः कोणात्कोणादागतानां महाविदुषां वाग्वर्णावलिरपि कर्णयोरुपेत्यानन्दमसृजत् ।

एकदा विहारसंस्कृतसमितेर्दीक्षान्तसमारोहावसरे मिथिलेशमहेश्वरमेशव्याख्यानमालायामेकं स्वव्याख्यानकुसुमं योजयतां म० म० कृपालुमहोदयानां स्वनिकट ऊर्ध्वमुखं स्थापितां करावलम्बयष्टिमतर्कितमधःशायिनीं तत्समितेस्तदानीन्तनाध्यक्षेण संस्कृतप्रणयप्राणेन दरभंगा-महाराजाधिराजेन स्व० कामेश्वरसिंहेन सहसैव निजकरकमलेनोत्थाप्य यथापूर्वमेवोर्द्ध्वमुखं स्थाप्यमानां तां तदा साक्षात्कृतवतामद्य स्मरतां विदुषां हर्षाश्रुबिन्दवो न जहति नयनानि, हर्षणानि च न जहति रोमाणि । अहो ! क्वेदानीं तादृशं वैदुष्यमाहोस्वित् क्वेदानीं तद्वैदुष्यसम्मानकारिता ?

यथासमयं पाटलिपुत्रं विहाय काशीवासं कुर्वद्भ्यः गुरुवरेभ्यः श्रीकृपालुमहोदयेभ्योऽहं तत्र वेदान्ताध्ययनशीलताक्रमेऽधीत्य व्याकरण-न्याय-मीमांसा-वेदान्तादिशास्त्राणि तस्मिन् तस्मिन्शास्त्रे लब्धाचार्यपदवीकानन्तेवासिनोऽपुस्तकमेवाध्यापयतान्तेषामप्रतिहतप्रवाहां वाचमद्यापि स्मरन् प्रत्यक्षायितामनुभवामि ।

देहं जहत्सु तेषु विगत-तद्रत्नहारलया साकमेव विहारप्रदेशेन समस्तभारतदेशो विहार एवाभवत् ।

यत्रत्या भूमिर्गुरुवराणाञ्चरणस्पर्शलालिता चक्षुर्विषयस्तच्छिष्योपशिष्याणां मनांसि परमं पुनीते, तत्रत्ये पटहासिटीनांश्रीरामनिरञ्जनदासमुरारकासंस्कृतमहाविद्यालये प्राचार्यपदमलङ्कुर्वन् गुरुवराणां पुत्रः श्रीब्रह्मदत्तद्विवेदी महाशयः प्रौढवैदुष्येण सहातिशयश्लाघ्यैषणीयव्यक्तित्वं धारयन् स्वपितृपादानद्याप्यभिज्ञपयतितराम् ।



# श्रद्धाञ्जलि-प्रसून-पञ्चकम्

श्रीमदनमोहनझा

( अध्यापकः, राजकीयसंस्कृतमहाविद्यालयः, भागलपुर । )

यस्याभूदुदयेन भूसुर-कुलाम्भोजं श्रिया संयुतम्

धन्यौ तौ पितरौ कृतौ स्वजनुषा येन प्रमोदान्वितौ ।

यस्मिन् सत्प्रतिभाङ्कुरः समुदितो बाल्ये जनैर्लक्षितो-

यस्मिन् स्वस्थ-शरीरमुत्तम-गुणस्थानं विधात्रार्पितम् ॥

( २ )

यः पूर्णोपनयक्रियः समुचित-स्वाध्याय-संपादनम्

कर्तुं योग्यगुरूनसेवत सदा छात्र-व्रते दीक्षितः ।

किञ्च द्राक् सहवासिनां समुदये विख्यातनामा मनाग्-

गर्वोन्मेष-मनोहरं तु विनयं स्वाभाविकं व्यातनोत् ॥

( ३ )

यस्तूर्णं गुरु-सत्कृपा-तरि-बलोत्तीर्णाङ्गविद्याम्बुधिः

विद्या-वाद-विधौ विजित्य विदुषो भव्यं यशो लब्धवान् ।

आचार्यस्य महत्पदं तदनु यो लब्ध्वा सहस्राधिकान्

छात्रान् शास्त्र-रहस्य-बोध-चतुराँश्चक्रे महापण्डितान् ॥

( ४ )

यस्याद्यापि शताधिकाः सुकृतिनः शिष्योपशिष्या मुदा

विद्यादान-परायणाः क्षितितले कीर्तिं नवां तन्वते ।

एकश्चन्द्र इव स्ववंश-तिलको योग्यात्मजासेवितः

पुत्रो यस्य विराजते बुधवरः श्रीब्रह्मदत्ताभिधः ॥

( ५ )

तस्मै मान्यवराय दिव्य-मतये वाग्देवतामूर्तये

प्रातः संस्मृति-गोचराय निहताऽविद्याय विद्यावते ।

विख्याताय कृपालवे हरिहरप्रख्याय मुक्तात्मने

भूयो भाग्यवता मया प्रणमता श्रद्धाञ्जलिर्दीयते ॥

★

# प्रबोधकं संस्मरणम्

श्रीरामकरणशर्मा, प्राचार्यः

( धर्मसमाजसंस्कृतकालेजः, मुजफ्फरपुर । )

विरञ्चिप्रपञ्चे सत्स्वपि बहुषु चेतनविभेदेषु मानवानामेवोत्कृष्टतमं विवेकशीलं चैतन्यमिति नातितिरोहितम् । विविच्य वस्तुव्यवस्थापनपरं तेषां तथाविधं शीलमेव तत्र सर्वथा भवत्युत्कर्षाधायकम् । विवेचनशीलत्वादेव च मानवानां वशे समेऽपरे प्रतिष्ठिताः इति भवत्यनुक्षणमनुभवः । विविच्य वस्तुव्यवस्थापनं मार्गप्रदर्शनञ्चात एव मानवे प्रतिष्ठितम् । मानवेष्वपि च केचन प्रकाशस्तम्भत्वं समुपेता अहर्निशं मार्गप्रदर्शनपराः प्रेरणास्रोतस्त्वं गताः विभ्राजन्ते इति न क्वापि विश्रामस्तद्धेतुकः सन्निपातो वेति मानवसमाजस्योत्कृष्टतमा व्यवस्था ।

संस्कृतसमाजे तथा प्रकाशस्तम्भत्वमुपेता अनेके श्रद्धासमभ्यर्चितचरणाः विद्वद्धौरेयशिरोऽभिवन्दितपादविभूतयः स्वशेमुषीमयूखविकासविभूषितविद्वज्जनमनःपद्मसन्ततयः मान्या विपश्चितः समजनिषत । तेष्वप्युत्कर्षे चरमत्वङ्गताः प्रतिभावतारभूताः प्रज्ञापरमत्वङ्गताः महामहोपाध्यायाः श्रीहरिहरकृपालुद्विवेदिनः न केवलं विहारराज्यस्य, अपितु समस्तस्य भारतवर्षस्य विद्याविद्योतनकलाकोविदभूषणभूताः व्यराजन्त । यथा तेषु शास्त्राणामुत्कर्षः गोचरीभूतो नान्यत्रेति विद्वन्मूर्धन्यानां सम्मतिः । वाचान्ते निवासभूमयः पूर्वोत्तरमीमांसयोर्विलासविकासस्थलीभूताः प्राच्यनव्यन्यायवीथिविहारविदग्धा अपि काव्यकलाकलापकोविदत्वङ्गताः कस्यां न विद्वद्गोष्ठ्यां केन्द्रबिन्दुत्वमुपगताः कस्यां न सदसि सदसस्पतयो वाभूवन् ।

स्मारं स्मारं तेषां तथात्वमद्यापि परमत्वदर्शनम् आदर्शाध्यक्षीकरणप्रेरणया तत्पथे विस्फूर्त्तिविभावनम् ।

स्वाधीतिकाले सर्वप्रथमं तदुत्कर्षवैशिष्ट्यश्रवणावसरो मया लब्धः । विहारराज्ये राज्याधिपतिव्यवस्थापितमेकमेवाभूत्संस्कृतसंस्थानं धर्मसमाजसंस्कृतमहाविद्यालयाख्यं मुज्जफ्फरपुरनगरे सुप्रतिष्ठितम् । स्वविषयवैदुष्यप्रकर्षप्रख्याताः सुपरीक्ष्यविचितास्तत्राचार्यपदे मनीषिण इति विभिन्नप्रदेशागतच्छात्राणामदोऽभूद् गुरुसद्मेवोपासितं स्थानम् ।

मीमांसापदं तदा तत्राभूद्रिक्तमिति तदर्थमासीच्चयनावसरः । मीमांसानिष्णातानामाचार्यप्रवराणां पार्श्वे निषण्णेषु बहुषु छात्रेष्वहमप्येकोऽभवम् । तदन्तरे एवागतः एकः कृतबहुशास्त्रपरिश्रमोऽनेकविषयेषु लब्धाचार्यपदवीकस्तत्पदाभ्यर्थी परावृत्य तदन्तर्वीक्षणस्थानाद्यत्र वीक्षकेषु महामहोपाध्याया अप्यभूवन् । अन्तर्वीक्षणक्षणे यथासौ तेन पृष्टः यथा च स्खलने भर्त्सितः सर्वमपि वृत्तजातं भीतभीत इव व्याहरँस्तत्पुरतो न्यगादीत् 'अगाधवैदुष्यविद्योतमानेन तेन सिद्धान्तकौमुद्याः प्रारम्भस्थितं सुद्ध्युपास्य इति प्रयोगं साधयितुं पृष्टोऽपि नाहं वक्तुं क्षमः । सूर्यप्रकाशसमक्षमप्रकाशकत्वमन्यप्रकाशानामिव भवति सत्यं तत्र गतिः, विचित्रं तत्रागम्यं वैदुष्यम् अदृष्टाश्रुतश्च स्मरणीयः वाग्विलासः । असौ सम्प्रति सत्यं विबुधाग्रणीः भारते पण्डितराजः । तस्याग्रे न कोपि पुरः स्थातुं प्रस्थातुमपीहां बिभर्त्ति। धन्येयं वाग्विभूतिः, सक्षात्कृता शरीरधारिणी प्रतिभेत्येतावतास्ति प्रहर्षः इति ।

आचार्यमहोदयास्तद्वचसा विबोधितपूर्वस्मृतय इव सर्वैरुररीकृतं मनसा मेधया च तद्वैदुष्यमित्याकारेण पुनः पुनरभिव्यञ्जयन्तो वचसाप्यन्वमोदयँस्तदभिधानमिति बालानामस्माकं कियन्त्यहानि परस्परं तदालापोऽपि हर्षाय सम्पन्नः, तावन्मात्रेणापि चानुपमाप्रेरणाधिगता, अद्यापि चासौ पुण्यपुरुषविषयक आलापः विचित्रामनिर्वाच्यां विस्मितिमुत्पादयति ।

आसीत् १९३४ तमवर्षीयो माघमासः । विहारसंस्कृतसमितेः कन्वोकेशनसमारोहः धर्मसमाजसंस्कृतमहाविद्यालये एवायोजितः । संस्कृतगिरां विश्रामभूमिः भारतीयसंस्कृतिसंस्कृतस्वान्तः सहृदयहृद्यवाग्विभूत्या विख्यातः छात्रसंसदि नित्याभिवन्दितकीर्त्तिः श्रीदौर्गादत्तिः ईश्वरीदत्तमहोदयोऽभूत्तदा समित्यध्यक्षः । राज्यस्य विभिन्नभागेभ्यः समागतानां विदुषां समाजस्तत्र दर्शनीयः समपद्यत । महामहोपायध्यानामावासस्थानं महाविद्यालयस्यान्तिकेऽभूत् । दर्शनार्थं तत्र यदोपस्थितस्तत्पुरतश्छात्राणामिव बुधानां मण्डलं तद्वचःश्रवणे एकतानमदृश्यत । परिषत्सदस्यानां निर्वाचनस्यावसरोऽभूत् । दलनिर्माणपटूनामितस्ततः भ्रमणपरता स्वपक्षे चाकर्षणचाटुता सर्वत्रावलोक्यते स्म । महामहोपाध्यायानां सविधे तदर्थं गन्तुं कस्मिन्नपि साहसः नाभूत् । केचन संगत्य भीता इवोपस्थिताः स्वीयान् काँश्चित्परित्यज्य निजदले आनेतुं प्रस्तावमकार्षुः, परं "निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु ...न्याय्यात्पथः परिचलन्ति पदं न धीराः ।" अक्षोभ्याः धृतिमन्तस्ते स्पष्टमवादिषुः— "प्राणे गतेऽपि नैवं भवितुमर्हति, नायं क्षुद्रस्वार्थायौचित्यं परिहातुं कथमपि प्रभवेत्" ।

महतामिदमेव महत्त्वमिति सर्वैस्तदावगतम् । न स्वार्थकणिका तान्पथः परिचालयितुं प्रभवति, सत्यन्ते प्रकाशस्तम्भाः ।

पक्षे विपक्षे वा कश्चित्कथमपि प्रबोधितः प्रयायान्न महतां ततः क्षोभः । मृगपतिरेकाकी एवासहायोऽपरिच्छदो राजते । सापेक्षा एवासमर्थाः शक्त्यै संघं कामयन्ते इति तदा साक्षादस्माभिरनुभूतम् ।

तत्र भवति किञ्चित्तत्वमेव तथाविधमगम्यं, यतः परेषां हृदये उत्कम्पः । महामहोपाध्यायमुखविनिःसृतमेकं वाक्यखण्डं स्मर्यते—"नो जाने किमिहास्ति तत्त्वमधिकं श्येने यदस्यारवैरुत्कम्पं हृदये ममेत्यतिशुचा गृध्रो न निद्रात्यपि ।" सर्वैरपरिलक्षितं किमपि तत्र स्थितं तत्त्वम् ।

तत्र निर्वाचने या सरणिराश्रिता, यथा च कैश्चित् देवतादात्म्यमुपगतानां महतां संस्कृतवाग्विभूतीनां मनसाप्यवमानना विहिता, तत्फलभूतमेव समाजेऽस्मिन्ह्रासजातमिति दृढम्मे विश्वासः । "अयोग्या यत्र पूज्यन्ते योग्यानाञ्च व्यतिक्रमः" तत्र यत्सम्पद्यते विवेकिभिरवश्यमनुभूतमनुभूयते चाहर्दिवम् ।

१०९७ तमे खृष्टाब्दे परतन्त्रभारते एव निर्वाचितं कांग्रेसमन्त्रिमण्डलं व्यवस्थितम् । श्रीमतः बदरीनाथवर्मणः आध्यक्ष्ये संस्कृतसुधारसमितिरेका राज्यसञ्चालकैः संघटिता महामहोपाध्यायः सदस्येष्वन्यतमोऽभूत् । परिवर्त्तनक्रमविमर्शे दूरदृष्टेर्नितान्तं भवत्यावश्यकता । त्वरया प्रतिक्रियारूपेण यथाकथञ्चित्तत्प्रवर्त्तनम् महति गर्ते निपातकम्भवेदिति न ततो बिभेति । महामहोपाध्यायास्तत्र विचारद्रढिमनि वर्तमानाः सदस्यानां विच्छिन्नविचारप्रवाहनियन्त्रकाः प्रकाशस्तम्भाः इव कार्यमकार्षुः । सुधारसमितिरेव सम्प्रति दृश्यमानायाः संस्कृतस्थितेर्निदानभूता । संस्कृतसमाजदुर्दैवात् विमर्शस्यान्तिमः सिद्धान्तस्थिरीकरणकालः तेषां परोक्षे एवोपस्थितः । सिद्धान्तश्चेत्तेषां समक्षं समपादिष्यत समाजस्य भिन्ना एव स्थितिरद्याभविष्यत् ।

संस्मरणानीमान्यद्यापि प्रबोधप्रदानि यथायथं मानसं संहर्षयन्ति । ते उत्तरप्रदेशेवतीर्णा अपि बिहारराज्यराजधानीं पाटलिपुत्रमेव कार्यक्षेत्रमकार्षुरिति विहारस्याभूत्सौभाग्यम् । तथाविधाँस्तानवाप्य विहारबुधसमाजः सदा गौरवावस्थितः मण्डितं स्वममन्यत । तत्स्मृत्या प्रबोधमासाद्य च प्रतिष्ठितोऽद्यापि राजते ।

चिरमन्तर्विराजतां सा प्रबोधिनी तत्स्मृतिरनवरुद्धा, विराजतां सा प्रतिभा पुरःस्थिता ।

म० म० श्रीहरिहरकृपालु द्विवेदी



विहारराज्यसंस्कृतसाहित्यसम्मेलनस्य

संस्थापकः

## पद्यपुष्पसमर्पणम्

श्रीरङ्गेश्वरनाथमिश्रः, प्राध्यापकः

( राजकीयसंस्कृतमहाविद्यालयः, रांची । )

महामहोपाध्यायं स्वर्गतमद्भुतशास्त्रस्वाध्यायम् ।
प्रणमाम्यमितवेदिनं हरिहरकृपालुद्विवेदिनम् ॥

( २ )

लोकाक्षिग्रहशर्वरीपतिमिते संवत्सरे वैक्रमे,
जन्माभूच्छुचिशुक्लपञ्चमतिथौ संसारसौभाग्यतः ।
विज्ञस्यास्य महोदयस्य सरयूपारीणविप्रान्वये,
विद्वन्मण्डलमान्यपण्डितपुरग्रामे प्रयागान्तिके ॥

( ३ )

विद्वद्वरेण्यो बलभद्रदत्तो बराँवराज्याधिपतिप्रदत्तम् ।
सम्मानमाप्नोज्जनकोऽस्य विद्याविवेकविज्ञाननिधिर्महात्मा ॥

( ४ )

वैदुष्यविद्योतितवंशजन्मा कृपालुनामा महनीयकीर्तिः ।
मनीषिमान्योऽभवदेव बाल्ये मनीषयाऽनुत्तमया मनीषी ॥

( ५ )

प्रत्यग्रप्रतिभाप्रयुक्तपदसन्दोहाढ्यवाक्यावलीं,
शास्त्राध्यापनपद्धतिं विजयदां शास्त्रार्थशैलीमसौ ।
वादे वाक्पटुतामलक्ष्यकटुतामहाय संदर्शयन्,
लोके कन्न विपश्चितं विजितवान् विद्वत्सभामण्डपे ॥

( ६ )

मनीषिवर्गोऽपि भवेन्मनस्वीति नीतिरत्रैव यथार्थतोऽभूत् ।
मन्ये बराँवाधिपबालवृन्देन साकमध्यापनमत्र हेतुम् ॥

( ७ )

दिष्टेन दिष्टेऽध्ययनस्य काश्यां सन्तोषितो येन गुरुर्नितान्तम् ।
समैः सदा संस्मरणीय एव कथं न तस्य प्रतिभाविशेषः ॥

( ८ )

रीवाँनरेशेन पुरस्कृतोऽभूद्यथा तथा धौतपरीक्षणेऽपि ।
सम्मानितो मानधनोऽतिधन्यो महामनोभिर्मिथिलामहीशैः ॥

( ९ )

मीमांसान्यायसांख्येष्वविचलितकला वेदवेदान्तविद्या-
योगो योगे प्रसिद्धिः समधिकमहिमा प्रास्फुरच्छन्दशास्त्रे ।
काणादी यस्य विद्या मृदुमनसि गता माननीया भवेऽभूत्,
तत्तेनास्ते कदाचित्क्वहदपि समो नैव कश्चिद् विपश्चित् ॥

( १० )

भाषाविशदितानेन गीताया मधुसूदनी ।
शावरे "कल्पलतिका" नाम टीका कृतेक्ष्यते ॥

( ११ )

एवमन्येऽपि भूयांसः सद्ग्रन्थाः सन्ति निर्मिताः ।
ये वदन्तितरामस्य रचनाचणचातुरीम् ॥

( १२ )

सहाऽमुना सा मिथिलापि शास्त्रवादेषु सद्यः शिथिला बभूव ।
कदाचिदित्थं बहुतथ्यवृत्तं सम्यक् सुधीभिः श्रुतमस्ति सर्वैः ॥

( १३ )

मुरारकोपाधिविभूषितेन सदा सता पुष्पपुरस्थितेन ।
नीत्वा च यं रामनिरञ्जनेन सौभाग्यसौख्यं सहसाऽन्वभावि ॥

( १४ )

विद्यारत्नाकरस्तर्कालङ्कारो नाम सादरम् ।
प्रधानाचार्यविद्यासागरौ विद्यानिधिस्तथा ॥

( १५ )

महीन्द्रैश्च कवीन्द्रैश्च सम्प्रदत्ता मनीषिभिः ।
सम्मानोपाधयो ह्येते विलसन्ति महामतौ ॥

( १६ )

क्वचिज्जयश्रीः प्रतिभा परत्र
क्वचिच्च वाग्मित्वमिति प्रसिद्धिः ।
किन्त्वञ्जसाऽस्मिन् प्रसमीक्ष्य सर्वान्
सुविस्मिताः सर्वजना बभूवुः ॥

( १७ )

वितीर्य विद्यां प्रतिभां विकीर्य महीतलेऽस्मिन् वितते कृपालुः ।
षडभ्रशून्याक्षिमिते सुधीशः संवत्सरे स्वर्गमनं चकार ॥

( १८ )

बाल्येऽसेवि सदा शिवा शिवपुरी शास्त्राणि संसेवितुं,
मध्ये पुष्पपुरीं निषेव्य चरमे वाराणसी सेविता ।
यस्याभूत्सहसा वसानसमये सौम्यः समक्षे शिवः,
तस्यासीत्सततं सतश्च सकलं सत्यं शिवं सुन्दरम् ॥

( १९ )

गद्येऽनवद्ये निरवद्यपद्ये तन्निर्मिताः सन्ति परप्रबन्धाः ।
तस्मादयं सर्वसमक्षमेव यशःशरीरेण मनुष्यलोके ॥

( २० )

आत्मैव पुत्रो भवतीति नीत्या कृपालुरद्यापि जगत्यमुस्मिन् ।
विराजते यत्तनयस्तदीयो विद्योतते तादृश एव विज्ञः ॥

( २१ )

शास्त्रेष्वभिज्ञः कुनयानभिज्ञः समग्रलोकप्रसरत्समज्ञः ।
विद्याविनीतो न कदापि भीतः श्रीब्रह्मदत्तो बुधवर्यगीतः ॥

( २२ )

कृपालुतातो बलभद्रदत्तः श्रीब्रह्मदत्तश्च कृपालुपुत्रः ।
दत्तद्वयाभ्यन्तरितस्य तस्य शश्वत्कृपालोः सुषमासमृद्धिः ॥



# पावनं संस्मरणम्

श्रीजितेन्द्रियाचार्यः ( पुराणेतिहासाचार्यः, वाराणसी )

प्रवहन्त्यां भागीरथ्यां करपादक्षालनेच्छेव तत्रभवतां स्वनामधन्यपण्डितमण्डलीमान्य म० म० श्रीहरिहरकृपालुमहाभागानां पावनसंस्मरणसंजीवनकामनया प्रवृत्ते विहारसंस्कृत-सम्मेलनविशेषांके निजैः व्यङ्गैरपि पदजातैः हार्दादरं सदरं सादरं विवरीतुं प्रेरयति मां काप्यान्तरिकी लालसा। विबुधधौरेया इमे निजासाधारणप्रतिभया आधुनिकसमाजनायकान् प्रगल्भानपि विस्मापयन्ति स्मेति कामपि घटनां काकतालीयन्यायेन साक्षादध्यक्षितां उल्लेखितुं वाञ्छामि।

कदाचित् प्रभाते प्रायो दशवादनवेलायां संस्कृतपाठशालाभूतपूर्वप्रधाननिरीक्षकश्रीकाशीरामपण्डितमहोदयेन सार्धं 'राजर्षिः' पुरुषोत्तमदासटण्डनमहाभागस्तत्र महामहोपाध्यायसदनं समायासीत्। स्मितपूर्वस्वागतवचनाभिनन्दितः श्रीटण्डनमहोदयः संल्लापान् प्रवर्तयन् पल्लवयंश्च सहसा पर्यपृच्छद् द्विवेदिमहाभागाननुयोगमिमम्—"भो भो मनीषिवर्याः ! अधिसंसारं साम्प्रतं कापि तादृशी छन्नविद्या प्राणिति, या कृतोपदेशाऽपि द्विजेतरैः दुर्ग्रहा ?"

श्रीटण्डनमहाशयस्यायं प्रश्नः "ब्राह्मणत्वादिजातिः गुणकर्मनिबन्धनैव न पुनर्जन्मसहचरी" इत्याधुनिकसुधारकाणां सिद्धान्तस्य भूमिकाभूतः। परम् आतिथेयैः श्रीद्विवेदिमहाभागैः निर्विशङ्कमनुपदमेवमभ्यधायि "सत्यम्, अस्ति तादृश्यपि न गुप्ता, छन्ना वा विद्या, अपितु स्थूला प्रकटा च सा, 'रुद्री' इति यजुर्भागो वर्तते। सेयं रुद्री विहितगुरुमुखाध्ययनैः विप्रबटुभिः सस्वरमविकलं च पठ्यते, नेतरैः, आर्यसमाजपद्धत्या विहिताभ्यास एकलोऽपि तावत् प्राज्ञः श्रावयत्वानुपूर्वीमिमाम्, मास्तु सस्वरम्, विस्वरमपि" इति।

श्रीटण्डनमहोदयः दिग्भ्रान्त इवानेनोत्तरेण केवलं स्मितं प्रादुरभावयत् नोमित्योमिति वा नाचष्ट। प्राचीनपक्षपाती श्रीकाशीरामपण्डितोऽन्तरेव प्रासीददतिवेलम् उत्तरेणानेन।

अपरमप्येकं कौतुकावहं वृत्तमदसीयं चित्तपथातिथीभवन्न निह्नोतुं पारयामीत्युल्लिखामि। जातुचिद् वाराण्स्यां राजबिरुदाङ्कितश्रेष्ठिबिरलोद्याने दक्षिणदेशात् 'मधुरवाणी'पत्रसम्पादकः पण्डितरामाचार्यगलगलीत्युपाह्वः पं०सीतारामजोशी ( प्रो० हिं० वि० वि० ) महोदयेन साकं समासदत्। उक्तश्रेष्ठिसभामण्डपे वैयाकरणधौरेयपण्डितपूर्णचन्द्राचार्य-शारदाप्रसादसप्त-तीर्थादिभिः द्वित्रैः सहाहमप्युपस्थितोऽभूवम्। महामहोपाध्याया अपि तत्र विराजन्ते स्म ( यदा कदा श्रेष्ठिसम्भावनाय विद्वांसस्तत्र यान्ति स्म, श्रेष्ठी महामहोपाध्यायेषु भूरि भृतादरभर आसीत् )।

द्वैतदर्शनचर्चाप्रसंगे श्रीजोशीमहोदयः "उपनिषदासु सगुणं ब्रह्मैव श्रूयते, न पुनर्निर्धर्मकं निर्गुणं ब्रह्म" इत्याख्यातवान्। सहसैव द्विवेदिमहो-दयाः—"किमाह भवान् उपनिषदासु ?" सप्ततीर्थपण्डितः—'आम् भोः, "आपं चैव हलन्तानाम्" इत्यस्ति किल।" द्विवेदि०—"यथा वाचा निशा दिशा-इति परिगणितानामेवाबन्तत्वम् इत्याशयस्तस्य।" जोशी०—'वेदैः साङ्ग-पदक्रमोपनिषदैः—इति वर्तते ननु ?" द्विवेदि० "द्वन्द्वाच्चुदषहान्तात् समाहारे" इत्यनुशासनानुगुणः स प्रयोगः" इति प्रगल्भमभ्यदधत सभत्संनम।

'गुणैर्हि सर्वत्र पदं निधीयते' इति महाकविभणितिमनुसरन् स श्री-जोशी महामहोपाध्यायमहोदयान् मुकुलितकरयुगलः प्रह्वीकृतमूर्धा क्षमाम् अयाचत। महामहोपाध्याया अपि प्रणिपातप्रतीकारसंरम्भाः "भूष्णून् युष्मादृक्षान् वीक्ष्य परं हृष्याम्यहम्" इत्युद्गीयाभ्यनन्दन्।

सद्विद्याप्रतिभाक्षय्यनिधयो जय्यवादिकाः।
हारिहरकृपालक्ष्याः कण्ठीरवरवा बुधाः॥
अतीतसंख्यसंख्यावच्छात्रसन्तानसन्नुताः।
समज्यात्तसमज्यास्ते द्विवेदा वै जयन्त्विह॥
वाचस्पतिदुरुन्नेये विमते निर्णिनीषिते।
वृद्धश्रवःसमाहूताः स्वर्याताः कौतुकादितः॥

इति शम्



# श्रीमद्गुरुचरणसपर्य्या

श्रीकृपाशङ्कर अवस्थी ( मुङ्गेर )

यस्य नाम हरिहरकृपालुरवतरितः स्वयङ्गणेशः ।
ऋजुतरसौम्यवेशपरिभूषितवाचस्पतिर्विशेषः ॥
यस्यान्ते वसनात् कृतकृत्यो धन्यश्छात्रसमूहः ।
नौमि तस्य पदयुगलमुदारं ज्ञानाधारमशेषम् ॥

( २ )

यस्य चरणनखकिरणलेशलवकणिकाश्लेषविशेषम् ।
रचयति चञ्चच्चामीकरमिव रुचिरचारुतरदेशम् ॥
चिरञ्चमत्कृतचिन्तचिन्तामणिगुणगरिमागुम्फितवेशम् ।
नौमि तस्य पदयुगलमनूपं सदालोकलोकेशम् ॥

( ३ )

सततमस्तोमाहितमतिततिहतिकृतहितविस्तारम् ।
परममनोरमकरुणावरुणालयितश्चित्तागारम् ॥
विद्यावारिधिमहामहोपाध्यायोपाध्याधारम् ।
नौमि तस्य पदयुगलं सारं ज्ञानागारमहेशम् ॥

( ४ )

मन्दस्मितास्तमितपारुष्यं व्याकृतिपाठमपारम् ।
व्यवच्छेदकावच्छिन्नाख्यं नव्यन्यायविकारम् ॥
पाठनपाटवसौष्ठवसुस्पष्टीकृतकठिनाकारम् ।
नौमि तस्य पदयुगमाराध्यं प्रमासुधाराकेशम् ॥

( ५ )

तत्त्वसमीहोत्कठितबहुधृतसंन्यासाश्रमवेशैः ।
बहुलाचार्यपरैरनुशीलननिपुणैश्छात्रविशेषैः ॥
यस्य सेविते चरणे सततं श्रद्धाश्चितसुविशेषम् ।
नौमि तस्य पदयुगलमनूपन्नयनोन्मेषदिनेशम् ॥

( ६ )

तत्प्रसीद गुरुवर ! द्विजेन्द्रवर ! देहाद्दिवङ्गतोऽसि ।
ज्ञानात्मना तु नूनमस्माकमन्वक्षं संस्थितोऽसि ॥
यः प्रकाशेत, त्वद्दत्तोऽयमालोको हे कृपालो ! ।
हरिस्वरूपो हर चित्तस्थं शेषं कल्मषभारम् ॥

( ७ )

यस्य कृपाकणिकामादाय सूर्यकान्तवद्भाति ।
यस्याशीर्वचनैः कृतविद्यः सिद्धहस्त इव याति ॥
ज्योतिःपुञ्जात् स्फुलिङ्गभूतः खेचरत्वमाचरति ।
कविरिव वचनसुमनसमवायान् त्वच्चरणे चाहरति ॥

( ८ )

त्वत्पदसेवाप्रसादरूपं पाथेयमादधानः ।
विनयविनीतो निर्भयचित्तो निश्शङ्कं यतमानः ॥
चरति विश्वपथि कथिताचार्यो मथितायुर्वेदाब्धिः ।
वाञ्छति मुहुर्मुहुः कृतकृत्यस्त्वच्छुभचरणसपर्याम् ॥

( ९ )

दैवकीनन्दनिः सोऽयङ्कृपाशङ्करशब्दभाक् ।
अवस्थीपदविख्यातो भिषक् त्वत्पादसेवकः ॥



# शब्दद्वयम्

पं० श्रीनमोनारायणझा, प्रधानाध्यापकः

( संस्कृतविद्यालयः, मधुवनी दरभंगा । )

प्रातः स्मरणीयाः सर्वतन्त्रस्वतन्त्रा महामहोपाध्यायपण्डितप्रवर-श्रीहरिहरकृपालुद्विवेदिमहोदया विश्वविख्याता आसन् । एषां महानुभावानां शास्त्रार्थेषु 'विलक्षणां' वाक्पटुताम्, अध्यापनेषु सर्वसाधारणान्तेवासिबोधोपयोगिनीं शैलीम्, काव्यरचनास्वप्रतिमप्रतिभाञ्च के न जानन्ति । एषां सम्बन्धे संस्कृतसम्मेलनस्य विशेषाङ्कप्रकाशनं भवतीति 'महत्सौभाग्यम्' यत् 'संस्कृतविद्यापारङ्गतानामेतादृशानां विदुषां चरित्रस्मरणान्महता पुण्येन सह संस्कृतविदुषां संस्कृतविद्यासंरक्षणे महानुत्साहः समुत्पद्यते, प्रगाढपाण्डित्यरक्षणोन्मुखी प्रवृत्तिश्च भवति । यद्यप्येतादृशाचार्यचरणानां सम्बन्धे लेखद्वारा किञ्चिदपि प्रकाशयितुं नास्मदादीनां शक्तिः, तथापि स्वान्तःकरणं प्रक्षालयितुं स्वात्मानं पावयितुं च मदीयो लेखनीव्यापारः । पूज्यतमानामेषां सर्वतोमुखीं प्रतिभामवगत्यैव न केवलं विहारप्रान्तीया मैथिलसरयूपारीणप्रभृतय एव विद्यालाभेन गौरवान्विता अभूवन्, अपि तु काशीतोऽपि छात्राः संन्यासिनश्च प्रौढपाण्डित्यलाभाय अध्ययनार्थं तत्समीपे समागत्य सम्मिलिता आसन् । येन तदा विहारप्रान्तस्य महत्वं पक्षधरमण्डनवाचस्पतिसमयसममभवत् । एकदा विहारसर्वकारेण संस्कृतशिक्षासंस्कारार्थमेका संस्कृतशिक्षासुधारसमितिः स्थापिता, यत्र च भूतपूर्वराष्ट्रपतिः डॉ० राधाकृष्णन्प्रभृतियोग्यतमैः सदस्यैः सह इमेऽपि महान्तः सदस्या आसन् । एषामेव महानुभावानां प्रभावात् संस्कृतप्राचीनपद्धतिरेतत्प्रान्ते सुरक्षिता अभूत् । विहारसंस्कृतसमितेर्दीक्षान्तसमारोहे दरभंगामहाराजाधिराजमहोदयैर्दीक्षान्तभाषणे समाहूता इमे महान्तोऽभूतपूर्वविद्वत्तापूर्णभाषणेन सम्पूर्णां विद्वन्मण्डलीं

चकितामकार्षुः, सरसविलक्षणपदप्रयोगगम्भीरभावपूर्णभाषणश्रवणेन परमानन्दनिमग्नाश्च चक्रुः। पूज्यतममहामहोपाध्यायान् प्रति दरभंगामहाराजाधिराजश्रीकामेश्वरसिंहमहोदयानां महती श्रद्धा आसीत्। यतो दीक्षान्तभाषणावसरे एषां महानुभावानां यातायातव्यवस्थायां स्वयमेव महाराजाधिराजा बाष्पयान-(मोटरकार) सञ्चालकाः सन्तस्तन्निवासस्थानं यावद् गतवन्तः। काशीवासकाले पूज्यचरणानां समीपे विहारप्रान्तीया उत्तरप्रदेशप्रान्तीया अन्यप्रान्तीयाश्च महान्तोऽध्यापका अध्ययनाय समागत्य स्वशङ्कासमाधानेन सहाध्यपयनेन परं प्रमोदमुपगता बभूवुः। सौभाग्यादेव युगयुगानन्तरमेतादृशाः प्रतिभासम्पन्ना विद्वांसो भारते, अवतीर्णा भवन्ति। एकमेव महद्भाग्यं यदिमे महान्तः स्वपुत्रान् पण्डितप्रवरश्रीब्रह्मदत्तद्विवेदिमहोदयान् स्वानुरूपसुयोग्यान् सर्वशास्त्रपारङ्गतानुद्भटान् विदुषः सम्पाद्य परं पदं काश्यामवाप्नुवन्। पण्डितब्रह्मदत्तद्विवेदिमहोदयानां सरलस्वभावेन विद्वत्तापूर्णभाषणेन प्रगाढपाण्डित्यपूर्णाध्यापनेन च सर्वे विशिष्टा विद्वांसो मुग्धा भवन्ति। ममायं विचारो यत्पूज्यमहामहोपाध्यायचरणानामेकं स्मारकं स्थापनीयं यत्र प्रतिवर्षं जयन्तीमहोत्सवः करणीयः, यत एषामादर्शजीवनस्मरणेन संस्कृतविदुषां महाँल्लाभो भवेत्प्रगाढपाण्डित्यसंरक्षणोत्साहश्च सम्पद्येतेति।

●

# वाचा सपर्या

## श्रीकेदारनाथ ओझाः

( भू० पू० प्राध्यापकः, राजकीयसंस्कृतकालेजः, पटना । )

**हरेर्हरस्यापि पृथक् पृथङ्नु बुधाः सपर्यां विधिवत् प्रकुर्युः ।**
**अद्वैतभावं भजतः कृपालोर्वाचा सपर्या जयतान्ममैषा ॥**

अयि निस्सर मम वाग् विद्वत्सपर्यायै, अहो दरिद्रस्य कुतः स्याद् वाग्धनम् स्वल्पाऽपि नाम सर्वस्वम् । तावताऽपि स्यात् पूजा, न विभीहि, गुणोदधिनिमज्जनात्, तीरे तिष्ठ, गुणलेशमेव गृहाण, न भविष्यसि भारभुग्ना, अतीता हि गुणाः नाधुना वर्तन्ते दर्शनेऽपि नायान्ति, का कथा तेषां भारस्य, केवलं स्मृतिपथमुपगताः पुनन्ति, चेतश्चमत्कुर्वन्ति, समुत्साहं निदधति, शास्त्रभक्तिं भूषयन्ति, व्यवहारपाटवं पोषयन्ति, धैर्यं फलन्ति, सन्तोषं प्रस्तुवते, किं किं न सुवते हृदये स्मृता एव धीमद्भ्यः ।

अहो स्मरणमेव शरणं सन्तोषावहस्य संस्कृतवाङ्मयस्य वितथे युगेऽत्र का कथा प्रौढविदुषां वादजल्पकथायाः, आसीन्नाम अध्यापनरसाप्लुतिः, स्फुटवादितायास्ताण्डवम् , अङ्गीकृतस्य परिपालनव्रतम्, उपकारकृतज्ञतयोरभिन्नमैत्री, नाधुना शेखरः खरमूल्यं बिभर्ति, का भवतु वाचस्पतेर्भामिनी भामती ? हिन्दीभाषामये मरौ रेणुरेव, खण्डनखण्डो न चायपानसहकृतमपि खाद्यम् , अपि तु शिवस्पर्धाधायि विषकूटं तमजयत् । नात्र संस्कृतकाव्यरसपिच्छिलः पन्थाः किन्तु सर्वरसशोषिणि पूषणीव महार्घतादोषणिच्छायामात्राश्रयिणो जनास्तृप्ताः ।

इत आसन्नपञ्चत्रिंशाब्देभ्यः प्राक् पाटलिपुत्रनगरे भारतस्य कोणे कोणे विख्यातवैदुष्यः श्रीहरिहरकृपालुद्विवेदी "निरस्तसर्वव्यभिचारशङ्का वाणी न वेदाः किमु सन्ति ते तु" इति न्यायेन वेदीकृतवचनः शास्त्रार्थमहारथोऽध्यापकपुङ्गवो लेखककलानिधिः विहारप्रधानपण्डितमहिम्ना सर्वत्र भारते आहूयते, सत्क्रियते चेति बालविद्यार्थिभावभृतोऽयं लेखकः काश्यां यदा कदा अश्रौषीत् । तदानीमेव सहसाऽस्य कर्णपथेऽवातरद् यत् महामनोमालवीयमहोदयेन काशीहिन्दूविश्वविद्यालयाय आयातुमाग्रहद्यति परं मुरारकाश्रेष्ठिस्वीकृतिकरणंविना न तथा विधातुमुत्सहतेऽसौ नैकशास्त्रवेदी द्विवेदी । स श्रेष्ठी च धन्यो यो भवतां कृतेऽयं विद्यालयो लयं गच्छतु सह वा प्रयातु यथा रोचते भवद्भ्य इति ब्रूते ।

ततः परं काशीहिन्दूविश्वविद्यालयच्छात्रावासवासी अत्रत्यसंस्कृतपरिषदि प्रत्यब्दं द्विर्वा आयाति विश्रुतकीर्तिः स कृतीति आकर्णयन् सकृत्सभामञ्चे समासीनं नयनोत्सवपर्यवसायिनं व्यधात् । एष एव लेखकश्छात्रः कतिपयकाशीस्थच्छात्रशास्त्रार्थ-सभासु शास्त्रार्थद्वारा अल्पीयसीं ख्यातिं कानि च पुरस्कारद्रव्याणि लब्ध्वा धृष्टतां मद-लेशमप्याश्रयत् । अन्विष्य व्याकरणस्य न्यायस्य च कतिपयान् प्रश्नान् अपृच्छत्, यथाशक्ति विचारपरम्पराञ्च प्रावर्तयत्, तादृशे एवावसरे एतादृशलालसालोलमनसा पाटलिपुत्रमगच्छत्, प्राय ईश्वीवत्सरस्य एकोनविंशशतोत्तरपञ्चत्रिंशस्य कश्चिन्मासः समयो भवेत् । मन्दिरीहथुआमन्दिरे सार्धं नीतानि वस्तूनि निधाय दिवसारम्भ एव स-मीहितसुधीसन्दर्शनाय सिटीचौकस्थानप्रस्थानं प्रारेभे । तत्र गतश्च एकाकिनमेकस्मिन् कुटीरे आसीनम् पार्श्ववर्तिकतिपयपुस्तकमण्डितं स्पृहणीयदर्शनं समवाप्य प्रणम्य शुभा-शीरासिक्तः स्वशरीरस्य समुद्देशस्य च परिचयं ददेव भोजनसमयसूचकमपश्यत सूचनाञ्च कर्णाभरणीकृतवान् । साम्प्रतं भोजनं मम साम्प्रतम् । अन्यथा मुधैव प्रतीक्षा-पराः परे पारिवारिकाः क्षुधापूरपूरिता भवेयुः । भवांश्चाकृतभोजनो भोजनसमये समा-यातो भुङ्क्तां किमिति सत्वरं निर्णीयताम्, अकृतभोजने भवति न भवति मम भोजनं साम्प्रतम् इति व्याहरन्मनीषिमूर्धन्यः । भोजनविषये ययोक्तान् सर्वान् प्रकारान् अख-ण्डयदसौ खण्डनधुरीणः । निर्णयनिर्वचनभावमापन्ने मयि 'छपरामण्डलस्य भवते सक्तू रो-चेत' इति निर्णीय व्यवस्थाप्य स्वच्छसलिलस्थापितान् प्रस्तरदन्तान् मुखे परिधाय च सक्तुविषयमेकं संस्कृतपद्यं पठन्नेव प्रातिष्ठत महात्मा. प्राय उच्छिष्टस्यापरित्यागमभिप्रैति स्म पद्यम् । भोजनोत्तरञ्च होराद्वयं शास्त्रचिन्ता प्रावर्तत ।

अत्र वृत्ते नैतिकं धार्मिकं वा आचरणं व्यावहारिकीं वा स्फूर्तिं यथादृष्टि आलो-चयन्तु सुधियः ।

प्रायश्चत्वारिंशदधिकैकोनविंशतिशततमेश्वीयसंवत्सरः स्यात् । काशीहिन्दू-विश्वविद्यालये पूज्यचरणश्रीमदम्बिकाप्रसादोपाध्यायमहोदयानां कन्यायाः पाणि-पीडनमहोत्सवोऽभूत् । वरयात्रा च आरामण्डलात् पण्डितप्रवरश्रीरामानुजोझामहोदयग्रा-मादागता । वरस्य ग्रामीण एको न्यायशास्त्रिकक्षायाश्छात्रो वरयात्रिकपक्षात् प्रश्नकर्ता आसीत् । तत्पोषकश्च प्रस्तुतस्मृतिनायको ब्रह्मर्षिरभूत् । कन्यापक्षाच्च बहवः काशीस्थाः प्रधानपण्डिताः समवेता आसन् । तेषु कतिचन आराध्यचरणाः स्मर्तुरध्यापका अपि

उपविष्टाः। अतोऽस्य समेभ्यः पश्चादेव पदमयुज्यत, 'अनुमितिकारणीभूताभावप्रतियोगि-यथार्थज्ञानविषयत्वहेत्वाभासलक्षणस्य व्याख्या पृष्टा ? कन्यापक्षे नासीन्नैयायिकः शाब्दिका एव समे। प्रसिद्धा वादिनः श्रीपूर्णचन्द्राचार्यमहोदयाः समासव्यासपर्यायादीन् व्याकर्तुमारभन्त तद्विरसतां निरसितुं स्व० पूज्यश्रीराजनारायणपाण्डेयमहोदयैरस्याः पङ्क्तेरङ्को नामग्राहमाकारितो व्याख्यानाय, विवेचनाय आगृहीतश्च। प्रश्नकर्ता च सद्य एव व्यरमत्। पूर्वपक्षञ्च स्मरणीयो महर्षिरेव निरवहत्। सोऽयं द्वितीयोऽवसरोऽस्य शास्त्रचर्चयाऽर्चनस्य शुभाशंसाप्रसादस्वादनस्य च।

ततः परं जयपुरपटनासिटीस्थरामनिरञ्जनदासमुरारकामहाविद्यालयसञ्चालकान्यतमस्य सुतपरिणयसमुत्सवे समाहूता इमे लेखनायकाः। सहैव च तदानीं पण्डितप्रकाण्डश्रीब्रह्मदत्तद्विवेदिमहोदया अपि तत्प्रथमं वार्तालापादिना सम्बन्धिनो विहिताः। दर्शनपिपासुना लेखकेन साकं मिथिलाभाषायां प्रथमं दर्शनपुस्तकलेखको राष्ट्रपतिपुरस्कृतः श्रीयशोधरझामहोदयोऽग्रगामी मार्गदर्शको लेखनायकस्य समीपमागमत्, यवनधर्मनेता प्रसिद्धः कश्चिन्मोहमयीतः समायातो वरवध्वोः शुभकामनया आशीर्वचः प्रायुङ्क्तेति समाचारपत्रे पठित्वा झामहोदयस्तत्कृत्यं निन्दितुमनाः असकृद् व्याहरणमन्तरा नातुष्यत्। तद्विविधालापविलोपाय दर्शनीयो महात्मा इत्थमुपादिशत्—नैवं वक्तव्यम्, समयप्रवाहः सर्वत्रैवं प्रचलति। धनिकानां समुत्सवे समे महान्त आहूयन्ते सत्क्रियन्ते च। समागतेभ्य आशीर्याच्ञा नाम तेभ्यः समादरप्रदानम्। उन्नतिर्नतिश्च परस्परं सापेक्षे तारतम्यं बिभृतः। कमप्यपेक्ष्योन्नतोऽपि अन्यं प्रति नतो भवति। हृद्गतस्य विनयस्य नमनस्य च बाह्या चेष्टा अभिव्यञ्जिका। ये च सन्तो हृदयेन नता लघवश्च सन्ति ते परान् उन्नतान् गुरूंश्च कुर्वन्त्येव। अन्यथा किमपेक्ष्य नतिर्लघुता च स्यात् ? अतो बहवो बहुविधाश्च गुरवः 'यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥ इति रीत्या नैकविधैश्वर्यशालितया भगवदंशतया च के महान्तो न भवन्ति गुरवः ? नास्ति आशीर्वचो ब्राह्मणत्वस्य संस्कृतपाण्डित्यस्यैव व्याप्यम्, ममाऽपि यवनो गुरुरासीत्, किमत्र कुर्याम् इति।

एवमुक्त्वा विरते प्रवक्तृपुङ्गवे श्रोतारोऽपि स्तब्धा मूकाश्च कतिचन क्षणान् अत्यवाहयम्। कीदृशो भवति अतः परं वचनोपन्यासः ? कथं स्याद् विषयान्तरप्रसारो

वार्ता प्रसंगस्य ? कश्च कथमुत्थापयेत् प्रसङ्गम् इति चिन्ताञ्चितचेतसः सञ्जाताः सहचारिणः सचेतसः । आस्तिकस्य सुधीसुधांशोः सिंहिकासुत इव यवनो गुरुरित्यत्रावश्यं भाव्यं चमत्कारिणा रहस्यवस्तुनेति शुश्रूषुशेमुषीको लेखकः 'ममापि यवनो गुरुरिति वचसा महाकौतुकाक्रान्तान्तःकरणा वयं वराकाः' इति रीत्या विरतमेव प्रसङ्गं समचारयत् । तत्परिणामवचनानि तु इत्थं जातानि स्मरणीयमहात्मनाम् ।

सत्यमेतत्, यदा पाटलिपुत्रे मुरारकासंस्कृतमहाविद्यालयेऽध्यापनाय समुपस्थितस्तदैवात्र चिरविश्रुतस्य यवनमहात्मनः समज्ञां नैकमुखेभ्योऽज्ञासिषम् । कश्चिद्वेश्यापुत्रो बाल्यादेव विरक्तो गङ्गोपकण्ठमधितिष्ठति, मलिनकुचैलकलापः पार्श्वे शरीरे शय्यायाञ्च सञ्चरन्निर्दोषान् मोषितुमिवावसरमवलोकयन्निर्मूषकैरश्रान्तसेवकैर्ननु परिवृतः वयमेवालं तत्किमन्यैराच्छादनैः ? इति शिक्षयन्तीभिर्मक्षिकाभिः सेवितः न कुत्रापि आयाति याति, न याचते न चाटूक्तिं करोति, यदैव किमपि केनचिद् दीयते तदैव निःसङ्कोचं भुङ्क्ते । अलूनैरसंयतैश्च नखकेशैर्निर्जनवनविटप इव जनैः परिवृतोऽप्यस्ति, सिद्ध इव अतीतानागतज्ञो वाक्संयम इव सत्याशीः, पापान्वितं वचसा दण्डयति प्रहर्तुञ्चोद्युङ्क्ते, शुभायति मृदुनाऽवलोकनेन अल्पीयसा मधुरवचनेन च सूचयति इति लेखकविस्मृताभिधानेन पण्डिततल्लजेन समुत्साहितः सायं पर्यटनाय तस्य यवनमहात्मनः समीपम् अगमाव । मम सहचरसुधियं समवलोक्य कमपि अपशब्दं व्याहरत् । परं मामापादमस्तकमवलोकयन् 'हूँ काशीतः आगतः, हां पण्डितः, अस्तु, सप्तशतीपाठं कुरु' इति सावहितश्रवणाभ्यां श्रवणीयेन स्वरेण अश्रावयत् । स ध्वनिश्च धनुरिव हृदि प्रविष्टो न चिरं शशाम, शतधारान् भावान् उदस्थापयत् । धौतोत्तरीये अङ्गरक्षाशिरोवेष्टने च वेषः पण्डिततां प्रकटयेत्, काशी च पाण्डित्यप्रादुर्भावखनिरिति न तस्याः स्मरणं लोकविश्रुताया आश्चर्यभरम्, परं सर्वथाऽशिक्षितस्य हिन्दूसंस्कृत्यसंसर्गिणो रसनायां दुर्गा देवी वा शब्दो बहुमुखविश्रुत आयातु नाम परं सप्तशतीतिशब्दः कथमवातरदिति कौतुकं नाशाम्यत् । अगत्या परिशेषानुमानेन काचिद् दैवी वागियं यत्रायं निमित्तमभवदिति श्रद्धाभारो मामबाधत, प्रारब्धः सप्तशतीपाठः, भगवत्या अनुकम्पया चिरादद्यापि प्रचलति, यत् किञ्चिच्छुभं कल्याणं वा अनुभूतमनुभूयते च अन्यैरपि दृश्यते वा सर्वं तत्प्रसादप्रसूतमिति अद्यापि मम श्रद्धादेवी नवेव विजयते । न गृहीतमात्रस्य अपितु सफलमाचर्यमाणस्यास्य धार्मिककर्मण उपदेशकृतिभाक्त्वम् । तस्मिन् यवनसाधौ स्फुटम्, किमन्यदवशिष्यते तस्य गुरुतायाम् इति । तदनन्तरं द्विरेव द्रष्टुमशकदयं विदुषां विधेयः,

काश्यां ब्रह्मनालसविधे नीलकण्ठे तन्निवासगृहस्याधः कक्षायाम् प्रथमम् । द्वितीयञ्च श्री-शङ्करचैतन्यब्रह्मचारिसाहाय्येनोपरितनकक्षायामस्वस्थप्रायाणां दर्शनम् । एतावताऽस्य लेखकस्य स्मरणपादपेन परिचयगीतेन वा किं किमस्य धारणं क्वाचित्कं वा परिणतम् इति अवहितहृदयाः सहृदयाः सञ्चिन्वताम्, नानामार्गान् अनुसरन्तीं विविधं व्यङ्ग्यं बोधयितुम् आदत्तदीक्षां प्रियां व्यञ्जनाञ्च प्रसारयन्ताम् इति प्रार्थयते । फलप्रसवस्तु क्रियाकलापाधीनः परं प्रवृत्तिसाधनपरिज्ञानपरिवेषणन्त्ववश्यं कुर्वताम् भिन्नरुचीनां नानापथजुषां भवतु नामेष्टं नैकविधं तेनेष्टसाधनता दुर्बोधा, तथापि साधनपरिज्ञान-न्त्ववश्यं स्यादिति विदुषां व्यवसायो नाफलः । तथाहि—

(१) काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकमिति चिरप्रसिद्धेः फलमत्र ।

(२) एकस्मिन्नेव स्थाने अध्यापनकार्यं समारभ्य तत्रैव समापनम् काश्यां गमनन्तु काशीवासाय न तु अध्यापनवृत्तये । तत्राध्यापनन्तु आनुषङ्गिकम् ।

(३) न एते स्थानेन पदेन पूजिताः किन्तु एतैरेव स्थानं पदं च पूजामापत् ।

(४) आत्मन आत्मजस्य वा जीविकावृत्त्यै प्रतिष्ठायै वा कस्यचिन्नेतुर्नृपस्य राज्याधिकारिणो वा शुश्रूषां चाटुकारितां वा नाश्रयत् । अल्पं बहु वा यद् येन समा-दरभावेन सहर्षं दत्तं तत्प्रेम्णा अग्रहीत् ।

(५) काशीमागता एते बहूनामात्मीयानामनुरोधेन गोयनकासंस्कृतमहावि-द्यालये अध्यापनं वेतनञ्च ऊरीकृतवन्तः, दशसहस्राणि वेतनद्रव्याणि अभवन्, न ततो व्ययमकुर्वन्, अन्ते प्रियमेकलं पुत्रमुपादिशन्—काशी हि मम मुक्तिक्षेत्रं नार्जनक्षेत्रम् । अत्र समागतानि द्रव्याणि विश्वनाथनिर्माल्यभूतानि न स्वोपभोगायोपयोजनीयानि । ग्रामे शिव-मन्दिरं निर्माय सुव्यवस्थितं कार्यम्, तेषां काशीलाभानन्तरं धन्येन सुपुत्रेण तथा विहितम् ।

(६) समर्थोऽपि भ्रातुष्पुत्रं पुत्रञ्च शास्त्ररसिकं पण्डितं व्यधात्, स्वयमेवाध्यापितवांश्च

(७) समयानुसारं हिन्दीभाषायां लेखनं तत्रापि प्रश्नोत्तरविभागेन स्फुटतायै सुबोधाय च नूतनमार्गाविष्करणम् ।

किमधिकेन-एतावत्यैव चिन्तया सन्तोषविहीनस्य सिद्धान्तहीनस्य विचारस्थैर्या-भावेन दीनस्य हृदयं द्रवीभूतं किं लिखेत् इति ।

**नारायणी हरिहरे प्रथिते सुतीर्थे श्रीब्रह्मदत्तविहितार्धविलोलपुष्पा ।**
**वाचस्पतिस्तुतिसरो रसमाहयन्ती शुकावलिं वच इदं दयया पुनीतात् ॥**

# इतिवृत्तम्

श्रीकमलाप्रसादमणिः त्रिपाठी

( मणिप्रभाविद्यालयः, पटना सिटी )

**अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।**
**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥**

प्रयागेऽङ्घ्रिस्पर्शमात्रतो दुरितानि विनश्यन्तीति कथानकेन तत्पुण्यक्षेत्रसविधे 'पण्डितपुर'ग्रामे विप्रकुलकमलदिवाकरस्य स्वनामधन्यस्य वराँवमहीपतेः श्रीमहाबीरप्रसादसिंहस्य प्रधानराजपण्डितः श्री बलभद्रदत्तद्विवेदी प्रतिवसतिस्म । तस्य जगद्वन्द्या श्रीमती लक्ष्मीः साक्षाल्लक्ष्मीस्वरूपा धर्मपत्नी आसीत् । सा पुण्यमहिम्ना सप्तविंशत्युत्तरैकोनविंशतिविक्रमसंवत्सरे आषाढशुक्लपञ्चम्यां सौभाग्यशालिपुत्ररत्नमेकं प्रासूत । यस्य शिक्षाक्षेत्रे स्वकीर्तिपताकाऽनुपमाऽद्य युगेऽप्यसम्भावनी शैशवत एवोत्तरोत्तरं कुशाग्रीयां बुद्धिं, विद्याऽऽसक्तिं च दृष्ट्वा परमाह्लादपारावारन्निममज्जतुः । विद्वान् पिता बालकस्य 'हरिहरकृपालु'रिति नाम अकार्षीत् । अयं हि यथा नाम तथा गुण इति भणितिञ्चरितार्थयन् काश्यां प्रख्यातविदुषः पं० श्रीदशरथशास्त्रिणः प्रसिद्धरामाज्ञामहाशयतश्च पाणिनीयशास्त्रं परं दर्शनशास्त्रं जगद्विश्रुताद् उमापतिद्विवेदिनः नकच्छेदापरनामकादयोध्यायामध्यगीष्ट । सकलशास्त्रपारदृश्वनापि दर्शनशास्त्रे प्रकाण्डवैदुष्यमवापि । अयोध्यातः काशीमागत्य म० म० पं० श्रीराममिश्रशास्त्रिणः तर्कपुङ्गव-म० म० श्रीवामाचरणभट्टाचार्येभ्यः म० म० पण्डितश्रीलक्ष्मणशास्त्रिप्रभृतिद्रविडमहोदयपाठिभिः सार्धं वेदान्तशास्त्रप्रणाली च समधिगता । श्रीवैङ्कटेशनारायणस्य राज्याभिषेके रीवांप्रदेशं समुपगतास्तत्र शास्त्रार्थे प्रखरपाण्डित्येन महाराजं सम्मोहयन्तस्तेन पुरस्कृताः । अभिनन्दनीयवंशवर्णनं विशेषतः हरिहरचरितावलोकनेन प्रतीयत इति—यथा—

**कुमारो वादिविजयी रामस्तीक्ष्णमतिस्तथा ।**
**वाग्मी गङ्गाधरकविः कृपालौ तु त्रयो गुणाः ॥ इति ।**

पाटलिपुत्रन्न विद्याक्षेत्रं, केवलं तद्राजधानीत्यपि तु महर्षीणां केन्द्रमस्ति । बिहारोऽयम् आचार्यवर्गेऽपि वर्षव्याडिप्रभृतीनां पाणिनीयसूत्रवार्तिकप्रणेतुभर्गवतः कात्यायनस्य दर्शनशास्त्रप्रवर्तकस्य महर्षिगौतमस्य ज्यौतिषशास्त्रवेत्तुरार्यभट्टस्य च पुण्यभूरिति । तथा चैतादृशगौरवान्वितस्य विहारप्रदेशस्य दार्शनिकस्थानं पाटलिपुत्रं समाजग्मुर्गुरुवरमहाशयाः । तदानीं गुरहट्टास्थसंस्कृतविद्यालयस्य पाटलिपुत्रीयस्यान्तेवासिषु, म० म० पं०

रामावातारशर्म्माणः, विद्याभूषण म० म० पं० श्यामनारायणचतुर्वेदिनः, पं० गोपालदासशास्त्रिप्रभृतयो विराजमाना आसन्। स च गुरहट्टास्थविद्यालयः रायराधाकृष्णमहाशयेन दानवीरेण सञ्चाल्यतेस्म। बहोः कालादनन्तरं लाहौरनगरतः म० म० पण्डितश्याम-नारायणचतुर्वेदिमहोदयमानीय प्रधानाचार्यपदे प्रातिष्ठिपत्। ततः डा० राजेन्द्रप्रसाद-महोदयानामनुरोधेन चतुर्वेदिमहाशयः छपरास्थमारवाड़ीसंस्कृतमहाविद्यालये अध्यापकपद-मलंकृत्यायुर्वेदशास्त्रस्य महान्तमुपकारं कृतवान्।

तत्रैव पाटलिपुत्रे मनसुखरायमुरारकाश्रेष्ठिना स्थापितो द्वितीयो विद्यालयः चौकभागे स्थापितः। अत्र पण्डितसुरेशदत्तमिश्रमहाशयः प्रधानाध्यापक आसीत्। तेन च साकं विविधविषयकशास्त्रार्थे मण्डपालङ्कृतान् विदुषः सम्मोहयद्भिर्गुरुभिर्बहुमानमवापि। ततोऽध्यापकः श्रीसुरेशमिश्रो महाशयः यदा बहोः कालात् परं गृहान्न्यवर्तत तदा मनसुखरायमुरारकाश्रेष्ठी सानुनयं गुरुमहोदयं प्रधानाध्यापकपदं विभूषयितुं प्रार्थयामास। श्रीगुरवोऽपि तं गृहात् अनागतं समीक्ष्य तदीयां प्रार्थनां स्वीचक्रुः। ततः श्रेष्ठि-मनसुखरायमुरारकामहोदये दिवङ्गते विद्यालयकार्यभारवहनेऽसमर्थे तत्पुत्रे तद्भ्राता श्रीरामनिरञ्जनदासमुरारकाविद्यालयभारं गृहीतवान् यथाकालं गुरूणामुपदेशेन आदेशेन च विद्यालयोऽयं श्रेष्ठिश्रीरामनिरञ्जनमुरारकामहोदयेन महाविद्यालये परिणतीकृतः। तत्रैव च महाविद्यालये पञ्च विद्वाँसोऽपि न्ययोजिषत। अध्यापनकलया श्रमेण च योग्यतमा विद्वांसः श्रीकमलाप्रसादमुरारकाश्री महावीरप्रसादमुरारकाप्रभृतयः नियोजिताः सन्तो महाविद्यालयस्य परां प्रख्यातिं सम्पूर्णभारतेऽपि चक्रुः। दुर्दैववशाच्छ्रेष्ठि-महोदये दिवङ्गते तत्पौत्रप्रपौत्रा अपि सुचारुरूपतया कार्यं प्रचालयन्तीति ते धन्यवादार्हाः। गुरुमहोदयानां प्रेरणयैव जयनारायणमनोहरदाससंस्कृतविद्यालयः रामप्रतापकमलियाविद्यालयः, गुरुहट्टास्थमणिप्रभा आयुर्वेदविद्यालयश्चेति प्रतिष्ठापिता इति यत्रायुर्वेदविद्यालये साम्प्रतमप्यध्याप्यते मयेति।

पूज्या जननी सर्वसाधनसम्पन्नाऽपि गोब्राह्मणसेवापरायणा पातिव्रत्यधर्मानुष्ठान-शीला छात्रान् प्रति बहुवात्सल्यान्विताऽऽसीदिति। द्वादशाधिकैकोनविंशतितमात् खृष्टाब्दात् प्राग्विहारवङ्गोत्कलैतत्त्रितयसंयुक्त एकः प्रान्त आसीत्। अतस्तत्र परिषत्स-सदस्याः सन्तः संशोधकवर्गीयप्रेक्षावतः स्वशास्त्रार्थप्रतिभया, विलक्षणपाण्डित्येन च श्रीगुरवः सर्वान् समतूतुषन्। भवत्समकालीना म० म० परमेश्वर झाः, म० म० मुरलीधर झाः, म० म० मुकुन्द झाः, म० म० रामवतारशर्म्मा, इत्यादयः प्रेक्षावन्तो विराजमाना



ऊपर से पंक्ति २, बायें से १. श्रीगङ्गाधरमिश्र २. श्रीब्रह्मदत्तद्विवेदी ३. म० म० श्री हरिहरकृपालु द्विवेदी ४ श्रीनन्दप्रसाद चतुर्वेदी ५. श्री श्रीकान्त द्विवेदी
पंक्ति ३, बायें से १. श्रीरामशरणपाठक २. श्रीनागेन्द्रोपाध्याय ३. श्रीवलिराजचतुर्वेदी ४. श्रीरमाकान्तद्विवेदी ५. श्रीरामाश्रयमिश्र ६. श्रीसीतारामिश्र

आसन्। भवतामनेके शिष्याः राजकीयमहाविद्यालयेषु विद्यालयेषु च प्राचार्यप्राध्यापक-प्रधानाध्यापकपदाद्यासीनाः प्रख्यातवैदुष्या अद्यापि भूषयन्ति इमां भारतभूमिम्। गृहस्था एव न केवलमपि तु महान्तः संन्यासिनः मण्डलेश्वराश्च मनीषिणोऽभूवन्। पूज्यपादाः पुरीस्थशङ्कराचार्यपीठमधिष्ठिताः श्रद्धेयाः श्रीनिरञ्जनदेवतीर्थमहोदयाः गार्हस्थ्यसमये एभ्य एव वेदान्तशास्त्रमधीतवन्तः। षोडशाधिकैकोनविंशतितमे सप्तदशाधिकैकोनविंशतितमे च खृष्टाब्दे प्लेगरोगस्य व्यापकतया प्रसारेण द्वितीयस्तनुजो ब्रह्मवर्चस्वी श्रीमदुमादत्तः कालकवलितत्वमुपगतः। तेन च वयं शिष्याः अन्ये च समे शोकविह्वला अभूवन्। भवदध्यापितो भवत्तनूजः श्रीब्रह्मदत्तद्विवेदिमहोदयः अनेकशास्त्रपारंगतः श्रीरामनिरञ्जनदासमुरारकासंस्कृतमहाविद्यालयस्य प्राचार्यपदमलंकरोति। इतः पूर्वं दशवर्षाणि यावत् पाटलिपुत्रस्थराजकीयसंस्कृतमहाविद्यालये प्राध्यापकपदमलङ्कृत्यावकाशमलभत। भवद्भ्रातृव्यः श्रीश्रीकान्तद्विवेदी अत्रैव महाविद्यालये साहित्यप्राध्यापकपदासीनः, तृतीयः भ्रातृव्यः श्रीरमाकान्तद्विवेदी सीतामढीस्थ-गोयनकामहाविद्यालयस्य हिन्दीविभागाध्यक्षपदासीनश्च स्तः। भवदीयः प्रथमः पौत्रः श्रीवाचस्पतिद्विवेदी एम० ए० (संस्कृत-हिन्दी) एम० एड्, साहित्याचार्यः आरास्थमहाराजकालेजस्य संस्कृतविभागाध्यक्षः द्वितीयः पौत्रः श्री काशीपतिद्विवेदी, बी० एस्-सी० गोरखपुरस्थ यान्त्रिकविभागाधिकारी तृतीयश्च श्रीविद्यापतिद्विवेदी बी० एस-सी० परीक्षायामध्ययनशीलश्च सन्ति। गुरवस्तु लेखे शास्त्रार्थे च प्रसिद्धिं प्राप्तवन्तः। एभिः शाबरभाष्यस्य कल्पकलिकानाम्नीं टीकां महाराजाधिराजश्रीरमेश्वरसिंहस्य प्रशस्तिरूपां रमेश्वरकीर्तिकौमुदीं निर्माय चिरस्थायिनी कीर्तिरर्जिता पुरस्कृताश्च भूयोभूयः महाराजाधिराजैः दरभङ्गानरेशैः। गीतामधुसूदनीटीकायाः बृहदारण्यकवार्तिकसारस्य भाषानुवादो न्यायकुसुमाञ्जलेः संस्कृतव्याख्या च व्यधायि। म० म० श्रीश्यामनारायणचतुर्वेदिमहोदयेन निर्मिते सन्ध्याभाष्ये एका भूमिका गुरुवर्यैर्लिखिता। तया च सुस्पष्टं पाण्डित्यं प्रकटी भवति। एकदा पटनासिटीस्थकिलाभवने दीवानबहादुररायबहादुरराधाकृष्णजालानमहोदयानां निवासभूते, महापण्डितः प्रतिवादिभयङ्कराचार्यः समागतः। तत्र गुरुवरैस्सह शास्त्रीयवार्तालापक्रमे आत्मनः पक्षस्य न्यूनतामाकलयन् वैष्णवाचार्यं विद्वांसं साश्चर्यं विदधत् प्रेम्णा गुरुवरान् विविधसामग्रीभिः सत्कृतवान्।

अन्तिमे वयसि सर्वतीर्थयात्रां सम्पाद्य काशीवाससंकल्पमकार्षुः। ततो गृहभारं महाविद्यालयकार्यभारञ्च पुत्रे संस्थाप्य विश्वनाथपुरीं काशीमगमन्। तत्र च सुखेन निव-

सन्तः संन्यासिनो विदुषश्च स्वावास अध्यापयन्तः स्वीयपाण्डित्यप्रकर्षेण तत्रत्यान् विदुषश्चमत्कुर्वन्तः आसन् । गौरीशङ्करगोयनकामहाशयेन मुहुर्मुहुः प्रार्थिताः प्रधानाध्यापकपदमधिष्ठाय इतः प्राप्तानि द्रव्याणि सर्वाण्येव भगवतः शङ्करस्य मन्दिरनिर्माणे तत्पूजाव्यवस्थायाञ्च व्ययीभविष्यन्तीति मनसि समकल्पयन् । तत्संकल्पितादशा दशसहस्रमुद्राभिः भगवतः शिवस्य मन्दिरं तत्तनूजेन स्वग्रामे पण्डितपुरे निर्मापितम् । बिघात्रयपरिमिता भूमिः पञ्च सहस्रमुद्राश्च तदर्चनादिव्यवस्थायै संरक्षिताः सन्ति । तेनैव चाद्यापि मन्दिरकार्यं सुचारुतया चलति चलिष्यति च ।

विहारप्रान्तीयदीक्षान्तसमारोहं विशिष्टातिथिभिः श्रीराज्यपालोपकुलपत्यादिभिः संपत्स्यमानं सम्पादयितुं गुरवो दरभङ्गाधिपतिना श्रीकामेश्वरसिंहमहोदयेन अनुरुद्धाः दीक्षान्तभाषणाय । ततः तादृशानुरोधेन गुरुभिर्दीक्षान्तभाषणं सम्पादितम् । तदर्थं एकोत्तरसहस्रमेकमुपहाररूपेण तेभ्यः समर्पितम् । दीक्षान्तसमारोहे जातं तद्भाषणमवश्यं प्रकाशनीयम् ।

विविधशास्त्रप्रतिपादनपराः उच्चतमपदासीनाः प्रेक्षावन्तः स्वस्वशास्त्रविषयशङ्कामपनेतुं श्रीगुरुमहाशयान्निकषा आगताः समुचितोत्तरमाकर्ण्य प्रसन्नचेतसः परावर्तन्त । श्रीपुरुषोत्तमदासटण्डनमहोदया अपि कर्मणा जन्मना वा जातिः इति शङ्कामपनेतुमागताः समुचितोत्तरेण प्व सन्तुष्य परावर्तन्त ।

अन्ते च सोपाधिशरीरं चैत्रकृष्णनवम्यां २००६ संवत्सरे ( २३-३-४९ ई० ) काश्यां राधाकृष्णमन्दिरे नीलकण्ठोपकण्ठं तत्यजुः । तत्कलेवरमोचनात्प्रागहमपि तत्समीपमागत्य प्रणमन् तदीयं शुभाशीर्वादं प्राप्तवान् । गुरुदेवस्य शवयात्रायां हिन्दूविश्वविद्यालयस्योपकुलपतयः, कुलसचिवाः, विद्वांसः, संन्यासिनः, उच्चाधिकारिणो जनाश्च सम्मिलिता अभूवन् । तेषां संस्कारसमये विद्यालयाधिपतिः श्रीसोहनलालमुरारका महोदयोऽप्यकस्मादागत इति प्रेम्णो विचित्रा गतिः । मण्डलाधीशस्य ( कलक्टर ) अनुमतिं प्राप्य मणिकर्णिकास्थविष्णुपदस्थाने तदीयदाहसंस्कारः तत्पुत्रेण श्रीब्रह्मदत्तद्विवेदिमहोयेन सम्पादितः इति यशश्शरीरान् तान् एभिरेव वचोभिः संस्मरन् पूणमँश्च विरमामि ।



# गुरुसंस्मरणम्

## श्रीरामानुज ओझाः प्राचार्यः

( बिरलासंस्कृतमहाविद्यालयः, ललघाट, वाराणसी । )

दुःखादीनां हेतुहेतुमद्भावः संसारः। स च पूर्वोत्तरकालानियमादनादिः । अधर्मारब्धशरीरावच्छेद्यं दुःखम् । तद्विपरीतं धर्मारब्धशरीरावच्छेद्यं सुखमिति मन्तव्यम । विविधभावभाविते विलक्षणस्वरूपे संसारे सर्वोपि निरन्तरं सुखावाप्तये दुःखविनाशाय च यतते, परं विचारणीयमस्ति यद् दुःखं संभवति कस्मात, किमाकाशान्निपतति उत भूतलं विदार्य निःसरति ? विचारपारावारे निमज्ज्य यावत प्रज्ञया विविच्यते तावदिदमेव सिद्धान्तभूतं तत्त्वं निःसरीसर्ति यद् दुःखस्य निदानं शत्रुरिति ।

व्याधिरूपेभ्यः शत्रुभ्यः शारीरं दुःखम्, कामक्रोधादिभ्यः शत्रुभ्यो मानसं दुःखम्, प्रतिकूलाचारिभ्यः प्राणिभ्यः शत्रुभ्य एवं बाह्यापाति दुःखम् , इत्थं च समेषां दुःखानां जनकत्वं शत्रौ, शत्रुनिष्ठजनकतानिरूपितजन्यता दुःखेष्विति निष्प्रत्यूहः पन्थाः ।

इदमत्र तत्त्वम्—साधर्म्यवैधर्म्याभ्यां वस्तुनिरूपणम् । इदमत्र तत्त्वम्—साधर्म्यं समानो धर्मश्चन्द्रवन्मुखमित्यादौ सौन्दर्यमाह्लादकत्वं वा साधर्म्यं मुखचन्द्रयोरिति सर्वैः सुज्ञेयम् । वैधर्म्यं विरुद्धो धर्मः पाकस्थले यथा श्यामघटवैधर्म्यं रक्तघटे । एतादृशमेव वैधर्म्यं सुखदुःखयोरिति सुप्रसिद्धमेव । यदा दुःखनिष्ठजन्यतानिरूपितजनकत्वं शत्रौ तदा तद्वैधर्म्यान्मित्रनिष्ठजनकतानिरूपितजन्यता सुखे बलादापतति । एवं च शत्रुरेव यदि मित्रतां गच्छेद् वशवर्तितां च लभेत तदैव सुखसंभावना नान्यथा, क्रोधादीनां वशीभूते मनसः शुद्धत्वे मानसदुःखनाशः शान्त्या परमसुखलाभश्च, रोगाणामोषधिप्रभावमहिम्ना वशवर्तितया व्याध्यपगमे नैरुज्यरूपसुखलाभः । अरीणामपि देहिनां मित्रतायामुपगतायां वशंवदतायां सम्पन्नायां सर्वथेष्टसाधकतयाऽनिष्टनिवारकतया चेष्टसिद्धौ सुखमेव सम्पद्यते । परं कथमरयो मित्रतामुपगच्छन्ति कथं वशवर्तितां यान्ति इति— गवेषणाविचिकित्सासहचरी सद्यो जागर्ति ।

अत्रैकमेव समाधानं यत—गुणगणेन, येन सुधिया धिया विचार्य स्वगुणाधानैकतानता प्रतन्यते तस्य शत्रवोऽपि स्वविभूतये प्रपन्नाः सन्तो मित्रतां यान्ति वशवर्तिनो जायन्ते इष्टं साधयन्ति अनिष्टन्निवारयन्ति, छायावदनुसरन्ति च। एतस्मान्मानवैः स्वगुणा-

धाने प्रवृत्तिमद्भिर्भाव्यम् यतो हि गुणा एव शत्रूणामपि मित्रत्वापादने सर्वसुखसाधने च समर्था इत्यंशे नास्ति कश्चित् विचिकित्सालेशः।

गुणाहि चारुविचारचातुरीपरीतरीतिव्यवहारानुसन्धायकाः, सदाचारसमाधायकाः, कमनीयकीर्तिकामिनीकेलिकलापप्रकाशकाः, सकलविकलताविनाशकाः, पुरुषार्थचतुष्टय-सम्पादकाश्चेति मन्तव्यम्। महतां चरित्रचित्रणमात्मकल्याणाय न तत्प्रशंसायै—इति मनसि निधाय किमपि वक्तुमुपक्रमे।

त्रिवेणीतटादवाच्यां समस्तशस्तप्रतिभाविभासितेन धाराधराख्येन सुधिया चतुर्भिः क्रोशैरन्तरितः पण्डितपुर इति नाम्ना प्रसिद्धः सद्वाटिकाभिः सुललितो द्विजातिमयो ग्रामः संस्थापितः। तस्मिन्नेव श्रीगुरूणां जनिरभवत्। प्रयागमण्डलसुप्रसिद्धवराँवराज्याधिपतेस्सभा-पण्डितः गुरूणां पितामहः श्रीविश्वम्भरदत्तः आसीत्। तत्सकाशादक्षरारम्भं विधाय स्वीय-पितुः पार्श्वे पण्डितप्रवरश्रीबलभद्रदत्तकृतिनः व्याकरणशास्त्राध्ययनारम्भं कृतवन्तः। पण्डितश्रीबलभद्रदत्तद्विवेदी वरांवराज्यस्थितेषु पण्डितमण्डलेषु प्रधानपण्डितपरिनि-ष्ठितो यशस्वी चाभवत्। पितुः पार्श्वे स्वाध्यायावरोधककर्मबाहुल्यमभिलक्ष्य पिपठिषायाः प्राबल्येनायोध्यामगमन् गुरुवर्याः। तत्र च पण्डितप्रकाण्डवैयाकरणशिरोमणिश्रीरामाज्ञा-पादपद्मसेवया व्याकरणं तत्कालीनाद्वितीयसर्वतन्त्रापरतन्त्रोमापति( नकछेदराम )शास्त्रिणः सकाशात् प्राचीननवीनभेदभिन्नन्यायशास्त्रमधिगतवन्तः। स्वाभिख्यानुरूपं हरिनगरमलंकृत्य हरनगरीं स्वीयाध्ययनव्याजेन क्रमशः समलंचक्रुः। वाराणस्यां च श्रीराममिश्रमहोदयेभ्य उभयविधवेदान्तशास्त्रस्याध्ययनं सम्पन्नमिति कर्णाकर्णिकया श्रुतमेतन्मया। मन्ये श्रीहर्षो-क्तदिशा, विद्यासु सिद्धमपि चतुर्दशत्वमधीतिबोधाचरणप्रचारणैः चतुर्दशत्वमानेतुमेव धर्मधुरन्धरस्य श्रद्धाभक्तिदयादरादिगुणगणविशिष्टस्य शिष्टस्य श्रीरामनिरञ्जनदास-मुरारकामहोदयस्य पाटलिपुत्रस्थे महाविद्यालये पदवाक्यपुरःसराणि षड्दर्शनानि बहुकाल-मध्यापितानि शुभशीलताभवैर्यशोभिर्भासितैः सुभावप्रथितात्मगौरवैः श्रीमद्भिरस्मद्-गुरुवर्यैः। प्रातःस्मरणीयाः सुगृहीतनामधेयाः श्रीहरिहरकृपालुद्विवेदिमहोदया अनन्यसामान्यमाधुर्यधुराधरां जन्मवसुन्धरां तिरस्कृत्य अपुनर्निवर्तिनः कौमारस्य विश्रृङ्ख-लप्रवृत्तिमधुराः क्रीडाः परित्यज्य मातापित्रोः स्नेहहस्तोपनेयान् जन्मभुवः निसर्गास्वादहृ-दयंगमान् भोगान् दूरीकृत्य सर्वतः प्रसारिणीं मनोवृत्तिमेकत्रीकृत्य जीवनयात्रारथरूपं

शरीरमप्यवगणय्य केवलं स्वातन्त्र्याभिलाषिणः सर्वाभिलषितं सुखमपि निरन्तरशास्त्राभ्यासपरिश्रमदुःखेन परिवर्त्य सर्वतोभावेन विजयन्तेतराम् ।

तथ्यमेतत्-"दानेन लक्ष्मीर्विनयेन विद्या, नयेन सिद्धिं सुकृतेन जन्म । परोपकारक्रियया-ऽपि कायः कृतार्थ्यते येन नरः स धन्यः" इत्यविकलम् दृग्गोचरीभूतम् । किंच यो हि यत्र निःसीमानुरागवान् स तदधिगन्तुं यथाशक्ति यावज्जीवमेव चेष्टामनुतिष्ठति तदनुकूलमेव सर्वोपि स्वीयानुरागविषयं सुखमाप्तुं परितो विश्वं बम्भ्रमीति । परं साधनान्तरानधिगमे काञ्चिन्न काञ्चित् वृत्तिमेवाऽवलम्बते यया प्रवर्तमानः सुखं जीवनयात्रामतिवाहयितुं शक्नुयात् । ताश्च वृत्तयोऽपरिगणनीयाः, तथाहि कृषिवृत्तिः, योद्धृवृत्तिः, व्यापारवृत्तिः, शिल्पवृत्तिः, अध्यापनवृत्तिः, संगीतवृत्तिः, तान्त्रिकवृत्तिः, कथावाचकवृत्तिः, पुस्तकलेखनवृत्तिः, तपस्विवृत्तिः, पुरोहितवृत्तिः, वैद्यवृत्तिः, दैवज्ञवृत्तिः, भिक्षावृत्तिरित्यादयो न शक्यन्ते संख्यातुम् । किन्तु सर्वास्वपि वृत्तिषु प्रयत्नेन सन्धार्यमाणा निःस्नेहा निष्फला च सन्ततिरिव समग्रतापानामुत्पत्तिस्थलीव चिन्ताविषव्रततीनाम्, चण्डवात्येव यशःपताकापातिनी किं बहुना पुरुषार्थचतुष्टयस्यापि नाशिनी सेवारूपा वृत्तिः सर्वथा निन्द्यैवेति विद्वांसो विजानन्ति । अध्यापनवृत्तौ वर्तमाना अपि गुरवः स्वीयं स्वरूपं परितः पालयाञ्चक्रुरिति सुप्रसिद्धमेव ।

श्रूयते यन्मिथिलायां शास्त्रार्थप्रसंगे यत्र महाराजाधिराजश्रीलश्रीरामेश्वरसिंहमहोदयानां साभापत्ये मैथिलपण्डितैः कोलाहलोऽकारि । एतादृशीं दुर्व्यवस्थामवलोक्य सपद्येव पद्येनैवोक्तं गुरुवर्यैः "अयं मदीयो न परो मदीयो नायं विवेको निपुणः प्रभूणाम् । अथापि भेदो यदि मादृशेषु वामो विधिः किं करवै रवैर्नः" ।

"नायं कामयतेऽन्यतोऽर्थकणिकान्न क्लीबकल्पां कृपाम् । कामं कामयते विचारसहितं वाचां प्रचारं चिरम्" ।। इत्यादिच्छन्दोमयीं धाराप्रवाहेण वाक्परम्परां निशम्य शास्त्रार्थविजयिनः श्रीहरिहरकृपालुद्विवेदिनोऽपि सर्ववेदिन इत्युद्घोषणां चक्रुः श्रीरामेश्वरसिंहमहोदया मिथिलामहीमण्डनभूता महाराजाधिराजाः ।

चतुःषष्टिपरिमिते वयसि निखिलगौरवभाजनभूतप्रतिष्ठासन्दोहं समुत्पाद्यैहिकामुष्मिककल्याणाधायकपरमपुरुषार्थोपधाय धर्ममहिम्नां गुरुवराणामन्तःकरणेऽतुलशक्तिसनाथविश्वनाथनगरीं संश्रयितुं प्रबलेच्छा प्रादुर्भूता । ततश्च श्रीमतो रामनिरंजनदाससुरारकामहोदयस्य ज्येष्ठं श्रेष्ठगुणोपेतं तनयं श्रीहीरालालमुरारकामहोदयम्प्रति स्वीयाभिलाषं

प्रकटीचक्रुः । श्रीहीरालालामहोदयः श्रेष्ठिप्रवरो "विद्यालयस्य यथा क्षतिर्न भवेत्तथा प्रबन्धं विधाय यत्र भवतामभीष्टसिद्धिस्तत्र निवसन्तु भवन्तः । भवद्भ्यश्च पंचाशद् मुद्राः प्रतिमासं सेवारूपेण वयं प्रदास्यामहे" इति प्रतिजज्ञे । गुरुवराश्च तान् भ्रातृवर्गान् श्रीहीरालालप्रमुखान् स्वाशिषा संयोज्य सन्तोष्य च काश्यान्निवासाय दृढसंकल्पा बभूवुः ।

ततश्च मन्दीकृताखिलतापं प्रकटितपुण्यकलापं निखिलप्रीतिभाजनम् सहजमधुरया धिया सुधाप्रवाहमिव वाक्सन्दोहं सृजन्तं सर्वहितसंवादिनं प्रियवादिनं शास्त्राभ्यासजनितचिन्तातान्तानामपि झटिति विषादं व्यपनयन्तं स्वीयापरमूर्तिमन्तं स्वतनयं सुगृहीतनामधेयं श्रीब्रह्मदत्तद्विवेदिनं ( विहारप्रान्तप्रसिद्धबाबामहोदयं ) स्वस्थाने संस्थाप्य परितो ममतां परित्यज्य तीर्थराजे प्रयागे माघमासं यावत् कल्पवासं चक्रुः । हिमालयविगलितहिमनिर्झरिणीं सुरदीर्घिकामसेवन्त च ।

शिवस्य शिवेव, विष्णोः पद्मेव, ब्रह्मणः सरस्वतीवात्रेरनसूयेव गुरूणां धर्मपत्नी जननीव ततोऽप्यधिका वा शिष्याणां विषये सुतनिर्विशेषप्रीतिमादधती तीर्थयात्रायां प्रयागकल्पवासे वाराणस्यां चानुगामिनी बभूव ।

गुरुस्तु शंकरः साक्षाज्जननी चापि पार्वती ।
दयायां गुरुपुत्रोऽपि कार्तिकेयो न संशयः ॥
सिद्धः श्रीमदशेषविश्वविदुषां मान्यो वदान्यो महान्,
सद्धर्माचरणप्रचारचतुरो विद्यानवद्याशयः ।
सर्वज्ञाननिधिर्विवेककुशलो विख्यातकीर्तिव्रजः
शास्त्राभ्यासपरः सदा विजयते श्रीब्रह्मदत्तो गुरुः ॥

बाबामहोदयः पुत्रकलत्रमित्रबान्धवधनधान्यादिपरिपूर्णोऽपि विनयप्रभावाकृष्टयथापेक्षितसहायानुगतः सुधापूरो द्विजराज इव सर्वान् छात्रान् पण्डितांश्च शास्त्रवैशिष्ट्येन वशीकृत्य पित्रनुरूपमेव सर्वं कौशलमादधानो गवर्नमेंटसंस्कृतमहाविद्यालये साम्प्रतमपि विराजतेतमाम् ।

श्रीगुरूणां गुरुपुत्राणां च तपःप्रभावात् त्रिदेवा इवैकैकतोऽधिकास्त्रयः पौत्रा अपि विद्यन्ते । तेषु प्रथमः श्रीवाचस्पतिद्विवेदी प्राच्यप्रतीच्योभयविद्यानिष्णातः स्वभावगम्भीरः स्वीयवंशपरम्परानुरूपः सर्वांशतः सुयोग्य आरानगर्यामांगलमहाविद्यालये संस्कृतविभागाध्यक्षः सन् वरीवर्ति । अवशिष्टावपिद्वौ ( काशीपति, विद्यापतिमुनिराज-हंसराजसंज्ञकौ )

विशदगुणैरनुबद्धौ प्रशंसाभाजनतामुपगतौ सर्वथाऽऽदरणीयावादर्शजीवनवत्तां प्रतिपन्नौ विद्येते ।

गुरुवराणां कनिष्ठभ्राता परमानन्दसद्यशःसाधननिपुणः श्रीरामकृष्णद्विवेदी लीलयैव सत्पथप्रवृत्त्युत्पादकश्चारुविचारसम्पादकः प्रशान्तिसंभारः स्वकुलालंकारो वर्तते ।

तदीयतनयौ पुष्पवन्ताविव विभ्राजमानौ स्तः । ज्येष्ठः श्रेष्ठगुणोपेतः श्रीकान्त-द्विवेदी विशुद्धहृदयोऽनुपमगुणगणसम्पन्नः प्रियवचनप्रयोगशमितामर्षः प्रधानाचार्य-तामुपगतः निखिलबुधगणसम्मानितो मुरारकासंस्कृतमहाविद्यालये प्रतिवसति । द्वितीयोऽपि स्वगुणगरिम्णाऽद्वितीयः श्रीरमाकान्तद्विवेदी प्राच्यप्रतीच्योभयविधभाषाऽभिज्ञो मिथि-लामण्डनभूतांऽगलमहाविद्यालये विभागाध्यक्षतां बिभर्ति ।

अनयोस्तनया अपि तत्र तत्र प्रसिद्धतमस्थाने प्रतिष्ठिता विराजन्ते ।

एतत्सर्वं गुरुवराणां तपःप्रभावात्तदीयवंशपरम्परायां विद्याया रमायाश्च सामंजस्य-मेकत्र सुसम्पन्नमित्यहम्मन्ये । यद्यपि गुरुवराणां चरित्रचित्रणं मादृशां मन्दबुद्धीनामगम्यम्, तथापि पादप्रक्षेपाऽसमर्थोत्साहसम्पन्नबालक इव स्खलन्नपि स्मारं स्मारं यत् किंचिदु-द्धरामि ।

एकदा वाराणस्यां समेषां सुप्रसिद्धविदुषां समवाये पण्डितसभायां किन्नाम विषय-त्वमिति विचारे यदा गुरुवर्याणां-सुधारसक्षालितवाक्प्रवाहः समजनि तदा परमतदलन-प्रख्यातवीर्यपण्डितवरेण्यश्रीचण्डीप्रसादशुक्लमहोदयादिभिः सर्वैर्विद्वद्भिः साधुवाद-पुरस्सरं गुरूणामुक्तिः समर्थिताऽभवदिति मया साक्षात्कृतम् । अगाधगाम्भीर्या, अपरि-मितधैर्या, उद्भटशौर्या, वशीकृतकामक्रौर्याः शास्त्रविद्यागुरवो मदीया अद्वितीया ज्ञानिनः सन्तोऽपि प्रखरतरार्जुनशरैरिव तुलितवाक्प्रबाहैः शास्त्रार्थहवे समेषां विदुषां मनांसि समतूतुषन् विजयिनश्चागीयन्त ।

एकाऽपराऽपि वार्ता स्मरणीया यत्तेषां भौतिकसंसारं परित्यज्य लोकान्तरप्रयाणकालतः पूर्वस्मिन् काले यदा गुरुवर्याणां नेत्रसम्मीलनमभवत्तदा गुरुवराणां दर्शनार्थं प्रायः सर्वे पण्डिताः समागमन् । तस्मिन्नवसरे पण्डितकमलाकान्तमिश्रः स्वनामधन्यगुरुतनयश्री-ब्रह्मदत्तद्विवेदिप्रभृतयस्तत्रासन् । अहमपि तादृशीं दशामवलोक्य खिन्नहृदयो गुरूणा-मावासगृहकोणकुहरे वर्तमानश्चासम् । पण्डितप्रवरकमलाकान्तमिश्रमहोदयैरहमाज्ञप्तो यद्

'गीतां श्रावय' तदीयाऽज्ञायाः पिपालयिषया गीतायाः प्रथमं पद्यं 'धर्मक्षेत्रे कुरुक्षेत्रे' इत्युदचीचरम्। तदा गुरुवर्यैः स्वीयनेत्रे विस्फार्य बोधितोऽहं यत् 'श्रवणं मननं चास्माकं सम्पन्नन्निदिध्यासनं क्रियते। नास्त्यावश्यकता कस्यचित् पाठस्य।' अहो वैशिष्ट्यम्!! स्मरणीयः स कालः, यदास्माभिः श्रीनीलकण्ठप्रसिद्धराधाकृष्णमन्दिरस्य प्रांगणे प्रासादादवतार्याधो भागे गुरवः संस्थापितास्तदोक्तं गुरुवर्यैः 'ब्राह्मण आयाति' तदुक्तेः पञ्चपलात्मककालोत्तरमेवोपगीयमानकीर्तिकलायाः प्रशस्तसँल्लापः पूज्यपादाः शंकराचार्यमपि स्ववाक्परम्परया विडम्बयन्तः श्रीकरपात्रिवर्याः समुपस्थिता अभवन्। मातरं ( गुरुधर्मपत्नीं ) चाश्वास्य सद्यः परावर्तन्त। कियत्क्षणानन्तरमेव ऐहिकीं लीलां समाप्य ते श्रीगुरुचरणाः सायुज्यमभजन्। रात्र्या दशवादनवेला चासीत्। तदानीमेव दूरभाषयन्त्रेण ( टेलीफोन ) मण्डलाधीशः ( कलक्टर ) दुःखदं समाचारमाकर्ण्य अतिखिन्नमनाः किमिदमापतितं सत्यमिति अपृच्छत्। सत्यमिति बोधयित्वा मणिकर्णिकाघट्टस्य विष्णुपादे दाहसंस्कारो भवेत् तथा भवद्भिः निर्देष्टव्यो ऽधिकारीत्यहमकथयम्। स जिलाधीशः तथैव भविष्यतीति कथयित्वा दुःखितो व्यरमत्।

काशीस्थाः प्रायेण सर्वे विद्वांसः हिन्दूविश्वविद्यालयोपकुलपतयः कुलसचिवमहोदया अन्ये अधिकारिणः, संन्यासिनः, श्रेष्ठिनः शवयात्रायां सम्मिलिता आसन्। इत्येवं चैत्रकृष्णनवम्यां २००६ तमे संवत्सरे ऐहिकी लीला समापत्। किं बहुना बह्वी घटना गुरूणामाश्चर्यकरी लोकोत्तरा। नहि मयि तादृशी शक्तिर्नवा तादृग् वैदुष्यम् येन तान्तां घटनां वर्णयेयम्। अन्ते च—

ज्ञानसृष्टिजब्रह्मत्वं विष्णुत्वं पालनेहया।
माननाशजशम्भुत्वं सिद्धं तं यत्र संस्तुवे॥



# संस्मरणम्

श्रीवंशीधरमिश्रः, प्राध्यापकः,

( राजकीयसंस्कृतमहाविद्यालयः, भागलपुरम् । )

अस्ति महाकविदण्ड्यादिवर्णितप्रशस्तसमस्तनगरीनिकषायमाणत्वादिबहुगुणगणा भगीरथरथखातावच्छिन्ननिर्झरसीकरसंपृक्तपवनपरिपूतप्रान्ता, भगवद्वर्षोपवर्षव्याडि-पाणिनिकात्यायनपतञ्जलिप्रभृतिशास्त्रकारकृतशास्त्रपरीक्षण-विचारा, मुद्राराक्षसकाव्याऽव-लोकननिवेदितचाणक्यचन्द्रगुप्तराक्षसमन्त्रिराजनीतिचमत्कारप्रचारा, मगधदेशशेखरीभूता पाटलिपुत्राऽपरपर्याया 'पुष्पपुरी'नाम नगरी ।

तत्र बृहस्पतिरिव देवसभायाम् , वसिष्ठ इव दाशरथिपरिषदि, कालिदास इव विक्रमादित्यसमितौ, हरिरिव शाकद्वीपे, हर इव कैलासशिखरे, श्रीमान् हरिहरकृपालु-द्विवेदिमहोदयः सर्वतन्त्रस्वतन्त्रो महामहोपाध्यायः प्रतिवसतिस्म ।

कलिकालकलया वा सृष्टिस्वभावाद् वा कालक्रमेण क्षीणतामुपगतेऽपि प्रोक्तसकलसौन्दर्य-कलापे सा नगरी यस्य निवासेन भगवत्पाणिन्यादिशब्दाचार्यवियोगजन्यं न विवेद वेदनागन्धं स्तोकमपि । अपि च यं समासाद्य विद्वद्वृन्दवन्दितचरणारविन्दयुगलं सगर्वः शिष्यलोकः परीक्षिदिव शुकदेवं ततः संगृह्णन् विद्यां परमं सन्तोषमभजत । अहमपि स्वकीये परमलघुमञ्जूषावंशीव्याख्याने यस्य रमणीयां सम्मतिं संप्राप्य अतीव समतुष्यम् । सोऽह-मेकदा यस्य दर्शनाय स्पृहयन् काश्यां सविधे भूत्वा कृतकाशीवासं, शरपर्यङ्के शयानं, भीष्ममिव स्वर्गमनाय दिवसान् गणयन्तं, काष्ठपर्यङ्के शयानं यं महाशयं समपश्यम् । श्रीब्रह्म-दत्तद्विवेदिनो मुखात्—'वंशीधरजीवः समागतः । प्रणमति भवन्तम्'' इति श्रुत्वा येन दत्तां हस्तसञ्ज्ञया शुभाशिषं प्राप्य कृतार्थश्चाऽभवम्, स सकलशास्त्रपण्डितनरेन्द्रः श्रीमद्भग-वद्गीताशास्त्रं व्याख्याय जीवनस्य चरमे भागे पारमेश्वरं पदं प्रयात इति अशोच्य-एव पण्डितैः संजातः । किं बहुना—

पटना पटहीनाद्य शास्त्रचर्चा निराश्रया ।
भारती भक्तरिक्ताभूद् गते हरिहरे दिवम् ॥

इत्येवं श्रद्धावाक्यपुष्पाञ्जलिं तच्छताब्दीसमारोहे तस्मै—

समर्पयति



# प्रसूनाञ्जलिः

पं० आद्याचरणझाः, प्राध्यापकः,

( राजकीयसंस्कृतकालेजः, राँची । )

मरालस्पर्धावद्बहुवरगुणाध्यापकवृते
सुता 'विद्ये' विद्याभवनसरसि श्रीसुलसिते ।
सुशान्तान्तेवासिप्रणतहृदयाम्भोजसकलं
महाप्रज्ञासूर त्वदुदयविभूत्या विकसितम् ॥

( २ )

विहारे मागारे 'प्रकृतिसुखसारे' सुखकरे
यशोरत्नं भास्वद्विलसति रविस्पर्धि सततम् ।
महत्या सद्बुद्ध्या भृशमुपकृताः पण्डितगणाः
कृपालो हे धीमन् ! तव गुणविमुग्धाश्च विबुधाः ॥

( ३ )

या चैवामरभारती द्युतिमती निश्शेषविद्याप्रसू-
र्लोकव्याप्ततमःसमूहमखिलं निर्वास्य चानन्ददा ।
सद्ज्ञानेन त्रितापभञ्जनपरा पुण्यैरगण्यैर्युता
सा चेयं परिरक्षिता सुरगवी त्वज्जन्मना भारते ॥

( ४ )

या चासीत्परतन्त्रताऽसुखकरी देशे चिरादागता
तस्यां यन्महता श्रमेण भवता संरक्षिता भारती ।
सैवेयं सुरभारती विलसिता स्वातन्त्यपूर्णेऽधुना
संजाता सुखदा समस्तविभवा दिव्यैः प्रकाशैर्युता ॥

( ५ )

प्रणतपरोऽसौ 'चरणः' 'हरिहर' चरणे सदा भक्त्या ।
चरणाम्भोजे येषां चञ्चरीकायितश्चतुरः ॥

●

# अनुभवैकवेद्यम्

श्रीजगल्लालत्रिपाठी

प्रातःस्मरणीयानामनन्तकल्याणगुणगणार्णवायमानानां श्रीगुरुवरमहोदयानां को नु खल्वशेषेण गुणानुपस्थापयितुं वाचस्पतिनिर्विशेषशेमुषीकोऽपि विद्वानलं नाम ! अस्माकं तु पुनर्मूढभूमिकचित्तवशंवदीभूतान्तरात्मनां कथैव का ?

एकतस्तु क्षोदीयस्यां विषयाकारपरिणामप्रवणायां नैव नो बुद्धौ यद्यपेक्षिताकारोऽवकाशो येन निसर्गकारुण्यविश्राण्यमानानां श्रीचरणाश्रितानां गुणानां तत्र सिद्धचेत्साकल्येन सकल्याणं समावेशः । मन्येऽस्मादेव कारणात्संक्षेपशारीरकाचार्य्येणाभिहितं यत्—

गुरुचरणसरोजसन्निधानादपि वयमस्य गुणैकलेशभाजः ।
अपि महति जलार्णवे निमग्नाः सलिलमुपाददते मितं हि मीनाः ॥

अपरतः पुनः श्रीचरणकिङ्करायमाणतामाश्रयन्तस्ते ते गुणा न जातु शाब्दींकारामनुगन्तुमुत्सहन्ते किल । भावनयैव परं निर्विरामं भाव्यमानाः कञ्चनामन्दमानन्दमातन्वते । इदमेव सम्भवेद् बीजं येन भगवता शङ्कराचार्य्येणेदमुन्नीतं यत्—

घृतक्षीरद्राक्षामधुमधुरिमा कैरपि गुणैर्विशिष्यानाख्येयो भवति रसनामात्रविषय इति ।

अस्माकं श्रीगुरुचरणानामीदृक्कलेवर एवेदमीयः कश्चित्कृपाकणावलेशो न जातु यं व्याकर्तुं कथमपि वयं प्रभवः खलु, किन्तु यमेकलोऽनुभव एव विषयीकर्तुं कल्पते किल ।

अस्माकं ते सहाध्यायिनो नूनं रमणीयभागधेया येषां जीवनक्षणाः श्रीगुरुवरचरणसेवायां चिराय बद्धपरिकराः सौभाग्यसम्भृतं सत्त्वमाचेतुं सम्भावितशरीराः खलु । वयन्तु निश्चप्रचं मोघभाग्या यन्नैव यथाविधि समाराधिता गुरवः । तथापि "वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे" इति न्यायेनोदारदर्शिनां श्रीचरणानां स कृपाकणावलेशोऽस्माभिरपि लब्ध एव ।

स तु शुभः समयो न कदापि विस्मृतिपथं गन्तुं क्षमते, यत्र श्रीगुरुवरमहोदयैरेवमहमभिहितोऽभूवम्—यत् त्वं व्याकरणाचार्य्यपरीक्षायाः प्रथमश्रेण्यां नागत इति तत्र स्वर्णपदकलाभसम्भावना न स्थितेति चेन्मा स्म स्यात्, सधैर्य्यं स्वाध्याय आराधनीयः । वेदान्ताचार्य्यपरीक्षायां स्वर्णपदकलाभस्तेऽवश्यम्भावी ।

इदमनुभवैकवेद्यं समुपलब्धं श्रीगुरुवरमहोदयानां शुभाशीर्वचनं परमार्थतो मां वेदान्ताचार्य्यपरीक्षायां स्वर्णपदकभाजं विधाय कठिनकठिनायामपि स्थितौ परममाध्यात्मिकं बलं प्रयच्छदद्यापि विजयतेतमां नाम । अवसाने तु श्रीगुरुवरचरणस्मरणमेकेन पूर्वप्रणीतपद्येन विधातुकामस्य हृदयस्य साग्रहमनुरोधं पालयन्भवामि । तथाहि—

न कान्तं वेदान्तं कपिलकलितं सांख्यमपि वा
न तर्कं शास्त्राकं कविकृतिमपेक्षे च न परम् ।
सदाशासे दास्यं विशदचिदुपास्यस्य भवतो
जगल्लालो बालो हरिहरकपालो गुरुवर ॥

●

## स्मृतिसन्ततिः

डॉ० मण्डनमिश्रः
( निदेशकः, लालबहादुरशास्त्रिसंस्कृतविद्यापीठम्, नई दिल्ली । )

सुविश्रुतभारतीयतल्लजेषु महामहोपाध्यायपण्डितश्रीहरिहरकृपालुद्विवेदिमहाभागानां सम्माननीयं स्थानमस्ति । अमीषामप्रतिहतप्रखरप्रतिभाप्रभापुञ्जेन सुरभारती विमलालङ्कृतिशालिनीव व्यद्योतत, भारतीभव्यगुरुता च गौरवातिशयमभजत । द्विवेदिमहोदयानां विद्वत्तोल्लसद्गम्भीरवाक्पाटवमनुभवन्ती विद्वन्मण्डनमण्डली नैकवारमाश्चर्यचकिताऽभवत् । व्याकरण-न्याय-साहित्य-वेदान्तसाङ्ख्य-योगादिशास्त्रपारङ्गतानिमानाचार्यप्रवरानवाप्य नूनममरभारती धन्या । यथामीषामान्तरिकज्योतीराशिना विहारविबुधवाग्विलासाः प्राकाश्यन्त, तथैव तदीयप्रगाढपाण्डित्यराजतसर्वतःप्रसारितप्रतिभया प्रधर्षिता वाराणसेयसंस्कृतविद्वन्मण्डली सम्मानमेभ्यः प्रायच्छत् ।

एषां स्वाभाविकसरलस्नेहमहीरुहशीतलच्छायान्ते विश्राम्यतां काचिदपूर्वेवानन्दानुभूतिर्भवति स्म । संस्कृतशास्त्रपाण्डित्येन सहैव तद्विद्यावैधानिकशास्त्रीयाध्ययनोपयुक्तानुपमगुणोऽप्येषु व्यराजत । नैतावदेव संस्कृतसाहित्यविकासाय प्रारब्धासु नवीनयोजनास्वपि सक्रियमेषां विशिष्टं योगदानमभवत् । एतेषां सुदृढसिद्धान्तः प्रौढपाण्डित्यञ्च प्रत्येकं क्षेत्रेषु निर्भीकतामेतेभ्यः प्रादात् । एषां काशीनिवाससमये संस्कृतसाहित्यविकासाय वाराणस्यां यावन्ति कार्याणि यावत्यश्च योजनाः समपद्यन्त समस्तेषु तेषु महानुभावानाममीषां विशिष्टयोग आसीत् । अमी तावद् वाराणसेयगौरवोन्नतविद्वद्विभूतीनान्तादृशमन्यतममास्पदं भजन्ते यदीयशाश्वतयशःप्रकाशेन विश्वविश्रुताऽस्ति वाराणसी । सर्वथा किलेदृङ्महानुभावप्रसङ्गे—

**जायन्ते किल गुणिनः, केचित्केचन गुणोज्ज्वला भुवने ।**
**राजन्ते पुनरन्ये, गुणिगणगीतामरोल्लसद्यशसः ॥**

एवंविधा सूक्तिश्चारितार्थ्यमेति ।

जन्म-बाल्यकालश्च—

सरयूपरीणब्राह्मणवंशावतंसानां पण्डितप्रवरद्विवेदिमहाभागानां शुभाविर्भावः प्रयागमण्डलान्तर्गते विराजमानगुणिगणग्रामे पण्डितपुरग्रामे १९२७ मितवैक्रमसँव्वत्सरे आषाढशुक्लपञ्चम्यामजायत । एषां पितृपादाः पिण्डतश्रीबलभद्रदत्तद्विवेदिनः बरांव-राज्यशासकस्य राज्ञो महावीरप्रसादस्य राजसभायां प्रधानपण्डितपदमलङ्कुर्वन्ति स्म । सर्वथा चरितनायकद्विवेदिपादानां बाल्यकालः—

'होनहार बिरवान के होत चीकने पात' इति लोकोक्तिमनुसरति स्म । सहपाठिषु वयस्यवरेषु चैषामसामान्यैव प्रीतिरासीत । यथासमयं तैः साकं बालसुलभक्रीडास्वपि राजप्रजाभावमभिनयन्त एते भित्रमण्डलीं प्रजात्वेनोपकल्प्यात्मानञ्च राजभावेन मन्यमाना बाल्येऽपि राजानन्ति स्म । परञ्चित्रमेतत, यत् क्रीडारुचयोऽप्यमी बाल्यत एव विलक्षणधारणाशक्तयो विशेषतोऽध्ययनमननप्रवृत्तयोऽपूर्वां स्मरणशक्तिं दधते स्म । एकदा दैवज्ञेनैकेन दशश्लोकानध्याप्यागामिदिवसेऽभ्यस्तान् ताञ्छ्रावयितुमभिहिता अमी तत्कालमेवानायासं समस्तानपि तॉंस्तथैवाभिधाय चित्रितचेतसं तं सचेतसमकार्षुः । अनन्तरमेव च कार्तान्तिकेन तेनैतत्प्रशस्तहस्तरेखा निरीक्षमाणेन प्रण्यगादि अनन्यसाधारणीं वैदुषीमधिकृत्य कृत्यतत्त्वविदसौ बालो बाल्येऽप्यबालवाग्वैभवो सुरभारतीभवनं स्वप्रतिभाभिरुद्भासयिष्यतीति । यथासमयञ्च सर्वथा कृतार्थैव मौहूर्त्तिकोक्तिः । उक्तञ्च—

**'शैशव एव श्रयते, भविष्णुजातं सुलक्षणस्तोमः ।**
**भाविविशालतरूणां, बाल्याद्विलसति दलावली ललिता ॥'**

शीलं स्वभावश्च—

बाल्यादेव च द्विवेदिपादानां स्वभावः, सारल्यं स्वभिमानञ्च बिभर्त्ति स्म ! आजीवनममी निसर्गसर्गं गुणममुं न्यर्वहन् । एतद्वेषभूषे सर्वथा बाह्याडम्बरविहीने भवतः स्म । द्विवेदिमहाभागानां पूर्वोक्तनामा पितृपादो यस्योक्तभूपतेरधिनिवासं निवसति स्म,

तस्य कुमारैः साकमेवैषामपि शिक्षा समारब्धा। नचिरादेवैते स्वविलक्षणधिषणया राजकुमारांस्तानत्यक्रामन्नाङ्गलभाषापाठाभ्यासे। निशम्य चैतन्नृपतिः शिक्षकमादिशत विरम्यतां तावद् द्विवेदिपाठो यावत् कुमारा अपि न तत्साम्यमुपयान्ति। विदितवृत्तान्तास्तु द्विवेदिमहोदया अतिक्रम्य जनकादेशमपि जनन्या आदायावश्यकरूप्यकाणि पाथेयार्थम् पद्भ्यामेव प्रायासिषुर्वाराणसीम्। घटनेयं द्विवेदिमहाभागानां शैशवेऽपि स्वाभिमानशालितां प्रकटयति।

वाराणस्यामयोध्यायाञ्चाध्ययनम्—

द्विवेदिमहोदयानामध्ययनकाले काश्यां विशिष्टविद्यालये प्रवेष्टुं निकषतया छात्राणां प्रतिभाऽध्ययनपाटवञ्च व्यवस्थिते आस्ताम्। स्वीयतादृशविलक्षणप्रतिभयैवामी वाराणस्यां सुविश्रुतविद्वद्वरदशरथशास्त्रिणो विद्यालये प्रवेष्टुमशकन्। प्रतिभाशालिनि अन्तेवासिनि निसर्गत एव भवति सद्गुरोः प्रसाद इत्येष्वपि तच्छास्त्रिवर्याणां तथाऽजायत वात्सल्योल्लासिप्रसादभरः। प्रतिपलं प्रतिभया गुरुप्रसादेन समेधमानानिमान् समवलोक्य—

"अकारणाविष्कृतवैरदारुणाद् असज्जनात्कस्य भयन्न जायते।"

इति बाणवाणीविषयीभूता केचन परोत्कर्षासहिष्णवस्तत्रत्या अन्तेवासिनः कदाचित्पुस्तकगोपनेन जातुचित्प्रदीपनिर्वापनेनैषामध्ययनमबाधन्त। तदेवन्तदुपद्रवोद्विग्नमानसा इमे तत अयोध्यामुपागत्य पण्डितश्रीचन्द्रभूषणपाठशालायां पण्डितप्रवरश्रीरामाज्ञाभिधगुरोर्व्याकरणविशिष्टवैदुषीमलभन्त। यदामी वैयाकरणसिद्धान्तकौमुद्या अध्ययने सँल्लग्ना आसन्, तदैव परीक्षासमयः समागतः, किन्तु अध्यापका अन्तेवासिनश्च साश्चर्यमिमान् वैयाकरणसिद्धान्तकौमुदीपरीक्षया सहैव मनोरमापरिभाषेन्दुशेखरादिटीकाग्रन्थपरीक्षायामपि न केवलं प्रविशत एवावालोकयन्नपितु तासु परीक्षासु प्रथमश्रेण्यां प्राथम्यं भजतोऽप्यपश्यन्।

शब्दशास्त्रपारङ्गताः सन्तोऽमी तत्रैवायोध्यायां दर्शनशास्त्रविश्रुतविद्वद्वरश्रीमदुमापति( नकछेदराम )गुरोर्विद्यालये तस्मादेव समस्तन्न्यायशास्त्रमध्यगीषत। यदा खल्विमे मल्लविद्याविशेषज्ञमुपर्युक्तन्न्यायतत्त्वज्ञं तद्गुरुन्निकषोपेतास्तदा स 'व्यधिकरणधर्मावच्छिन्नाभाव'प्रसङ्गसङ्गतं पाठं पाठयतिस्म, सुतीक्ष्णधिषणाश्चान्तेवासिनो दत्त-

चित्तास्तमवधारयन्ति स्म । संवृत्ते पाठविरामे गुरुणा तत्प्रसङ्गे पृष्टेषु प्रश्नेषु च्छात्रा यदा तूष्णीमेवासन् , तदा द्विवेदिमहाभागा आदाय गुरोराज्ञां यथाध्यापितन्न्यायगभीरप्रसङ्गमुपस्थाप्य स्ववाग्विलासेन समतोषयन्सान्तेवासिनं गुरुम् ।

तमस्विन्यामेकस्यामेभिश्चिन्तामणिमन्त्रप्राप्तिपूर्वकसङ्केतः प्राप्तः । अपरेद्युः प्राप्तेऽपि च तन्मन्त्रे गुरुप्रसादात्प्राप्ततत्साङ्गोपाङ्गविधिबोधाः सिद्धमकार्षुस्तन्मन्त्रम् ।

पूर्णव्याकरणन्यायाध्ययनाः पुनरिमे काशीमागच्छन् । तत्र च महामहोपाध्यायपण्डितश्रीराममिश्रशास्त्रिणो निजविलक्षणवैदुष्येण सन्तोष्य तेभ्योऽशेषवेदान्तराद्धान्तमध्यैषत । अत्रैतेषां तर्कसम्राड्वामाचरणभटाचार्यप्रसिद्धदार्शनिकलक्ष्मणशास्त्रिप्रभृतयः सहपाठिन आसन् । अनन्तरमिहैव पण्डितराजश्रीशिवकुमारशास्त्रिभ्य एतेऽध्यापनप्रणालीमध्यगच्छन् ।

## शास्त्रार्थविजयः, सर्वशास्त्राध्यापकता, उपाधिप्राप्तिश्च—

अध्ययनं समाप्य द्विवेदिमहाभागा समधिकृताशेषतन्त्राः पितृचरणानामाज्ञया रीवाँऽभिधं राजनिवासमयुः । तत्र च श्रीवेङ्कटेशनारायणनृपतिराज्याभिषेकप्रसङ्गे विशिष्टविदुषां सभा समायोज्यत । तत्रामीषां द्विवेदिमहोदयानां वाग्विजयेन प्रतिभया च प्रभावितः स रीवाधिपतिर्महाराज एभ्यः सबहुमानं विशिष्टपुरस्कारं प्रायच्छत् । ततः पाटलिपुत्रमागता इमे तत्रापि धनिकवर्गं विद्वद्वर्गञ्च स्ववैदुष्येण समतोषयन् । तत्रैवैतद्वैदुषीमनुभूय प्रसन्नो मनसुखराय 'इमाँस्तत्रत्यप्रसिद्धसंस्कृतमहाविद्यालये प्रधानाध्यापकपदे न्ययोजयत् । नचिरादेव चामीषामध्यापनप्रणाल्याः प्रशस्तिस्तथा समैधिष्ट, येन सुदूरात् मेधाविनो जिज्ञासवोऽन्तेवासिनो नानादिग्देशेभ्यः समेत्यैतदीयविलक्षणवाङ्माधुरीमिश्रितप्रौढविद्याऽमृततरङ्गिणीकणानास्वादयितुमारेभिरे ।

तदानीमिमे दार्शनिकप्रकाण्डतया विख्यातिम्प्राप्ता आसन् । १९१६ तमे खृष्टाब्दे विहारोत्कलसंस्कृतसमितेरधिवेशनं नैकप्रान्तीयविद्वद्वृन्दविभूषितं मुजफ्फुरपुरनगरे समायोज्यत यत्र महामहोपाध्यायश्रीबालकृष्णमिश्रमहामहोपाध्यायचित्रधरमिश्र-म०म० परमेश्वरझा-म०म० लालजी झा०-म०म० श्रीमदुमेशमिश्र-म०म० रामावतारशर्म-महाराजाधिराज-रमेश्वरसिंह-रायबहादुरद्वारकानाथप्रभृतयो मिथिलामगधोड़ीसानां प्रमुखपण्डितप्रवराः समुपस्थिता आसन् । तत्र द्विवेदिमहाभागानां 'वेदान्तप्रबन्धस्य' सुधीसमुदायैः

सबहुमानं प्रशंसा व्यधायि। अनन्तरं तत्रैव समायोजिते शास्त्रार्थविचारे विजयश्रियमधिगतेभ्यो द्विवेदिमहोदयेभ्यः पट्टाम्बरयुगलसहिताः पुरस्कारमुद्रा अपि समर्पिताः।

एवं कर्णाकर्णिकयाऽकर्णीदमीयो विमलवैदुष्ययशःस्तोमः पण्डितमदनमोहनमालवीयेनापि। निशम्य च हिन्दूविश्वविद्यालये संस्कृतविभागाध्यक्षतया प्रतिष्ठापयितुं प्रायतत। किन्तु समुदारहृदयैर्द्विवेदिपादैराश्रितविद्यालयसञ्चालकश्रेष्ठिवररामनिरञ्जनदासमुरारकामहोदयश्रद्धावशंवदतयाऽत्मीयनिसर्गसर्गस्वतन्त्रमनोवृत्तितया च मालवीयमहोदयानुरोधानुरूपं नाभावि।

१९७१ तमे वैक्रमसंव्वत्सरे च द्विवेदिमहोदयानां तर्ककर्कशवाक्चातुरीमवलोक्य विहारविद्वत्परिषदमून् 'तर्कालङ्कारो'पाधिना व्यभूषयत्। भारतधर्ममहामण्डलमपि इदमीयापूर्वपण्डितप्रभावितं सदेभ्यः १९७५तमे वै० संवत्सरे १९७६ तमे वैक्रमवर्षे च क्रमशो 'विद्यारत्नाकर''विद्यानिध्यु'पाधिद्वयप्रदानेनामूनलमकार्षीत्। एवमेव विहारोत्कलसंस्कृतसमित्या १९७८ तमे विक्रमवर्षे 'प्रधानाचार्यो'पाधिना, १९७९ तमे वैक्रमवत्सरे च भारतसर्वकारेण 'महामहोपाध्यायो'पाधिना, १९७९ तमे विक्रमसंवत्सर एव चाखिलभारतीयविद्वत्सम्मेलनेन 'विद्यासागरो'पाधिनामी सम्मानिताः। आजीवनञ्चैषां हिन्दूविश्वविद्यालयेन सुदृढः सम्बन्ध आसीत्। तत्रत्यसंस्कृतसमितीनां सदस्येषु विशिष्टमास्पदममीषामासीत्।

**रचनाचातुरी, अध्यापनपाटवञ्च—**

द्विवेदिमहाभागा यथा संस्कृताद्वितीयवैदुष्येण विश्रुता आसँस्तथैव हिन्दीभाषाया अपि प्रगाढपण्डित्यम्बिभ्रति स्म। अत एव ये किल संस्कृतभाषोपनिबद्धा अत्यन्तदुरूहग्रन्था आसन् तेऽमीभिरनायासमेव हिन्दीभाषयानूद्यानवद्यमद्यतनानामपि सरलपद्धत्या प्रबोधायोद्घाटितः पन्थाः। बृहदारण्यकोपनिषद्वार्तिकसारः, श्रीमद्भगवद्गीताया मधुसूदन्याष्टीकाया व्याख्या चैतादृश्यावेवेदमीये कृती। एषामेतद्व्यतिरिक्तासु कृतिषु रमेश्वरकौमुदी ( पद्यात्मिका ) शाबरभाष्यकल्पलतिका ( टीका ) च वर्त्तेते। कल्पलतिकायां मीमांसाशास्त्रतत्त्वानि स्फुटं विकसितानि सन्ति। न्यायकुसुमाञ्जलेरपि विवेचना साम्प्रतममुद्रितैव प्रकाशते।

सर्वथा व्याकरणदर्शनशास्त्रयोस्त्विदमीया गतिरद्वितीयैवासीत्। अमीषामाकर्षिणीमध्यापनशैलीमाकर्ण्य सुदूरादपि समेत्य छात्रा विद्वांसश्च न केवलं विद्यालयेऽपि तु निवासस्थानेऽपि स्वकीयजिज्ञासासमाधये परिवृत्त्येमाँस्तिष्ठन्ति स्म।

दानवीरः

# सेठ श्रीरामनिरञ्जनदास मुरारकाः



पाटलिपुत्रस्थमुरारकासंस्कृतमहाविद्यालयस्य

संस्थापकः

काशीवासाय यदामी विश्वनाथपुरीम्परीतास्तदा तत्रापि वेदान्तसिद्धान्तान् विद्वद्वृन्दमध्यापयताममीषां व्यत्येति स्म समयः। तत्रत्यगोयनकासंस्कृतमहाविद्यालयेऽपि बहुकालं प्रधानाचार्यपदमेभिरलङ्कृतम्।

लेखनाध्यापन इव वाक्शक्तिरप्येषामपूर्वैव प्रतिभाति स्म। अबाधप्रवाहं गीर्वाणवाण्यामभिगर्जतः परिषदीमान् समवलोक्यापरिचिता अन्यमनस्काः चकितचित्ता भवन्ति स्म। नूनममीषु लेखनाध्यापनव्याख्यानपावनत्रिवेणी विहितावासा विलसतिस्म। यथार्थमेतेषां गुणमवर्णयत्कश्चिद्विपश्चिद्वरः—

**कुमारो वादिविजयी, रामस्तीक्ष्णमतिर्मतः।**
**वाग्मी गङ्गाधरः ख्यातः कृपालौ तु त्रयो गुणाः॥ इति।**

तुरीये वयसि समागते समीपममी समस्तानि प्रायशो भारतीयानि तीर्थानि पर्याटिषुः। काशीवासावसरे विशेषतः संस्कृतभाषासाहित्यसेवेदमोया न जातुचिदपि विस्मरणीया भविष्यति। ऐहिकलीलाया अन्तिमदिनपर्यन्तमदसीयाः संस्कृतप्रचारप्रसारप्रयत्नाः संस्कृतजगतः कृतेऽनल्पमूल्यं बिभ्रति। सर्वथा सत्यमिदं यद् विश्वेशितुरकारणकरुणयैवेदृशाः विद्वद्विभूतयोऽवतरन्ति धरातलम्।

**महाप्रयाणसमयः—**

१९४९ तमे ख्रीष्टाब्दे, मार्चमासे विबुधवाग्वरदतनयाश्चरितनायकाः पार्थिवविग्रहं विहाय केवलेनाविचलविमलयशःकायेन भूतलमलञ्चिकीर्षवो दिविषदां परिषदमलमकार्षुः काशीवासं सरस्वतीसेवां च कुर्वद्भिरेभिर्महाप्रयाणे चिकीर्षितेऽस्मात् कस्माच्चिदपि स्थानात्करपात्रमहाभागाः विश्वनाथावलोकनपूर्वकमदसीयनिवासमुपेताः। तत्रेमान् शिवलीनान्तरङ्गामेतदीयपारिवारिकाँश्च शोकपारावारपरिवृतानवलोक्य सहानुभूतिपूर्णानि वाक्यानि वितीर्य साम्प्रतं द्विवेदिमहोदया शिवध्यानपरायणाः सन्तीत्यवोचन्। सत्यमिदं, यतः किञ्चित्कालानन्तरमेभिर्व्यधायि महाप्रयाणम्। मणिकर्णिकास्थविष्णुपादुकायां शवसंस्कार एषां वाराणसीवासिविद्वद्वृन्दानामुपस्थितौ सुयोग्यात्मजेन समपादि।

**सन्ततिः—**

साम्प्रतं द्विवेदिपादानां परिवारे एकः पुत्रः एका च पुत्री द्वौ भ्रातृतनयौ विराजन्ते। समस्त एव परिवारः सारस्वतसेवासँल्लग्नोऽस्ति। तत्र 'आत्मा वै जायते पुत्र' इति वचनोदाहरणतामसाधारण्येन वैचक्षण्येन प्रमापयन् सर्वथानुरूपोऽदसीयः सुपुत्रो नाम्ना-श्रीब्रह्मदत्तद्विवेदी विराजते। पाटलिपुत्राराजकीयसंस्कृतमहाविद्यालये व्याकरणदर्शनशास्त्रप्राध्यापकपदमलङ्कृत्य साम्प्रतमसौ रामनिरञ्जनमुरारकासंस्कृतमहाविद्यालये

प्राचार्यपदमलङ्करोति । भ्रातृतनयौ च श्री श्रीकान्तरमाकान्तद्विवेदिनामानौ सीतामही-( मढ़ी ) महाविद्यालये प्राध्यापकतां बिभृतः ।

स्वनामधन्यास्तत्रभवन्तो विद्वद्विभूतयो म० म० श्रीद्विवेदिमहाभागा अस्माकञ्चर्म-चक्षुषामप्रत्यक्षताङ्गता अपि विमलयशोविग्रहेण विराजमाना अनन्तकालं यावदात्मतपः-पूतामरगीर्भिः सुरगवीं सेवमानेभ्य आशीराशीः प्रदास्यन्तीत्येवम्भावयामः ।

---

## स्मृतिप्रसूनानि

पं० चन्द्रदेवशर्मा, भूतपूर्वप्रधानाध्यापकः
( बेतियाराजसंस्कृतविद्यालयः, बेतिया, चम्पारण । )

वेदान्तशास्त्रस्य समस्तशाखास्वत्यद्भुतं यो बिभृतेस्म दाक्ष्यम् ।
प्रावीण्यमासीत्परमं यदीयं तथैव सर्वेष्वपि दर्शनेषु ॥ १ ॥
यः शब्दशास्त्रेऽपि परं प्रगाढं पाण्डित्यमद्धा दधतेस्म धीरः ।
न यस्य बुद्धेः प्रसरावरोधः केनापि शास्त्रे क्वचिदन्वभावि ॥ २ ॥
नवं नवं सत्स्फुरणं सदैव सरस्वती यद्धृदि सन्दधाना ।
यदीयजिह्वाग्रकृताधिवासा प्रनृत्यतिस्म प्रणयानुबद्धा ॥ ३ ॥
प्रगल्भवाग्यः समितौ बुधानां शास्त्रार्थमत्यद्भुतमुद्वितन्वन् ।
उद्भाव्य भूयोऽभिनवां सुयुक्तिमनन्यपूर्वां सरणिं च दिव्याम् ॥ ४ ॥
बुद्धेः प्रकर्षात् प्रतिभाविशेषाद् बहुश्रुतत्वात् प्रथितप्रभावात् ।
विशुद्धभावान् प्रणयातिरेकात् स्वान्तं सतां मोदयतेस्म नित्यम् ॥ ५ ॥
विशुद्धधर्माचरणेन यस्मिन् हरिर्हरश्चाभवतां कृपालुः ।
द्विवेदिवंशे समुपात्तजन्मा महानुभावो विबुधाग्रणीर्यः ॥ ६ ॥
हरीति पूर्वाञ्च हरेतिमध्यां कृपालुरित्युत्तरतोऽभिजाताम् ।
द्विवेद्युपाधिग्रथितां ततो योऽन्वर्थां समाख्यां लभतेस्म लोके ॥ ७ ॥
तं संस्मरन् को न लभेत मोदं शृण्वन्न तं को भजते प्रसादम् ।
कस्तं विवृण्वन् कलयेन्न हर्षं गुणान् बुधः कः स्पृहयेन्न तस्य ॥ ८ ॥
विहारराज्यं सहसोज्ज्वलय्य वाराणसीं चाप्यचकासयद्यः ।
कीर्तिं वितत्याखिलभारतेऽपि स्वः प्रस्थितश्चाप्यमरत्वमागात् ॥ ९ ॥
विशेषयत्तं पुरुषं विशिष्टं सम्मेलनं संस्कृतसेवकानाम् ।
कर्तव्यमद्योपचितं स्वकीयं सम्पूरयत्येव विशेषतोऽङ्कात् ॥ १० ॥

---

# स्वीयानुभवः

## श्री पण्डित उमेशानन्दमिश्रः,

( प्रधानाध्यापकः, रामप्रतापकमलियासंस्कृतविद्यालयः, पटनासिटी )

माननीया विद्वद्वरेण्याः स्वनामधन्याः श्रीहरिहरकृपालुद्विवेदमहोदयाः उत्तरप्रदेशस्थ-प्रयागनगरोपकण्ठे पण्डितपुर-ग्रामवास्तव्या आसन्। एष ग्रामः पण्डितपुरेत्याह्वयोऽन्वर्थतामभजत्। अत्र महान्तः प्रकाण्डमनीषिणोऽभवन्। तेष्वेवैतेऽपि महानुभावा अद्वितीया एव विपश्चितोऽभवन्। श्रूयते चेमे महानुभावा बाल्ये काशीं गत्वा लघुकौमुदीं तथा सिद्धान्तकौमुद्याः पूर्वार्द्धं यावदधीत्य तत्रत्यैः सहाध्यायिभिः मत्सरतयाऽध्ययनकाले समुपस्थापितेन विघ्नेन विमनायमाना काशीं विरहय्य अयोध्यां प्रस्थिताः। तत्रागत्य सरयूपारीणसंस्कृतविद्यालये पठितुमारेभिरे। तत्र विद्यालये श्रीचन्द्रभूषणपण्डितमहोदयाः प्रधानाध्यापका आसन्। तदाज्ञया तदीयसहायकाध्यापकपण्डितप्रवररामाज्ञामहोदयस्यान्तेवसन्तः सिद्धान्तकौमुद्यास्तिङन्तं पठितुमारभन्त। तदानीमन्ये छात्रा मनोरमायाः परिभाषेन्दुशेखरस्यापि पाठं पठन्तिस्म। एतैरपि तयोः पाठः श्रोतुमारब्धः। विद्यालयीयपरीक्षावेदनकाले तैः ग्रन्थत्रयस्य परीक्षायै आवेदनमक्रियत। एते परीक्षां च ददुः। परीक्षायामवसितायां ग्रन्थत्रयस्य परीक्षायां प्राथम्यमुपागमन्। व्यतीतेषु केषुचिद् दिवसेषु तत्रैवापरविद्यालये पण्डितनकछेदरामशर्माणो महानुभावा अध्यापयन्त आसन्। एते हि न्यायवैशेषिकस्योद्भटविपश्चितः समभवन्। तदन्तिके वसन्तः गुरुवरमहोदयाः न्यायशास्त्रेऽप्यचिरादेवावर्णनीयां योग्यतां लेभिरे।

कालक्रमेण भ्रमणप्रसङ्गे पाटलिपुत्रमागताः। अत्र 'पटनासिटीचौक' इत्याह्वये स्थाने धर्मशालायामवतीर्य न्यवसन्। तत्र कस्यचिद् ब्राह्मणकुमारस्योपनयनमहोत्सवे आमन्त्रितासु पण्डितमण्डलीषु एतेषामपि महानुभावानामामन्त्रणमभूत्। तत्र पण्डितप्रवरैः श्रीसुरेशमिश्रैः सह शास्त्रार्थप्रसङ्गः समजनि। तत्रैषां विजयश्रीलाभेन तत्रोपस्थितैरनेकैर्विद्वद्भिर्विशिष्टैर्नागरिकैश्च एते भूरि-भूरि प्रशंसिता बभूवुः। श्रीसुरेशमिश्रमहोदयास्तात्कालिका विशिष्टविद्वांसस्तत्रैव मनसुखरायमुरारकासंस्कृतविद्यालये अध्यापयन्तः आसन्। बहुषु दिनेषु व्यतीतेषु श्रीसुरेशमिश्रमहोदयाः स्वगेहं गताः। कार्य-कारणवशात् पुनर्विद्यालयेऽध्यापयितुं न परावर्तन्त। मुरारकासंस्कृतविद्यालयाध्यक्षैः श्रेष्ठिमहोदयैः सबहुमानं समाहूता एते समागत्य मनसुखरायसंस्कृतविद्यालये प्रधानाध्यापक-

पदमलञ्चक्रुः । मनसुखरायमुरारकामहोदये दिवंगते श्रीरामनिरञ्जनदासमुरारकामहोदयो विद्यालयस्य सर्वविधभारं गृहीतवान् । बहूनि वर्षाणि यावत् शतशश्छात्रान् अध्यापयामासुः । विद्यालयोऽयं समयमासाद्य महाविद्यालये परिणतोऽभूत् । अथ चैकदा मुजफ्फरपुरे विहारसंस्कृतसमितेः कनवोकेशनावसरे समुद्घोषितायां लेखनप्रतियोगितायामेतेषां गुरुवरमहोदयानां वेदान्तविषयको लेखः सर्वप्राथम्यमभजत । तदैव शास्त्रार्थस्यापि घोषणाऽभूत् । तत्र विद्वत्समितौ महाराजाधिराजदरभंगानरेशाः श्रीरामेश्वरसिंहमहोदयाः सभापतिपदमलङ्कुर्वाणा आसन् । तत्र सभ्यरूपेण विराजमाना महान्तो विद्वन्मूर्धन्या विपश्चितः सभास्थलमलञ्चक्रुः । तत्र न्याये व्याकरणे च शास्त्रार्थोऽभूत । तस्मिन् शास्त्रार्थे गुरुवरमहोदयानां विजयोद्घोषः समपद्यत । अनन्तरं तत्रत्यैर्विद्वद्गणैर्महाराजाधिराजैश्च सबहुमानं गुरुवरमहोदयाः पुरस्कृता बभूवुः ।

एवमनेकेषु स्थानेषु शास्त्रार्थेऽपूर्वां प्रतिष्ठामवाप्य 'शास्त्रार्थपारङ्गत' इत्यभ्यघीयन्त जनैः । पाटलिपुत्रमण्डलान्तर्गतभवानीटोलाग्रामवासिनो भूमिपतेः श्रीटीपनप्रसादसिंहस्य पौत्रस्य उपनयनसमारोहे समागतेषु विद्वद्वृन्देषु वाराणसेयपण्डितप्रवरश्रीहाराणचन्द्रभट्टाचार्यमहोदयैः साकं मीमांसायां, न्याये, व्याकरणे च विचारोऽभूत् । तत्र महतीं प्रतिष्ठां लब्धवन्तः । भट्टाचार्यमहोदया मुक्तकण्ठेन चैतान् प्रशशंसुः । अनेकाभ्यः संस्थाभ्यो 'विद्यानिधि-तर्कालङ्कार-प्रधानाचार्या'दिपदवीं प्राप्तवन्तः । किम्बहुना, भारतसर्वकारा अपि १९७९ तमे वैक्रमाब्दे 'महामहोपाध्याय' इति सर्वोच्चपदव्या चैतान् विभूषयामासुः । एते हि अध्यापने, शास्त्रार्थे च पारङ्गता आसन्नेव । लेखेऽपि चैषामद्वितीया प्रतिभाऽऽसीत् । मीमांसाशास्त्रे शावरभाष्यस्य कल्पलतिका टीका व्यरचि । तथा भगवद्गीतोपरि मधुसूदनीव्याख्यायाः सरलमातृभाषाऽनुवादो व्यधायि । दृष्ट्वैव चैतादृशीं कृतिं विज्ञास्यन्ति विपश्चितः कीदृशं पाण्डित्यमेतेषामिति । एतेषां गुरुवरमहोदयानामनेकेषु च्छात्रेषु एकोऽहमपि साधारणप्रज्ञश्छात्रोऽस्मि। १९१७ तमे खृष्टाब्दे निजतातपादैः सह गुरुवरमहोदयानां मुरारकाविद्यालये दर्शनमकरवम् । मम तातपादाः श्रीरामानन्दमिश्रमहोदयाः पाटलिपुत्रस्थेषु चिकित्सकेषु विशिष्टचिकित्सकास्तथाऽऽयुर्वेदशास्त्राध्यापका अपि आसन्। एतेषां गुरुवरैः सह मैत्री आसीत् । गुरुवराणां पारिवारिकचिकित्सका अपि समभूवन् । किन्नामासि, किं पठसि इत्यादि प्रश्नानन्तरं विद्यालये प्रथमपरीक्षायां पठितुमादिष्टोऽहं 'गुरुवरैः । ततः परमुक्तविद्यालयेऽधीत्य

१९१८ तमे खृष्टाब्दे प्रथमपरीक्षां प्रथमश्रेण्यामुत्तीर्णः । १९२० ईशवीं यावत् गुरुपादान्तिके वसन् सिद्धान्तकौमुदीं भट्टिकाव्यं च पठन्नासम् । निजग्रामवासिनां स्वगोत्रजानां छात्राणां प्रेरणया विद्यालयं विहाय वाराणसीं समपागमम् । अत्र च १९३० तमे ईशवीं यावत् पण्डितप्रवरश्रीसूर्यनारायणशुक्लमहोदयानां गुरुवराणामन्ते वसन् वाराणसेयराजकीयसंस्कृतमहाविद्यालयाद् व्याकरणे आचार्यपरीक्षां समुत्तीर्णः । १९३१ तमे खृष्टाब्दे विहारोत्कलसंस्कृतसमितेः साहित्याचार्यपरीक्षां दित्सुः पाटलिपुत्रे समागमम् । गुरुवरेभ्यः कृपालुमहोदयानां भूरिप्रशंसामश्रौषम् । यद्यपि बाल्ये ततः सिद्धान्तकौमुदी पठिता मया परं तदानीं तदीयप्रगाढपाण्डित्यविषयकं ज्ञानं मम नासीत् । पितृपादानामनुरोधेन पुनर्ध्वन्यालोकं पठितुं गुरुचरणसन्निधौ समागतः । गुरुचरणस्तु महता स्नेहेन ध्वन्यालोकं पाठयामासुः । यथासमयं व्युत्पित्तिवादं, शक्तिवादं ततोऽधीतवान् । वाराणस्यां येषु येषु स्थलेषु मम पूर्णं ज्ञानं नाभूत् सर्वाणि च तानि स्थलानि पुनर्गुरुलक्षितानि अकारिषत, तेन महान् तोषो जातः । यद्यपि काश्यां तत्तच्छास्त्रनिष्णातेभ्यः गुरुवरेभ्यः तत्तच्छास्त्रविषयका ग्रन्था अधीता मया, तत्तच्छास्त्रविषयकं प्रौढं पाण्डित्यं च तेषामन्वभूवम्, परं कृपालुगुरुवरमहोदयानां सविधेऽध्यापनस्य, वक्तृत्वकलाया नव-नवशब्दगुम्फितायाः सुरभारत्याः प्रयोगकौशलस्य, च सम्भूय यादृशी क्षमता मयाऽवालोकि, नान्यत्रैकस्या व्यक्तौ क्वचित् सर्वगुणसमवायो दृष्टः श्रुतो वेति नातिशयोक्तिरिति । गुरुवराणां श्रीचरणेषु नतमस्तको भूत्वा लेखाद् विराममुपगच्छामि । इति शम् ।

•

# जीवनवृत्तम्

श्रीविष्णुदत्तशर्मा, प्राचार्यः
( श्रीमहन्थकेशवसंस्कृतमहाविद्यालयः, फतुहा, पटना । )

बाल्यकालः—

प्रत्यूहव्यूहविध्वंस-हेतवे भवसेतवे ।
शङ्करसूनवे नित्यं, नमोऽस्तु धूम्रकेतवे ॥

( २ )

लोकेषु सारो धरणी, धरण्यामिदं लसद्भारतवर्षमस्ति ।
सुतीर्थराजोऽत्र प्रयागनामा त्रिवेणिसंगो हि विभाति यत्र ॥

( ३ )

तस्योपकण्ठमास्ते, रम्य'पण्डितपुरं" सार्थकाह्वम् ।
लेभे जन्म सुतिथ्यां, विश्वाभ्युदयाय बालोऽसौ ॥

( ४ )

हरिहरयोः सुकृपातो जातोऽतश्चक्रे शुभनामेदम् ।
भूवलये हि समस्ते जयतात् हरिहरकृपालुद्विवेदी ॥

अध्ययनकालः— ( [५ )

भवान्तराधीतसमस्तविद्याः तमापुराशु क्षणमात्रदृष्ट्या ।
सतीव योषिद् दृढसंस्मृतास्ताः पुंमासमायुर्जननान्तरेऽपि ॥

( ६ )

बाल्ये व्याकृतिमेत्य काव्यमखिलं ज्ञातश्च तेन स्वयम्
काशीमेत्य विशिष्टपण्डितमुखान्न्यायादिराप्तो मुहुः ।
शास्त्र्याचार्यपरीक्ष्यग्रन्थनिकरान् स्मृत्वा समन्तात् स्वयं
तीक्ष्णोऽसौ ससुखं ततार विदुषां पारं परीक्षोदधेः ॥

परिवारवर्गः— ( ७ )

सर्वान् हर्षान् नयन्ती, परिजननिकरान्, रञ्जयन्ती जयन्ती
पातिव्रत्यं भजन्ती, विमलहृदि सतीं, लज्जयन्ती भवन्ती ।
दिक्चक्रं भासयन्ती, सुधवलवपुषा, स्वं धवं संस्मरन्ती
धन्या वन्द्या वदान्या, जयति जगति सा, धर्मपत्नी तदीया ॥

---

टि०—तस्मिन् समये इदानीमिव राजकीया परीक्षा नासीत् ।

( ८ )

पत्नी तस्य बभौ सदा भुवि रमा, सौभाग्यसंशोभिता
शर्मिष्ठेव प्रतिव्रता, यदुपतेः पत्नीव दक्षा कृतौ ।
सीते वातिदृढा सतीव सरला, भैमीव धैर्यव्रता
सावित्रीव पतिव्रता, सुमहती, गार्गीव विद्यावती ॥

( ९ )

मान्या रम्या प्रणम्या, मनसि भुवि रमा, शारदा सा हि बुद्धौ
शुश्रूषासक्तचित्ता, कृतसुकृतकृतिर्धर्मसद्वैजयन्ती ।
नव्यं भव्यं नयन्ती, सकलपरिजनं, मोदयन्ती जयन्ती
देवी सा प्राप्तकाला, सुललितवपुषं, प्रासविष्टैकपुत्रम् ॥

( १० )

शुभे लग्ने शुभे वारे, नक्षत्रे च गुणान्विते ।
ब्रह्मदत्तद्विवेदीति, सुतिथ्यां नाम रक्षितम् ॥

( ११ )

श्रीमतां पूज्यपादानां, विख्यातानां धरातले ।
द्विवेदिनां स वेत्तॄणामेकाकी प्रथमः सुतः ॥

( १२ )

न्याय-व्याकृति-साहित्याद्याचार्यः पण्डिताग्रणीः ।
ब्रह्मदत्तद्विवेदी यः, ख्यातो बाबेति नामतः ॥

( १३ )

तत्सुतोऽन्यः सुराचार्यो, वाचस्पतिः प्रधानकः ।
प्राध्यापकोऽस्ति विख्यातो महाविद्यालयेऽधुना ॥

( १४ )

अनुजश्रीमतोऽन्यस्य, रामकृष्णद्विवेदिनः ।
श्रीश्रीकान्त-रमाकान्त-नामकौ वशगौ सुतौ ॥

अध्यापनकालः—

( १५ )

प्रान्तेऽस्मिंश्च "विहार" नाम्नि "पटना" सन्मण्डले मण्डने
श्रीमान्येन"मुरारका"ऽऽस्पदयुजा, दासान्तनाम्ना सता ।

श्रीमद्रामनिरञ्जनेन महता, श्रीश्रेष्ठिना स्थापिते
भव्ये सद्भवने हि संस्कृतमहाविद्यालयेऽध्यापिपत ॥

( १६ )

निर्यद्भाःप्रसरः पदार्थविसरप्रोद्भासने तत्परः
नित्यं सिद्धसुवासरः सितदरः, प्रौढप्रभो भास्करः ।
मित्राब्जोल्लसने, तमोऽरिदलने, प्रोद्बुद्धगाढोद्यमः
प्राज्ञोऽसौ जगतीं सदा धवलयन् चिन्तामणेर्जापकः ॥

( १७ )

काव्य-व्याकृति-दर्शन-त्रिपथगाधारा वहन्त्यानने
गीरास्ये कमलाकरालयगता, यस्योज्ज्वला शेमुषी ।
पादाब्जे धनिकाः स्पृशन्ति समुदो, मूर्ध्ना त्रिसन्ध्यं नताः
विद्वन्मण्डलमण्डनो विजयते विद्वंशहंसायते ॥

( १८ )

विद्वन्मत्तकरीन्द्रशक्तिदमने, ख्यातश्च यः केसरी
विद्यार्थिभ्रमरा लुठन्ति चरणेऽजस्रं सहस्रं मुदा ।
शिष्यावल्यलयो भजन्ति नितरां पादाम्बुजेऽहर्निशम्
न्यायव्याकृतिकेसरी विजयते वादीन्द्रपञ्चाननः ॥

( १९ )

पुत्रीयन् मदयंश्च शिष्यनिवहान्, सन्तोषयन् पाठतः
शास्त्राचार्यपरीक्ष्यशिष्यनिकरान्, पारं परीक्षोदधेः ।
विज्ञोऽसावुदतीतरच्च शतशो, यद्धीर्गुरोः स्पर्धिनी
राकाचन्दिरचन्द्रिका-सहचरी, यत्कीर्तिरुज्जृम्भते ॥

प्रतिष्ठाकालः— ( २० )

योऽवाप दुष्प्रापमहामहोपाध्यायास्पदं भारतशासकाद्वै ।
काश्यां सदा वादविवादगोष्ठ्यां साक्षी नियुक्तोऽखिलविज्ञलोकैः ॥

( २१ )

श्रीविश्वनाथार्चनलब्धशर्मा ज्ञातागमाशेषनिगूढमर्मा ।
योऽनेकजन्माऽऽप्य महामहोपाध्यायप्रशस्तिं समवाप धीरः ॥

( २२ )

योऽवाप पण्डितदुरापमहामहोपाध्यायप्रशस्तिमतुलप्रतिभाभरेण ।
वादीन्द्रवृन्दविजयोल्लसितप्रतापो वन्द्यः सदा बुधवरैर्नतमौलिभिश्च ॥

( २३ )

महीतलेऽस्मिन् महिता महामहोपाध्यायसंज्ञा भवति प्रतिष्ठिता ।
नान्याऽस्ति मान्या विदुषां समाजे धन्येद्दगन्या पदवी सुमान्या ॥

( २४ )

कामं बुधाः सन्तु सहस्रशोऽन्ये, विभूषिता यैर्वसुधा विशेषात् ।
सुधान्धसां वाग्व्यवहारवृद्धचै, नान्योऽस्ति मन्ये यतमान एवम् ॥

( २५ )

महामहोपाध्यायो जयताद्धरिहरकृपालुद्विवेदी ।
संस्कृतवल्लीवनरुह-भ्रूरवान् येनोदधारि गिरिराजः ॥

( २६ )

प्रतिदानमन्तराऽपि, प्रददद् वृत्तिं कृपानिधिर्विद्भ्यः ।
छात्रेभ्यश्च बहुभ्यः संस्कृतमहाशयो जयति ॥

( २७ )

आई०सी०एस० पदव्याद्य तिविदितहरिश्चन्द्रशास्त्री वरेण्यः
प्राज्ञः श्रीमद्विहारोत्कलकृतसमितेर्मुख्यमन्त्री य आसीत् ।
मान्यो धन्यो वदान्यः, प्रियतमसुसखा, सर्ववेदी द्विवेदी
श्रेयान् प्रेयान् सुधीमान्, परमशुभद यस्तस्य विज्ञस्य चासीद् ॥

( २८ )

प्राच्या भव्या विहारोत्कलकृतसमितिः संस्कृतस्यास्ति संस्था
तस्या भूत्वा सदस्यो ह्युपकृतिलतिकां, वर्धयामास नित्यम् ।
वाग्देव्या वर्धनार्थं, दृढकलितकटिः, कं न यत्नश्चकार
जीयाज्जीयाददीयाद्भुवि सततमसावित्यहं वै हताशः ॥

( २९ )

एम्० ओ० एल्० इत्युपाध्याद्यतिधवलयशा ईश्वरीदत्तदौर्गा-
दत्तिः शास्त्री विहारोत्कलकृतसमितेर्मुख्यमन्त्री य आसीत् ।

भूत्वा प्राज्ञः सदस्यो, विविधविधिविधौ, सम्मतेस्तस्य दाता
जातो धीरो हि वीरो, विरलसुसरलः, सन्महात्मा दयात्मा ॥

( ३० )

शास्त्रार्थाय सुयोग्यका बुधवरा, आमन्त्रिताः सादरं
शास्त्रार्थोऽजनि तैः सहास्य विदुषो, नैकोऽपि पारं गतः ।
श्रीमान्यान्मिथिलापतेर्द्विजपते रामेश्वरात् सज्जनात्
लेभे सम्मुदिताच्च संसदि महाराजात्प्रतिष्ठां पराम् ॥

विद्यावंशवृक्षवर्णनम्— ( ३१ )

षट्शास्त्री हनुमान् दासः सर्वशिष्यशिरोमणिः ।
बहूनां ग्रन्थराशीनां, प्रणेता मूल-टीकयोः ॥

( ३२ )

साहित्यकार-साहित्या-करः साहित्यमूर्तिमान् ।
आशुकविषु मूर्धन्यः, त्रिपाठी रघुनन्दनः ॥

( ३३ )

श्रीत्रिपाठिजगल्लालः श्रुतधरो धुरन्धरः ।
श्रीश्रीकान्तद्विवेदी वै, रसिकोऽस्ति कवीश्वरः ॥

( ३४ )

श्रीरामरूपशुक्लोऽसौ गौराङ्गः शुक्लभूषणः ।
गङ्गाधरशर्ममिश्रः बटूनां पाठने रतः ॥

( ३५ )

श्रीकृपाशङ्करावस्थी, रामयत्नः सुधीवरः ।
श्रीरामानुजओझा वै, काश्यामध्यापको महान् ॥

( ३६ )

श्रीमान् धीमानलक्ष्योऽसौ, कर्मणि कुशलो महान् ।
तर्कतीर्थो हि साहित्याचार्यो वैदिकभूषणः ॥

( ३७ )

आचार्यः शब्दशास्त्रस्य ग्रन्थवृन्दस्य लेखकः ।
ध्वन्यालोकस्य टीकाकृत् रचिता मूलटीकयोः ॥

( ८ )

श्र्यलखदेवशर्माऽऽस विदुषां परमः सखा।
श्यामसुन्दरशर्माऽथ पाण्डेयो रघुनन्दनः॥

( ९ )

श्रीमानादित्यपाण्डेयो विद्वद्वंशावतंसकः।
श्रीहरिहरपाण्डेयो गुरूणां चरणे रतः॥

( १० )

बुलाकीदत्तपाण्डेयो गभीरोऽतिमहान् सुधीः।
स्थालीपुलाकन्यायेन केचिच्छिष्याः सुवर्णिताः॥

अन्तिमकालः—

वेदान्ते दान्तखेदान्तकरणवचने केसरी शब्दशास्त्रे
न्याये तन्त्रः स्वतन्त्रो विदितकविवरो दर्शनानां सुमूर्तिः।
कालेऽशाले कराले कलिभटिटितिऽकलौ, धर्ममूर्तिर्गतायुः
सर्वान् स्वीयान् विहायाऽमरपतिभवनं प्रस्थितो हन्त हा हा॥

( २ )

अस्ता ध्वस्ता, समस्ता, भुवि जनविदिता, विज्ञता तादृशी सा
तस्याभावे वियोगाद्, विलपति सततं, भारते देवभाषा।
आशाबन्धः समास्तेऽखिलहृदि विदुषां योग्यपुत्रं निरीक्ष्य
शोकार्तोऽहं न वक्ष्ये, विलपति सततं विष्णुदत्तो हि दासः॥

दिवंगतस्य मदीया प्रार्थना—

हे प्राज्ञ! साधो! यतिराजराज!
नमोऽस्तु मे शिष्यजनस्य तुभ्यम्।
अहन्तु भक्तश्चरणौ त्वदीयौ
नमामि नित्यं महताऽऽदरेण॥

( २ )

यशोध्वजस्ते विमलो जनाना-
मन्तस्तले स प्रतिभासितोऽस्ति ।
नष्टे शरीरे नहि नाशभावं
कदाऽपि संयाति सुकर्म दिव्यम् ॥

( ३ )

भवान् गतः सत्यमयस्य विष्णो-
र्निरामयं ब्रह्मपदं च नित्यम् ।
अहं भवाब्धौ परिपच्यमानः,
स्वकीयभद्राय गुरुं स्मरामि ॥

( ४ )

स्वामिन्! कृपा ते सततं हि जाता,
ह्यद्यापि मां नैव करोत्यनाथम् ।
दोषा मदीया बहवो महात्मन्
क्षमस्व तान् भोः शरणागतोऽहम् ॥

( ५ )

दोषान् हरन्ति मुनयः शरणागताना-
मेवं पठामि वचनं निगमागमेषु ।
सत्यन्त्विदं निगमशास्त्रपवित्रवाक्यम्
हे हे गुरो! तव कृपा भविता कथं न ॥



# गुरुस्तवः

श्रीश्यामसुन्दरशर्मा

पूज्यः श्रीचरणो न्वयं हरिहरः कृत्या स्वया योऽदिशद्
देशे शील-समत्व-संयम-दमांल्लोकातिगान् सद्गुणान् ।
स्रोतांसीह नवानि संस्कृत-भुवि प्रावाहयद् यः सुधीः
सोऽद्यास्मद्धृदये चकास्तु महसा कश्चित्कृपालुर्नवः ॥

( २ )

न्याये वैशेषिके यो धृतगहनगतिः शब्दशास्त्रेऽथ नीतौ,
बार्हस्पत्ये प्रविष्टो नृपनिखिलकुलैः संस्तुतोऽत्यादरेण ।
एवं संख्येष्वसंख्येष्वथ निजप्रभया वादिनः संविजित्य
गर्वान् कुर्वन् हि खर्वान् प्रबलहरिरिवार्यं हि लोकेऽचकासीत ॥

( ३ )

वाराणस्यां प्रभासे त्वथ कुसुमपुरे तीर्थराजेऽतिरम्ये,
भ्रान्त्वा भ्रान्त्वाऽशिशिक्षद् दिशि दिशि वसतोऽध्येतुकामान्स्थितान् यः ।
प्राणान् नापीह मत्वा सुभगसुरगिरं यत्नतश्चैवमर्चन्,
गङ्गातीरे शरीरं रस-गगन-नभोदोर्मिते चोत्ससर्ज ॥

( ४ )

कृपालुश्चाप्येवं सुरपुरमुपेतः कथमहो,
विसृज्यास्मान् दीनान् धृतचरणपद्मान् विलपतः ।
प्रभो, त्वद्वात्सल्यं समुचितदया, स्नेहपरता,
गतं क्वैतत् सर्वं त्विति न मनसाऽवैमि किमपि ॥

( ५ )

धृताक्षस्रग् भाले कृतभसितमालः शिव इव,
समागर्जन् काले, हरिरिव हि मूकान् प्रकुरुते ।
स्वनाम्नः सार्थक्यं गुणसमुदयैश्चाथ विदधत्,
पुरेऽस्मिन् पुष्पाख्येऽवसदथ तटे जह्नुदुहितुः ॥

( ६ )

बलिष्ठोऽयं भीष्मो धृतदृढवपुर्वेष जलमुङ्,
मुरारिः पीताभः सुभगबलशाली हि हिमवान् ।

गुरुर्वाऽयं द्रोणो धृतदृढशरो वा रघुपतिः
मतिश्चैषा केषां प्रसरति विभिन्ना न मनसि ॥

( ७ )

श्री'ब्रह्मदत्त' इति विश्रुतनामधेयो,
यस्यात्मजोऽर्जितयशोविभवैकसिन्धुः ।
बन्धुप्रियोऽथ समुदार-विचारसारो,
भ्राजद्गरिष्ठगुण-शीलश्रुताभिपन्नः ॥

( ८ )

यो निश्चितान् हि दिवसानभिव्याप्य कार्यं,
निर्वर्त्य पाटलिपुरे हि यथाभिलाषम् ।
रराजते सदभिरक्षितराजशिक्षा-
सद्मन्यथेह शिथिली-कृत-शिक्षणेच्छः ॥

( ९ )

सामर्थ्यं ह्युपपादने हि विषयाणां यादृशं रक्षितं
नान्योऽथापि तथा विधातुमपि यश्चेष्टान्वितः प्राप्यते ।
शक्नोतीह निशातमांसि सबलान्याहन्तुमेवांशुमान्,
यान्यन्यानि समेत्य नापि हि तथा कर्तुं समर्हन्त्यथ ॥

( १० )

अशेषशास्त्रविच्चैष महत्सु च महानयम् ।
संज्ञां परमुवाहायं, द्विवेदीति लघीयसीम् ॥

( ११ )

वन्द्यो मेऽयं गुरुश्चासीत् कृपालुश्चैवमीदृशः ।
हृद्गतं यः कृपालुत्वं निजनाम्नि न्यवेशयत् ॥

( १२ )

पद्यानि द्वादशैतानि निवेद्य चरणान्तिके ।
श्यामसुन्दरशर्म्माऽयं कृतकर्माद्य जायते ॥

★

म० म० पण्डित श्रीहरिहरकृपालु द्विवेदी



काशीमधिवसतः वार्धक्यातिशयदशायाश्चित्रम्

# गुरूणां स्मृतिः

## महामण्डलेश्वरः श्रीस्वामी भागवतानन्दजीमहाराजः

"वाग्जन्मवैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत्" इति नैषधीय पद्यानुसारेण विचित्रपवित्रचरित्रगुणगरिम्णा विभूषितानां लोकोत्तरमहानुभावानां गुणकीर्तनेन वाणीसाफल्यं विधेयमेव।

सर्वतन्त्रस्वतन्त्रा अन्तर्वाणिगणप्रणंनम्यमानचरणाः स्वर्गीया महामहोपाध्यायाः श्रीलाः श्रीहरिहरकृपालुद्विवेदिमहोदया आस्माकीनसद्भाग्येन विद्यागुरवः समुपलब्धा-मयका। तेभ्यः श्रीमद्भ्यो मया सर्वाणि शास्त्राणि समधीतानि विंशतिवर्षपर्यन्तम्। तेषामध्यापनशैली दुर्लभाऽन्यत्र। सर्वाणि शास्त्राणि कण्ठस्थानि तेषां रसनाग्रे सरस्वती-नरीनृत्यतेस्म। मन्मतेनानुमीयते तेषां 'चिन्तामणि'मन्त्रसिद्धिरासीत्। अन्यथा निखिल-शास्त्राणामुपस्थितिलेखनभाषणाध्यापने सुपटीयस्त्वं च कथङ्कारं सम्पनीपद्येत। समुदितविद्याभास्करस्वान्तेषु सत्स्वपि नाहङ्कृतिदोषलेशोऽपि सर्वत्राद्दश्यमान इति तदीयचरित्रावलीं स्मारं स्मारं चित्रीयते नश्चेतो नितान्तम्।

श्रीगुरुपादानां विद्यावंशोऽपि भूयान् वेविद्यते, बहवः साधवो महात्मानो ब्राह्मणाश्च छात्रा वैदुष्यभूषिताः सन्तो धर्मप्रचारं कुर्वन्तोऽध्यापयन्तश्च शास्त्राणि दरीदृश्यन्ते समुपलभ्यन्ते च देशेषु।

तेषां कवितायां स्रग्धराछन्दांसि नैषधीयचरितस्रग्धराछन्दांस्यपि अतिशेरते। शास्त्रार्थे तु गीर्वाणगुरुरेवासीत्।

भौतिकशरीरावसानेऽपि यशःशरीरेण तु गुरुपादा जीवन्त्येव। "तेषां छात्रव्रजा देशे विद्याद्योतं प्रकुर्वते। गुरवो जीविताः सन्ति स्पष्टमुघद्घोषयन्ति ते" इति पद्यं-हृदयान्निःसरति। "विद्यावता सकलमेव गिरां दवीयः" इति पण्डितराजजगन्नाथी-यसूक्तिरत्र संजाघटीति। गुरुपादानां निखिलगुणवर्णनं दुःशकमेव "नभः पतन्त्यात्मसमं पतत्रिणः" इति भागवतीयन्यायमनुसृत्य श्रीगुरुपादेभ्यः श्रद्धांजलिं समर्पयन् विरमति स्वामी भागवतानन्दो महामण्डलेश्वरः।



# संस्तुतिः

## श्रीविक्रमादित्यः कविः ( जौनपुरस्थः )

आख्यानिवास सततास्खिलकर्मपुञ्जै-
दैवीं दशामुपगतं भगवन्नहं त्वाम् ।
किं नौमि नौति जगती जगतीसुराणां,
विद्याभिराभिरमरीकृतविग्रहाणाम् ॥ १ ॥

एतैर्महामहिमभिर्भगवन्ननेकै—
विंद्वद्भिरावृततनुं निखिलागमज्ञम्
मन्यते को नहि भवान्तरदृष्टनाको,
नाकाधिपस्य गुरुमावृतमादितेयैः ॥ २ ॥

वाचस्पतिर्दिवि सुरानशिषच्च शास्ति,
भिन्नोऽपि नृत्वमलम्भ्य बभूव तादृक् ।
ताभ्यामपि प्रतिपदं स्मयमादधानः,
त्वं सोऽसि सोऽसि नहि कोऽसि ततोऽसि वान्यः॥३॥

त्वां पाणिनिं यदि वदामि न सम्यगेतत्,
स व्याकृतिन्न कृतवान् सकलां किलैकः ।
एषोऽप्यशेष इतरत्र जनेऽपि दोषः,
तत्सर्वतन्त्र निजतन्त्रमहं प्रवक्ष्ये ॥ ४ ॥

ईशद्विभेदस्य कपालुना ते, हृतौ समासद्वितयी विभाति ।
एको बहुव्रीहिरथापरोऽपि, तत्पूरुषस्तं प्रियमेव मन्ये ॥ ५ ॥

कृपाथवैकस्य सुरस्य यत्र,
स सर्ववन्द्यो भवति क्षणेन ।
किमत्र चित्रं यदि तौ कृपालू,
यस्मिन्स साक्षात्परमेश्वरः स्यात् ॥ ६ ॥

हरिहरेतिपदद्वयसङ्गतो, बुधकृपालुपदेन विधेर्ग्रहः ।
इति सुरत्रितयस्य समाहतेर्भवति लक्षणया समुपस्थितिः ॥ ७ ॥

उपाध्यायः शब्दः प्रभवति गुरूणां गुरुतरः,
पुनः किं तस्यादौ भवति महतश्चेत्स्थितिरपि ।
यदा वैशिष्ट्यं चेत्पुनरपि परेणापि महता
तदा स्वर्णं रत्नं तदपि शिरसि क्ष्माभुजपतेः ॥८॥

विद्वत्प्रकाण्डसमुपासनयोत्सुकस्य
सर्वोत्तमा विरुदियं धरणीश्वरस्य ।
तुभ्यम्प्रदाय तदसौ विबुधोत्तमाय
नीतिज्ञतापरिचितिं व्यतरज्जनेभ्यः ॥९॥

शेषो नास्मि सरस्वती न गणपो नाहं कवीनां कविः
तल्लोकोत्तरवन्दनीयचरितस्त्वं किं मया स्तूयसे ।
एवं सत्यपि मानसेन वचसा कायेन ते श्रद्धया
सेवां कर्त्तुमना मनागनुचरः क्षान्त्या समाश्वास्यताम् ॥१०॥

शास्त्रार्थिवारणनिवारणवारणारिः,
वाराणसीश्वरवरप्रवरप्रभावः ।
जीयाज्जयाय सुचिरं द्विजपुङ्गवानाम्,
श्रीधामरामरमणीयकरार्चितानाम् ॥ ११ ॥

कृपालवो वै भवतां कृपालवः, कृपालवाले मयि बालके स्यात् ।
कृपालवं कर्त्तुमकर्त्तुमन्यथा, विधातुमन्यत्र भवेयमीश्वरः ॥१२॥

पदावली या कुसुमावलीव, समर्पिता साधु मया पदोस्ते ।
गृहाण तां मानुगृहाण भूयसा, निजत्वसम्पादकचित्तरंहसा ॥१३॥

यवननृपतिकाले पूर्वमासीत्प्रसिद्धम्,
भुवि यवनपुराख्यं मण्डलं सूरिपूर्णम् ।
प्रविलसति भवानी पूर्वनीयपूरत्र तस्यां,
निवसति कविकर्म्मा विक्रमादित्य एषः ॥१४॥



# संस्मरणम्

श्रीब्रह्मदत्तद्विवेदी, प्राचार्यः

( श्रीरामनिरञ्जनदासमुरारकासंस्कृतमहाविद्यालयः, चौक, पटना सिटी )

गतेऽतिदीर्घे समये सुशिक्षणं निरीक्षितुं श्रीहरिशङ्करो बुधः ।
पदाब्धिपारीण इहागतो मुदा समादरेणाथ स मानितोऽभवत् ॥

( २ )

गुरोरविच्छिन्नपदा सुपाठना यथावदेवास्त्विति तेन प्रेरिता ।
चिरं न विश्रामपदंगता बुधं, ध्रुवं हृदा तं समतूतुषद् बहु ॥

( ३ )

निशम्य पाठं घटिकात्रयं गुरोरनेककोटयश्रुतपूर्वपद्धतिम् ।
अगाधवैदुष्यमुखेप्सितैर्गुणैरमानि तत्तेन निजं हि गौरवम् ॥

( ४ )

कथं त एते सुकुमारबुद्धयो निपीय पाठं श्रुतिसम्पुटेन तम् ।
विचारयिष्यन्ति यथायथं गृहे मनो न प्रत्येति समेत्यवोचि तैः ॥

( ५ )

उदीरितं संशयसंकुलं वचो निशम्य संशीतिनिरासकं मुदा ।
अगादि तूर्णं गुरुभिस्तदुत्तरं श्रुतं कदाचिन्नवतां न यास्यति ॥

( ६ )

ततः पुनः प्राह निरीक्षको बुधः किरातपद्यं किल 'विद्विषादरः' ।
मनीषिवर्यैरिह मल्लिनाथकैर्व्यलेखि "पुंवाक्यतया न दूषणम् ॥"

( ७ )

समुक्तिरेषा यदि योषितस्तदा कथं प्रसज्येत तदुक्तदूषणम् ।
न वाक्यमात्रं भजते विरूपतां स्त्रियाः खलूक्त्या पुरुषस्य वा मनाक् ॥

( ८ )

निपीय वाचं गुरुभिस्तदेरितं न चिन्तनीयाऽत्र भिदा विलिङ्गजा ।
अपौरुषेया श्रुतिरेव केवला द्विधार्थसम्भावनयाऽपि दुष्यति ॥

---

१. 'न जात हार्देन न विद्विषादरः' इति किरातपद्यस्य टीकायां विदुषा श्रीमल्लिनाथेनालेखि यत् "पुंवाक्यतया न दूषणम्" पुंवाक्यमिदं स्त्रीवाक्यञ्चेद् दूषणं कथं भवेदिति शङ्का । पुंवाक्येन पौरुषेयं गृह्यते इति समाधानम् ।

म० म० श्रीहरिहरकृपालुद्विवेदिमहाभागानामात्मजः

## आचार्यः श्रीब्रह्मदत्तद्विवेदी



विहारराज्यसंस्कृतसाहित्यसम्मेलनाध्यक्षः

( ९ )

न पौरुषेये वचने तथाविधं द्विधार्थसद्भावधिया विगर्हणम् ।
अतोऽत्र प्रोक्तं द्विविधार्थसम्भवेऽपि तेन पुंवाक्यतया न दूषणम् ॥

( १० )

पौरुषेयञ्च पुंवाक्यं विभेदो नानयोरतः ।
अर्थे द्वैविध्यमापन्नेऽप्यदोषः स्यात् सहेतुकः ॥

( ११ )

कदापि दौस्थ्ये मनसो लघीयसा ज्वरोष्मणा श्रीगुरुभिः प्रबोधितः ।
अनामयस्त्वं भविता ध्रुवं तदा यदा न चाहारविहारयोः क्रिया ॥

( १२ )

निशम्य तातस्य गुरोर्वचोऽमलं कथं कथं वक्तुमहं भयावृतः ।
प्रवर्तमानोऽकथयं श्रुतं पदं कलौ युगे त्वन्नगताः सदासवः ॥

( १३ )

ततः समीहे लघुभोजनादहं निरस्य क्षुत्क्षाममनोऽसहिष्णुताम् ।
सुखेन निद्रां समवाप्नुयां निशि यदा निदेशो भवतां भवेत्तथा ॥

( १४ )

विहस्य चाश्वास्य तदाऽब्रवीत् पुनः पदेन तेनाथ न तादृशार्थधीः ।
ध्रुवं तदान्नेन गतासवो नराः ज्वरे निराहारवृतिः सदोत्तमा ॥

संस्मृत्यन्तरम्—

प्रस्तूयते पूर्वतनः प्रसङ्गः काशीनिवासस्य गुरूत्तमानाम् ।
महीयसो ज्ञाननिधेः कथापि भव्याय शुश्रूषुजनस्य नूनम् ॥

( २ )

अथैकदा गोयनका विनम्रो न्यवेदयच्छ्रीगुरुवर्यपादान् ।
टीका भवद्भिर्मधुसूदनीयं भाषानुवादेन विभूषणीया ॥

---

१. 'कलावन्नगताः प्राणाः' अन्नेषु गताः प्राप्ताः प्राणाः इति तदर्थः । अन्नेन गताः निर्गताः प्राणाः इति गुरुवराणामन्यार्थकथनम् ।

२. सेठ श्रीगौरीशङ्कर गोयनका । येन काश्यां स्वनाम्ना महान् संस्कृतमहाविद्यालयः स्थापितः ।

( ३ )

सारल्यरूपेण समस्तभावस्तस्याः सुखेनावगतो यथा स्यात् ।
भवद्विधैरेव निगूढभावः शक्यः स्फुटीकर्तुमतोऽर्थये वः ॥

( ४ )

श्रुत्वा विनीतं वचनं तदीयं सहेतुकं श्रीगुरुभिः समुक्तम् ।
काशीनिवासोचितकार्यशेष-कालेऽनुवादो भविता सुखेन ॥

( ५ )

मनोभिलाषं फलितं वगाह्य श्रेष्ठी परामन्वभवन्मुदं सः ।
अतः परं श्रीगुरवोऽपि चित्तं दधुर्विधौ तस्य सुदुष्करेऽन्यैः ॥

( ६ )

ततोऽनुवादस्य क्रमे द्वितीयाध्यायस्य पद्ये प्रथमे "विषादम्" ।
"सम्प्राप्नुवन्तं" मधुसूदनेन मनीषिणाख्यायि तदादिमं पदम् ॥

( ७ )

कर्मत्वमाप्तोऽत्र पदे विषादः, आगन्तुकत्वं तत एव तस्य ।
यः कर्मभावं भजते स नैजं, स्वाभाविकत्वं विजहाति नूनम् ॥

( ८ )

धनञ्जये वीरजनाग्रगण्ये कथं विषादोऽजनि चित्रमेतत् ।
परं विषादस्य च कर्मभावादागन्तुकत्वं न च तत्र चित्रम् ॥

( ९ )

यथावदेवास्य मयाऽनुवादो विधीयते चेत् स्खलनं ममापि ।
प्रतीयते येन न तत्र दोषो, ममानुवादोऽपि न दूषणं स्पृशेत् ॥

( १० )

अर्थो हि गीतावचनस्य नायं, स्वकीयवाक्यार्थनिरूपणं तत् ।
विषादकर्मत्वसमुक्तिरेषा, गीतास्थवाक्ये घटते न चैव ॥

---

१. गीताया द्वितीयाध्यायस्य प्रथमपद्ये 'विषीदन्तमिदं वाक्यमुवाच मधुसूदनः' । तत्र मधुसूदन्यां विषीदन्तमित्यस्य विवरणं विषादं प्राप्नुवन्तमिति । विषादस्य कर्मतया आगन्तुकत्वं सूच्यते ।

सेठ श्रीछोटेलालमुरारका:



म० म० श्रीहरिहरकृपालुद्विवेदिविरचितगीतामधुसूदनीभाषानुवाद-

प्रकाशक:

( ११ )

विवर्ण्य चैवं मधुसूदनीं ताम्, अलग्नतादोषमिमे निरास्यन् ।
टीकानुवादः प्रसृतः क्रमेण, ग्रन्थिः श्लथत्वं कठिनोऽपि चापत् ॥

( १२ )

परं खलेनाथ च सूचकेन, श्रेष्ठी समासूचि विपर्ययेण ।
विखण्डयते तैर्मधुसूदनी तु नानूद्यते योजनया स्फुटं सा ॥

( १३ )

श्रुत्वा च श्रेष्ठी विमनायमानः, तस्यानुवादो न च खण्डनं स्यात् ।
इत्यभ्यधाच्छ्रीगुरुवर्यपादान् ततः परं श्रीगुरवोऽभ्यधुस्तम् ॥

( १४ )

एवं निदेशानुगतोऽनुवादः, कर्तुं न शक्यः सुधियः स्वतन्त्राः ।
तल्लेखनीसिंहनखाग्रसूचिर्निवर्तते नो विषयात् स्वकीयात् ॥

( १५ )

[1]छोटेलालमुरारका त्ववचकथन्, श्रुत्वा कथां तादृशीम्,
नौचित्यं दधते मनीषिणि जने, वश्यत्वभाव-स्पृहा ।
सत्ये नास्ति भयं कदापि विदुषां युक्ता यथार्था कथा,
तस्मान्नो विरतिर्भवेदभिमताद्, मुद्रापयिष्येऽचिरम् ॥

●

१. श्रीश्रेष्ठिछोटेलाल मुरारकाश्रेष्ठि श्रीरामनिरञ्जनदासमुरारकामहाविद्यालयस्य संवर्द्धकस्य मध्यमस्तनूजः । एतेनैव स्वकीयमुद्राव्ययेन गीता मधुसूदनी भाषानुवादेन सह प्रकाशिता यदा श्रीगौरीशङ्करगोयनकामहोदयेन सह भाषानुवादे मतभेदः सञ्जातः । इदानीं गुरुवरकृतभाषानुवादेन सहिता श्रीमद्भगवद्गीतामधुसूदनी नोपलभ्यते । पुनः प्रकाशनाय प्रयतिष्यते ।

# वन्दे गुरूणां गुरुम्

## वैद्यः श्रीनागेशद्विवेदी

( प्रबन्धकः—राजकीय आयुर्वेदिक तथा यूनानी औषधनिर्माणशाला, बिहार, पटना )

प्राणिनां प्रादुर्भावप्रक्रियायां प्रजापतिप्रसर्जनप्रवृत्तौ प्रारम्भिकप्रातःकालत एव प्रसिद्धिः प्रचलति गुरूणां पथप्रदर्शने प्राप्तप्रौढित्वस्य । तत्रभवन्तो गुरवः प्रसीद्य न केवलं ज्ञानगौरवेण गृणन्ति अपितु सत्पथप्रदर्शनपूर्वकं शिष्याणां भविष्यनिर्माणमपि कुर्वन्तीति निश्चप्रचं तथ्यम् ।

यद्यप्येतद्विषयकवृत्तान्तो मम स्मृतिपथे त्रयोविंशतिवर्षीयोऽन्येषाङ्कृते पुराणसङ्गतः प्रतीयते, तथापि मत्कृते तु पथि दर्शनात्मकत्वेन नित्यनूतनायमानः प्रगतिपथप्रशस्तकरश्च प्रतिभाति ।

इत्थञ्च गुरूणां गुरोः शिष्यप्रशिष्यपरम्परायां प्रथमां परीक्षां प्रारभ्य व्याकरणशास्त्रिपरीक्षामुत्तीर्य विगतैकोनविंशतिशतसप्तचत्वारिंशत्तमे ख्रीष्टीयाब्दे युगपरम्परानुरूपां जीवलोकीयषट्सुखसमागतैकसुखसाधनतासमवेतां, जीवनविज्ञानाभिधेयामायुर्वेदापरपर्यायां सद्योऽर्थकरीं विद्यां पिपठिषुरहं प्रयत्नपूर्वकं सर्वविधविद्यासिद्धपीठपदप्राप्तां विद्येशसंरक्षितां श्रीकाशीविश्वनाथपुरीं प्राप्तवान् ।

तत्र च प्रथमप्रवेशप्राप्तावसरः प्रयासपूर्वकं पर्यन्वेषणे पर्यटन् प्रारब्धप्रेरितः श्रीराधाकृष्णमन्दिरं गुरूणां गुरोः काशीवासमयं तीर्थस्थलं प्राप्तवान् । प्रविश्य च प्रथमस्तरे प्रस्थापितराधाकृष्णचरणौ प्रणम्य प्रसादपूर्वकं स्वाध्ययनसंस्थानपरम्पराप्राप्तपरिचितैः पुरुषैः संलापानन्तरं संन्यस्तशिष्यसमूहैः संवृतानां विद्यादानरतानां विश्वनाथपुरे निवसतां साक्षात् विश्वनाथ इव मूर्तिमतामाचार्यचरणानां—साष्टाङ्गसंस्पर्शसौभाग्यं समवाप्य कृतकृत्यतां सम्प्राप्तवान् ।

तत्रभवन्तः गुरूणां गुरवोऽपि स्वशिष्योपशिष्यसम्भूतं मां स्वाभाविकैर्जयाशीर्भिः सन्तुष्य सामयिकं वृत्तान्तं विज्ञाय मत्काशीविश्वनाथपुरीप्राप्तिप्रसङ्गं परिश्रुत्य सर्वप्रथमं स्वशिष्यं निर्दिष्टवन्तः ममाशनवसननिवसनादिसकलसुव्यवस्थार्थम् । स्वयमपि च ममोद्देश्यमाध्यमेन भविष्यविधायकं मार्गनिर्धारणचिन्तनपरायणाः बभूवुः ।

अहमपि च श्रीकाशीविश्वनाथपुरसुशीतलां शाङ्करीमवलम्बनात्मिकां छायां समवाप्य सर्वथा संजातसंहर्षः स्वाभीष्टसिद्धिं स्वहस्ततलगतामिव मत्वा श्रीकाशीहिन्दूविश्व-विद्यालयस्थस्य आयुर्वेदमहाविद्यालयस्य प्रतिविभागीयपरिचयार्थं प्रयत्नवानभूवम् । इत्थं द्वित्रिदिवसेषु सकलपरिचयं प्राप्य प्रवेशार्थं नामाङ्कनकृतनिश्चयोऽहं सायंकाले समागते श्रीराधाकृष्णमन्दिरे विद्वद्वरेण्याचार्यचरणानां दर्शनव्याजेन स्वनिश्चयात्मकं वृत्तान्तं विनिवेदितवान् । श्रीमन्तश्च सकलमभिज्ञाय मम सर्वथोपकारकं भविष्य-निर्मापकं स्वाभिप्रायं प्रकटयन्तः प्रोचुः । "तव बिहारित्वेन बिहारस्थसंस्थयैव स्वाध्याय-पूर्वकं स्वोपाधिसमलङ्करणं सततं श्रेयस्करं भविष्यति । अतो मद्विचारेण त्वं पाटलिपुत्रं गत्वा तत्रैव आयुर्वेदमहाविद्यालये प्रवेशं प्राप्य स्वाध्यायं कुर्विति" । अहमपि च तदीयं वाक्यमाप्तवाक्यमिति मत्वाऽनुसरणीयमिति विनिश्चित्य पाटलिपुत्रं प्रत्यावृत्य पाटलिपुत्रस्थे राजकीये आयुर्वेदमहाविद्यालये प्रवेशं प्राप्य पञ्चवर्षीयोपाधिं परिप्राप्य गुरूणां गुरोराशीर्वचनसम्बलसाहाय्येन क्रमपरिप्राप्त-समुन्नतिसमवाप्तिपूर्वकं सतत-मेवानुभवामि श्रीमतां गुरुगुरुवराणामाशीर्वचनसामर्थ्यम् ।

वन्दे विष्णुशिवात्मकं सदयहृच्छ्रेयस्करं सर्वदा,
वन्दे विज्ञसमूहशासकतमं शास्त्रार्थसञ्चालकम् ।
वन्दे शास्त्रसमुच्चयार्थकरणे सामर्थ्यवन्तं सदा,
वन्दे वेदमयं प्रमाणपुरुषं वन्दे गुरूणां गुरुम् ॥ १ ॥



# गुरुरेव परं ब्रह्म

श्रीरघुनन्दनपाण्डेयः

( उपप्राचार्यः, श्री म०क०सं० महाविद्यालयः, फतुहा, पटना )

वैरिञ्चेऽस्मिन्नसारभूते जगति यावन्तीन्द्रियगोचरतां गतानि वस्तूनि, तानि न सद्रूपेणोपलभ्यन्ते—अविद्यामूलकत्वादस्य जगतः। तर्हि स्वाभाविकीयमाशङ्का समुदेति, किमिदं कथञ्च स्रष्टा सर्वथा तुच्छभूतं जगद् रचयति, विलासयति, संहरते चेति ? किमसौ विभ्रान्तो ब्रह्मा ? इयं धारणा परिणामिन्या मायाया मृगमरीचिकामयं नश्वरञ्च कृत्यमभिलक्ष्य जायते । इत्यपि विचित्रं चित्रं न किमपि, परं जगत्यस्मिन् विष्णोर्वक्षसि हारायमाणं सत्स्वरूपं विपश्चिद्बोध्यं वस्तु सर्वथा विजृम्भते, येन विश्वकृद् विज्ञायते ।

असारे खलु संसारे विद्यैव सारभूतं वपुर्येनाणोरणीयान् महतो महीयान् विश्वरूपो विष्णुः सदा विकासते । वपुष्मतां विग्रहेणेन्द्रियमनोगोचरतां गतं नित्यं ज्योतिष्मत्स्वरूपम् । श्रीमद्व्यास-मनु-याज्ञवल्क्यशंकरोदयन-वाचस्पति-मण्डनमिश्रादि-पुण्यश्रवण-कीर्तिभिः सद्गुरुभिराविष्कृता ज्ञान-विज्ञान-समन्वित-दर्शनादिसत्सिद्धान्तनिवहा नित्य-शुद्ध-बुद्धस्वरूपातिशयेन चकासमाना विद्यैव परमेश्वरस्य दिव्यविभु-प्रभुसत्तां विद्योतयते, यां विना ईशोऽप्यनीशो भवति। भवति चानीशोऽपीशः। एतद्वस्तुविकासः सद्गुरूणामनु-कम्पया जगतां कल्याणायाविर्भवति । क्रमश्चैषः सनातनः ।

जाह्नवी यथा पुण्यसलिलां जलधारामादाय चिरात्पाटलिपुत्रं पुनाति तथा ममाचार्य-चरणाः स्व०म०म०श्री१०८ हरिहरकृपालुद्विवेदिमहोदया अपि ज्ञानसलिलां सुमतिधारा-मादाय प्रयागोपकण्ठीयपण्डितपुरादागत्य पाटलिपुत्रमधिवसतां विद्यारसिकानां तच्चरणा-न्तेवासिनां च चिरादज्ञानमलं विधूय स्वान्तं प्रकाशयन्ति स्मेति सर्वविदितो वृत्तान्तः ।

"एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन", "ब्रह्म सत्यं, जगन्मिथ्या," ब्रह्म सत्यं, तत्प्रकृतिर्नित्या, नित्यञ्च तत्कृतिस्वरूपं जगदिति प्रामाण्यवादिनां विविधदर्शनागमादीनां सिद्धान्तालोचनालोडननिपुणैस्तेषां महाचार्याणां प्रतिभालङ्कृतसुमतिरद्वैतवेदान्त-सिद्धान्तस्तम्भाश्रिता सती गुरुवरकृतग्रन्थेषु समुज्जृम्भते । प्रायोऽमरभाषाभाषिणो

ऽनुरागिणश्च विद्वांसः पाटलिपुत्रमहानगर्यामधिराजितस्य श्रेष्ठिप्रवरस्वनामधन्य-स्व० श्रीमनसुखरायमहाशयद्वारा संस्थापितस्य तदनुजेन श्रेष्ठिप्रवरेण श्रीमद्रामनिरंजनदासमुरारकामहोदयेन सततमनुपालितस्य श्रीरामनिरंजनदासमुरारका सं० म० विद्यालयस्य विमलविद्याविकासोद्भासितयशोगणगानमेषामाचार्यपादानां सुरभारती-पदसेवामाहात्म्यमेवावलोक्यते । तेषामेवाशीःराशिसमर्चित-पुण्यप्रकाशमण्डलेषु सम्प्रत्यपि ख्यातोऽयं संस्कृतमहाविद्यालयः सुधी-प्रवीराचार्यगणैः संसेव्यमानः श्रेष्ठिप्रवरैरनुजीव्यमानश्च प्रान्तव्यापिनीं विमलां ख्यातिं प्रख्यापयतीत्यपि विदुषां विनोदमावधर्यते नितरामिति ।

स्व० आचार्यवर्याणां विप्रोचितनवगुणसम्पन्नगुरुवराणां गुणमहिमानं मण्डयितुं वर्णयितुञ्च तादृशमतेरल्पत्वेनाहं कथं प्रभवेयमुद्बाहुरिव वामनः, परं प्रतीमो यद् विद्यायाः ज्ञानाधिकरणीयात्मस्वरूपायाः स्वरूपमेतेषां शिक्षायां, प्रवचने, संलापभाषणे च पुरतो विद्यमानमिवोपलभामहेस्म । यच्छृण्वतां विद्वद्वराणां धन्यवादज्ञापनवाक्यतोऽपि तद्विज्ञातमेव जगतो नित्यानित्यत्वे कूटस्थब्रह्मणोऽनित्यत्वविषये च समुत्थित-सन्देहनिराकरणविधिकौशलं, ब्रह्मणो द्वैताऽद्वैत-विशिष्टाद्वैतशुद्धाद्वैतादिसावच्छिन्नेश्वर-विषयिणी यादृशी मतिचुम्बिनी चर्चा अस्माकमाचार्यप्रवराणामवलोक्यतेस्म, तादृशी हृदयावभासिनी नान्यत्र कुत्राप्यश्रूयत । दर्शनमूर्द्धन्यशास्त्रेषु साहित्य-व्याकरणयोश्च तर्क-कर्कश-दुरूहस्थलीयप्रकरणानामनायासबोधाय जाड्यान्धतमोध्वंसिन्या, युक्ति-पूर्ण-ग्रन्थ्युद्भेदनप्रणाल्याऽन्तेवसतां स्वान्तः प्रकाशं कुर्वन्तोऽस्मदाचार्यपादा अपूर्वं यशोराशिमलभन्त । अपि च विद्यावादीन्द्रपक्षदलनैकदक्षा इमे हि आचार्यवर्याः न केवलं विहारप्रदेशे, अपि तु बंगोत्कलोत्तरप्रदेशेषु च शास्त्रीयाचारप्रचारैकप्रेम्णा अनेक-तन्त्रस्वतन्त्रविद्वद्धौरेयाः विद्यावारिधिपण्डितमण्डलैः साकं शास्त्रीयसिद्धान्तनिचयं संस्थाप्य चन्द्रचूडामणेनुकम्पयाऽतिप्रसिद्धसंसन्मध्ये प्रख्यातिमवाप्सुः । विद्या-विकासैर्भ्राजमानाः प्रशस्तयो 'महामहोपाध्याय'पदसमन्वित"विद्यारत्नाकर, विद्या-निधि", "पण्डितविभूषण-तर्कालंकार-प्रधानाचार्याद्य"नेकविधाः प्रमाणनिधयः एतेषां सारस्वतपदसेवामहिमानमतिशेरते । एवमेवामरगुण-गुम्फिता हि बृहस्पतिसमा अस्मदाचार्यचरणा यावज्जीवनं सुतनिर्विशेषप्रेम्णा शिष्यवर्गान् शिक्षयामासुः । शिष्या अपि सुलब्धविद्याः समस्ते भारते सुख्यातिरता योग्यस्थस्थानेष्वधिराजन्ते ।

अध्यापनेन सहैव ग्रन्थलेखनकौशलमपि श्रीमत्पादानां प्रशस्यमस्ति। इमे हि श्रीमद्भगवद्गीताया मधुसूदनीयव्याख्यानोद्भासमानां हिन्दीवाङ्मयीं व्याख्यां, श्रीमज्जैमिनीयकर्ममीमांसाशास्त्रीयशबरमुनिकृतभाष्ये कल्पकलिकां टीकां विलिख्य कस्य तत्र प्रविविक्षोः छात्रस्य हृदयाब्जकलिकां न विकासयन्तीति। तथा च मिथिलामार्तण्ड-दरभङ्गानगराधीश्वराणां स्व० श्रीमद्रमेश्वरसिंहमहोदयविद्यारसिकानां विरुदव्याख्यानानुरूपं मिथिलेन्द्रभूषणं श्रीमद्रमेश्वरकीर्तिकौमुदीनामकं खण्डकाव्यञ्च विरच्यापूर्वां मेधा-प्रतिभां प्रादर्शयन् इति।

इदानीमिमे हि सम्मान्यमहिमानो यद्यपि केनापि करालेन विरहिता चैत्र-कृष्ण-नवम्यां तिथौ ( सं० २००६ संवत्सरे ) कैलाशीयशाङ्करज्ञानपदसायुज्यमुपगता अपि प्रातःस्मरणीयगुणपद्धत्या तत्स्मृत्या श्रीहरिहरब्रह्मसत्स्वरूपाश्च ते सर्वथाऽस्मान् शिष्यवर्गान् भावनालोकैः शिक्षयन्तः प्रभवेयुरिति।



# मालवीयमान्यता

स्व० श्रीरामरूपशुक्लः

( प्राध्यापकः, श्रीरामनिरञ्जनदासमुरारकासंस्कृतकालेजः, पटना सिटी )

( १ )

पूज्यान् गुरुवरान् पूर्वं 'विश्वविद्यालये भवान् ।
विभागाध्यक्षतां गृह्णन्ननुगृह्णातु मादृशान्" ॥

( २ )

इत्येवं कथयामास मालवीयो महामनाः ।
मदनादिर्मोहनान्तो लोकशास्त्रविचक्षणः ॥

( ३ )

गुरुवर्यास्तदाहुस्तान् विनयन स्फुटं मुदा ।
श्रेष्ठिनो मयि यः स्नेहः स त्रुटयात् विधिनाऽमुना ॥

( ४ )

स्नेहबन्धेन बद्धोऽस्मि निर्देशं विदधे कथम् ।
तद्भेदं नोचितं मन्ये तस्मात् श्रेष्ठी निवेद्यताम् ॥

( ५ )

इत्येतद्वचनं श्रुत्वा प्रेमभावान्वितं मुदा ।
जगाद मधुरां वाचं संग्रहीष्ये भवादृशान् ॥

( ६ )

भवादृक् पण्डितोऽलभ्यः सुलभो द्रव्यसंग्रहः ।
श्रेष्ठिवर्यं यथाकालं प्रार्थयिष्ये भवत्कृते ॥

( ७ )

अटाट्यमानो नगरान्नगरं धनिकाकुलम् ।
संग्रहीतुं धनं कामं विद्वांसश्च महामनाः ॥

( ८ )

कलिकातां पुरीं रम्यां प्राप्तयात्राक्रमे सुधीः ।
आजगाम मनोऽभीष्टान् याचितुं शास्त्रपारगान् ॥

( ९ )

तत्र श्रुतं रामनिरञ्जनाख्यया वैश्याग्रगं पादनतं महामनाः ।
संयोज्य स्वाशीर्वचनैः पुनः पुनः स्वीयाशयं प्राकटयत् सदाशयः ॥

( १० )

अथेङ्गितं श्रेष्ठिवरोऽवगत्य जगाद मूर्ध्ना विनतेन सादरम् ।
विहाय चैकं यदवाप्तुमिच्छति ध्रुवं समर्प्यात्मसुखं लभेमहि ॥

( ११ )

उदीरितं प्रेमपयोधिनिर्गतं वचो निशम्याथ पुनर्जगाद ।
त्वमानयः पण्डितमण्डनं कुत इतीव प्रश्नोत्तरणे यशोऽपि ते ॥

( १२ )

कश्चिद् धनेनाथ श्रमेण कश्चित् पर्याप्तसाहाय्यमुदारचेतसा ।
श्रीविश्वविद्यालयवृद्धिहेतवे ददाति काश्यां विगतस्पृहो जनः ॥

( १३ )

तथैव साहाय्यदृशा निवेदये समर्प्य विद्वत्कुलभूषणं भवान् ।
प्रभूतकीर्त्तिं लभतां सनातनीं परोपकारव्रतिनो महत्तराः ॥

( १४ )

निशम्य वाचं नयतर्कशालिनीं मनो दधे श्रेष्ठिवरोऽभिधातुम् ।
विनाऽमुना तद्यशसा जडेन किं ममायमाराध्यबुधो न नीयताम् ॥

( १५ )

भवान् विवेकी गुणदोषयोः स्वयं क्वचित् कदाचित् सुलभेत तादृशम् ।
प्रगाढप्रेमाब्धिकृतावगाहनो महामनाः शुद्धमना निशम्य तत् ॥

( १६ )

उवाच सार्थां वसुधा भवादृशा कृपालुता मूर्त्तिमती सुलक्षिता ।
परस्परं प्रेमभरो विवर्द्धतां वसन्ति हि प्रेम्णि बुधा महान्तः ॥



# काशी-महाप्रयाणचित्रम्



काशीस्थमणिकर्णिकायां विष्णुपदे म० म० श्री हरिहरकृपालुद्विवेदिनाम्
अन्त्येष्टिसंस्कारे हिन्दूविश्वविद्यालयोपकुलपतिसहितकाशीस्थ-
प्रसिद्धविदुषां चित्राणि

# संक्षिप्तजीवन-परिचयः



प्रयागे
आविर्भावसमय —
संवत् १९२७ आषाढः
शुक्लपञ्चमी

काश्याम्
तिरोभावकालः—
संवत् २००५ चैत्र
कृष्णनवमी

श्रीचन्द्रदीपशुक्लः ( सम्मेलनमहासचिवः )

## जन्मस्थानम्—

ग्राम—पण्डितपुर-करमा, प्रयाग

एते बाल्ये वयसि स्वपितुः विद्वद्वरश्रीबलभद्रदत्तद्विवेदिशर्मणो राजपण्डितात् संस्कृतं पठितुमारेभिरे। खेलन्तः कूर्दमाना अपि प्रतिभाविशेषात् स्वाधीतविषयं प्रत्यहं स्वल्पेन समयेनैव जगृहुः, शेषं समयं क्रीडनेन व्यतीयुः। केनचित् ज्योतिर्विदा प्रेरितः एतेषां पितृमहोदयः आङ्गलभाषामेव राजकुमारेण सह पाठयितुं मनो दधे। परं कियत्कालानन्तरं राजकुमाराः सुकुमारबुद्धितया प्रतिभाशालिनामेषां सहपाठित्वमनुभवितुमशक्नुवन्तोऽमि-मं पाठमवारुरुधुस्तेन खिन्नमनसः एते ततः पलाय्य काशीं जग्मुः। तत्रापि स्वग्राम-वासिभिः विघ्नमुपगमिता अयोध्यामुपागमन्। तत्र पण्डितप्रकाण्डेभ्यः म० म० उमापति-(नकछेदराम)द्विवेदिमहोदयेभ्यः न्यायशास्त्रं सपरिश्रमं सपरिष्कारमधीत्य अन्यविषयाणां पाठं श्रावंश्रावञ्च पश्चात् काशीमागत्य म०म०श्रीराममिश्रशास्त्रिमहोदयानां सांनिध्यमवापुः। कियत्कालानन्तरं पूज्यपितुर्निदेशात् अपूर्णमेवाध्ययनं समाप्य शास्त्रार्थविहरणप्रसङ्गे विहारभूमौ पाटलिपुत्रमुपेयिवांसः। अत्र पण्डितप्रवरश्रीसुरेशमिश्रं विजित्य नागरिकैः बहुप्रार्थिता अपि अध्यापनमस्वीकृत्य गृहं प्रस्थिताः। व्यतीते कियति काले स्वदेशं गते तस्मिन् पण्डितप्रवरे पुनः पुनराहूता इमे श्रीरामनिरञ्जनदासमुरारका संस्कृतमहाविद्या-लयस्य प्रधानाध्यापकपदस्य कार्यभारमगृह्णन्। ततः प्रभृति तस्मिन्नेव महाविद्यालये अध्या-

पयन्तः तत्तद्धिकारिभिरनायासेन समर्प्यमाणं हिन्दूविश्वविद्यालयसंस्कृतविभागाध्यक्ष-पदं तथा मुजफ्फरपुरस्थ-धर्मसमाजराजकीयसंस्कृतमहाविद्यालयप्राचार्यपदमुपैक्षन्त। अन्ते काश्याम्भगवन्तं श्रीविश्वनाथमर्चयन्तः समागतान् संन्यासिनः विदुषश्छात्रांश्च-यावज्जीवनं पाठयन्तः चिरमूषुः।

विहारसंस्कृतसमितेराधिवेशने मुजफ्फरपुरे बिहारोत्कलप्रान्तयोः प्रकाण्डपण्डितेषु उपस्थितेषु लेखे शास्त्रार्थे च सर्वप्रथमं परितोषिकमेभिरवापि। अत एव केनचित् महा-विदुषा उक्तम्--

कुमारो वादिविजयी, रामस्तीक्ष्णमतिस्तथा।
गङ्गाधरः कविर्वाग्मी कृपालौ तु त्रयो गुणाः।

महाराजधिराज-दरभङ्गानरेश-श्रीरमेश्वरसिंहमहोदयमभिलक्ष्य पण्डितसभायां

नायं कामयतेऽन्यतोऽर्थकणिकां न क्लीबकल्पां कृपां
नापि क्वापि पदोन्नतिं न विजयख्यातिं न चान्यत् परम्
कामं कामयते परस्परसमप्रेमोपचाराश्रितै-
र्वाचां चारुपरिश्रमैः सुचरितैः प्राचां प्रचारं चिरम्।

इति श्लोकेन स्वाभिप्रायं प्राचकशन्।

एतेन त्यागस्य अन्ते काशीवासेन भक्तेः संन्यासिनामन्येषाञ्च काश्यां निराबाधम-ध्यापनेन संस्कृतसेवायाञ्च प्रकृष्टो भावः समसूचि।

एतैरध्यापिता योग्यतमाश्छात्राः संन्यासिनश्च भारतस्य कोणे कोणे कीर्तिपताकामुद्धून-यन्ति।

एतेषां ज्येष्ठा एका सौभाग्यशालिनी पुत्रपौत्रादिसमन्विता चन्द्रकलानाम्नी कन्या। एक एव पुत्रः—पितुः पदमनुवर्तमानः पं० श्रीब्रह्मदत्तद्विवेदी श्रीरामनिरञ्जनदासमुरारका-संस्कृतमहाविद्यालयस्य प्राचार्यपदमलङ्करोति।

एतन्निर्मिताः प्रकाशिता ग्रन्था इमे सन्ति

१—शाबरभाष्यस्य टीका कल्पकलिका
२—रमेश्वरकीर्तिकौमुदी
३—कुसुमाञ्जलिटीका
४—बृहदारण्यकवार्तिकसारस्य हिन्दीभाषया अनुवादः
५—भगवद्गीतामधुसूदनीटीकाया हिन्दीभाषया अनुवादः



# संस्मरणम्

**श्रीरामवचनपाण्डेयः,**

( प्रधानाध्यापकः, रांचीस्थराजकीयसंस्कृतोच्चविद्यालयस्य । )

अस्माकं विहार-प्रान्तस्य कथैव का ? प्रायेण समग्रेऽस्मिन् भारते वर्षे न केऽप्येतादृशाः सुरभारतीसमुपासकाः सन्ति ये प्रातःस्मरणीयचरणानां ब्राह्मीभूतशरीराणां महामहोपाध्याय-पदवीप्रपूजित-यशसां तत्रभवतां भवतां श्रीहरिहरकृपालुद्विवेदि-महोदयानां नाम सादरं सश्रद्धं न गृह्णन्ति । भगवत्याः शारदायाः वरदपुत्राणां तेषामेव महानुभावानां संस्मरणीयं किमपि "यच्चाधुनापि याथातथ्येन मदीयं स्मृतिपथमलङ्करोति इहोपस्थापयितुं समुत्कण्ठितेनान्तःकरणेन प्रेरितोस्मि ।

स्मरामि, यदाहं काशीहिन्दूविश्वविद्यालये आइ० ए० कक्षायाश्छात्रः आसम् गोयनकामहाविद्यालये साहित्यस्याध्ययनं कुर्वन्नासम् । तस्मिन् समये कदाचिद्दर्शनार्थं गतोऽभूवम् । मत्परिचयप्राप्त्यनन्तरं ते प्रोचुर्यद् भवान् संस्कृतेऽनुवादादिकं किमपि करोति न वा ? मयोक्तम्, आम्, करोमि । विद्यावदातेन स्मितेन तैः पृष्टोऽहम् यत् "उनकी कथा रामायण में वर्णित है" । अस्य वाक्यस्यानुवादं करोतु । मयोक्तं यत् वाक्येऽस्मिन् "उनकी" इति पदेन स्त्री वा पुरुषो वाऽभिप्रेतोऽस्ति ? तैरुक्तं यद् यथेच्छं वक्तुमर्हति भवान् । तदाहं तस्य तस्याः वा कथा रामायणे वर्णितास्तीत्युदतीतरम् । एतच्छ्रुत्वा साधुवादेन मां सम्वर्धयामासुः । तस्मिन् समये तत्र बहवो विद्वांसस्तेषां सविधे समुपविष्टाः आसन् । केचन वेदान्तस्य, अन्ये न्यायशास्त्रस्य अपरे च व्याकरणविषयस्य विषमस्थलीयां शङ्कामुपस्थापयन्तिस्म । समेषां तेषां सन्देहान् निराकुर्वन्तस्ते सुरगुरुरिव दरीदृश्यन्ते स्म । एवं पण्डितमण्डलमण्डितां तद्गोष्ठीं दृष्ट्वा चकितः सन् तच्चरणरजोभिः स्वमस्तकं पवित्रीकृत्य परावर्तितोऽभूवम् ।

संस्कृतभाषायां राष्ट्रभाषायाञ्च तेषां भाषण-श्रवणस्यापि बहुशोऽवसरं लब्धवानस्मि । विहारराज्यस्य मन्त्रिप्रवराः श्रीबाबूमहोदयाः तथा श्रीमदनुग्रहबाबूमहोदयाः

भावुकाः विद्वाँसः ये स्वयमपि प्रकाण्डवक्तार आसन् तानपि महामहोपाध्यायमहोद-यानां वैदुष्यपूर्णतर्कयुक्तस्य सत्यैरोतप्रोतस्य वस्तुस्थितेरुद्घाटने तथ्यस्य समुपस्था-पने च समर्थस्य व्याख्यानस्याग्रे नतमस्तकान् दृष्टवानस्मि पटनासीट्याम् अन्यत्रापि च ।

यदा ते वाराणस्यां काशीवासप्रसङ्गेन विद्यमाना आसन् तदा तत्रापि मया तेषां सविधे समागत्य मिलितानां विद्वद्वरेण्यानां गोष्ठी दृष्टास्ति । नानाविधाः शास्त्रीय-चर्चाश्च श्रुताः सन्ति । यद्यपि तासां शास्त्रीयचर्चानां विस्तरेण वर्णनं मत्कृते सर्वथाऽ-सम्भवमेवास्ति, तथापि तत्स्त्या, अनुभूतिरीदृश्येव विद्यते मम यत् विदुषामरण्यानीवेयं वाराणसी, किन्तु तस्यामरण्यान्यामद्वितीयः केशरीव स्थितिरेतेषामेव विद्वच्चक्रचूडा-णीनामस्तीति ।

अद्य यद्यपि तेषां संस्कृतवाङ्मयावताराणां शास्त्रीयानुशीलनजन्यशेमुषीजुषां विदुषां शारीरिकी सत्ता न विद्यते, तथापि भारतीयसंस्कृतेः सभ्यतायाश्च प्रतीक-भूतैः स्वकीयभाषणैर्लेखैश्च ऋत्विजनोचितभावानां सर्जकस्वरूपेण तेऽहर्दिवं वन्दनीयाः स्मरणीयाश्च सन्त्येवेति ।



## सत्ये नास्ति भयम्


### कीर्त्यानन्दः 'प्रचेताः' शास्त्री

( संस्कृताध्यापकः, उच्चविद्यालयः, चन्दनपुरा, जमालपुर, मुंगेर । )


भारत-भूमौ कोऽपि ईदृशः संस्कृतप्रेमी नास्ति यः गुरुमहोदयं नावगच्छति, सर्वे अवगच्छन्तीति विश्वासः । जगति बहवः विद्वान्सो वर्त्तन्ते परन्तु तेषु विद्वत्सु गुरुमहोदयो नास्ति । अयं तु साक्षात् देवोऽवर्तत । काऽपि शङ्काऽस्माभिर्न कर्तव्या ।

**एकेन कविना उक्तम्—**

**गृहे-गृहे पुस्तकभारभाराः, पुरे-पुरे पण्डितयूथयूथाः ।**
**वने-वने तापसवृन्दवृन्दाः, न ब्रह्मवेत्ता न च कर्मकर्त्ता ॥**

गुरुमहोदयः तादृशः पण्डितो नासीत् यः बाह्याडम्बरेण पूर्णः ।

इयमुक्तिः अक्षरशो गुरुमहोदयं प्रति परिलक्षिता भवति—

**विपदि धैर्यमथाभ्युदये क्षमा, सदसि वाक्पटुता युधि विक्रमः ।**
**यशसि चाभिरुचिर्व्यसनं श्रुतौ, प्रकृतिसिद्धमिदं हि महात्मनाम् ॥**

गुरुमहोदयः संस्कृत साहित्याकाशस्य सूर्योऽवर्तत गुरुमहोदयस्यैका अपूर्वा घटना वर्तते । इयं घटना वस्तुतः पूज्यपादस्य पाण्डित्यस्य परिचायिका वर्तते ।

श्रेष्ठीश्वरः पाटलिपुत्रवासी मनसुखरायमहोदयः संस्कृतविद्यायाः रक्षार्थं एकं विद्यालयं स्थापितवान् । तस्मिन् विद्यालये सुरेशर्मिश्रमहोदयः प्रधानाध्यापकस्य पदे नियुक्त आसीत् । अस्याः पाठशालायाः समीपे एका धर्मशाला वर्तते यत्र पथिकानां निवासप्रबन्धो वर्त्तते ।

एकस्मिन् काले भ्रमणप्रसङ्गेन गुरुमहोदयः तत्र गतः रात्रौ च तस्यां धर्मशालायामतिष्ठत् । धर्मशालायाः सन्निकटे श्रीविहारीदासो नाम प्रतिष्ठितकुल एको ब्राह्मणः निवसतिस्म । प्रातःकाले तस्य यज्ञोपवीत-संस्कारे बहवः विद्वान्सः आगतवन्तः आसन् । तत्रागतेषु पण्डितेषु सुरेशर्मिश्रमहोदयः सर्वप्रधानो जनः आसीत् । पण्डितमण्डल्यां स ईदृशः शोभते स्म यथा गजेषु मृगराजः । तस्यां पण्डितसभायां यदा सुरेशमिश्रमहोदयैः शास्त्रार्थं विधातुमसमर्थोऽभवत् तदा एको जनः अकथयत् यत् धर्मशालायाम् एको विद्वान् वर्त्तते । तत्पश्चात् बहवः प्रधानपुरुषाः तस्यां सभायां चलितुं गुरुमहोदयाय प्रार्थनां कृतवन्तः । गुरुमहोदयोऽपि गम्भीरभावेन तत्स्थानमासाद्य सर्वान् जनानानन्दितान् कृतवान् ।

गुरुमहोदयस्य गम्भीरभावं दृष्ट्वा सुरेशमिश्रमहोदयः स्वयमेव प्रश्नमकरोत । तं प्रश्नं श्रुत्वा गुरुदेवः मृगेन्द्र इव सुरेशमिश्रमहोदयमपश्यत् ।

अनेन प्रकारेण पण्डितानां "प्रातिपदिकार्थसूत्रे" शास्त्रार्थोऽभूत् । विविधाक्षेपाणाम् युक्तियुक्तं समाधानं श्रुत्वोपस्थितसमाजः विस्मितोऽभूत् । बहोः कालं यावत् अस्य विद्वत्तापूर्णं विलक्षणमुत्तरम् श्रुत्वा सुरेशमिश्रमहोदयः हर्षेण विमुग्धो भूत्वा मुक्तकण्ठेनास्य प्रशंसां कृतवान् । उपस्थितसमाजः जयघोषेण सभां प्रतिध्वनितां कृतवान् । सर्वे पण्डिताः अवागच्छन् यदयं पण्डितः सर्वेषां शास्त्राणां वेत्ता वर्त्तते । किमधिकम् ?

"सत्ये नास्ति भयं क्वचिदिति ।"



# भक्त्युद्गारः

## श्रीशङ्करानन्दः वर्णी

प्रजागर इव गुणानां, निधानमिव विद्यानां, प्रभातवेलेव प्रबोधस्य, तारुण्यमिव प्रागल्भ्यस्य, गङ्गाप्रवाह इव व्याख्यानधारायाः, राशिरिव सौजन्यस्य, अपराजय इव शास्त्रार्थस्य, निरर्गलस्रोत इव लेखनकलाया, मूर्तिरिव विभूष्यवैदुष्यस्य, प्रादुरासीत् सरयूपारीणवंशावतंसः श्रीहरिहरकृपालुद्विवेदिमहाभागस्तीर्थराजोपकण्ठे प्रदेशे वादिव्रातकुञ्जरकण्ठीरवं लोकोत्तरप्रतिभाप्रभावप्रगल्भं परीक्षाक्षणविलक्षणविचक्षणं परास्तसमस्तपण्डितमण्डलाखण्डलं महामहोपाध्यायपदवी दवीयसी परेषामेवादवीयसी भवन्ती प्रसह्येव असमय एव यं वव्रे । एकदेशस्थितमपि समस्तभारतव्यापिनं, पाटलिपुत्रं प्रसाधयन्तमपि वाराणसीवाससरसं वैयाकरणपञ्चाननमपि तर्ककर्कशशेमुषीकं, निश्शेषाशेषविशेषवेदान्तपारावारावारीणपारीणं, मीमांसाऽसीमसीमापारदृश्वानं, कविताकुमुदकौमुदीमोदितदिग्वधूमण्डलमण्डितकीर्तिनिकरनिकुरम्बं, महामहापण्डितप्रचण्डचण्डिमानं यं विश्रुतश्रुतधारिणोऽन्तेवासिनो दिग्दिगन्तेभ्यः सहस्रशः समागत्य प्रासीषधन्, समपूपुजन् प्राचीकशन् च नरीनृत्यतेस्म, वाणी, मोमुच्यते यत्र महनीयता, दरीदृश्यतेस्म समुपस्थितिः, लोलोक्यतेस्म अकुण्ठता, चञ्चूर्यतेस्म चारुता । एवं समुदितगुणगणगौरवागूरिताय महनीयमहात्मने महापुरुषधौरेयाय सदाचारपरंपरापरिपालनसमुपबृंहितरमणीयपुण्यकीर्तये श्रीश्रीमते गुरुवर्याय शतशः सहस्रशः प्रणामभक्त्युद्गारमहं प्रकटये ।

●

# गुरुभ्यो नमः ।

श्रीरामवृक्षपाण्डेयः प्राध्यापकः,

( मुरारकासंस्कृतमहाविद्यालयः, पटना सिटी )

महामहिमब्रह्मर्षि म० म० परमगुरुवरसम्बन्धि वृत्तन्तदीयप्रतिभाभारसन्तन्न केवलं भारतवर्षमनुगृह्णाति स्वीयसुधावर्षेण भव्यगुणोत्कर्षेण च प्रत्युत समस्तां वसुमतीं मसुमतीं सम्पादयदान्वीक्षिक्यादिचतुर्दशविषयोपपादनमहिम्ना सुतरां व्याप्नोति ।

परमाराध्यविशिष्टगुणगणोपबृंहितानां परमगुरूणां महामहोपाध्यायानां जीवनसम्बन्धिवृत्तमदोऽनिवार्यौदार्यप्रभृतिगुणगणगुम्फितार्यसंस्कृतिसमर्पणं दर्पणमिव दृक्पथन्नीयते । कृत्याकृत्यनिवृत्यनुशासनपरं शास्त्रमिव श्रद्धाधिक्येन संश्रृण्वन्ति सुकृतिनः ।

श्रीमत्परमगुरुचरणानां परमपूतजीवनवृत्तसमाकर्णनेन केषां मनीषिणां संस्कृतिसमुद्धारकाणां चेतांसि नोद्विग्नतामाप्नुयुः ? म० म० पं० श्रीपरमगुरुचरणानां धीमन्मिहिराणां सकलशास्त्रपरावारपारीणानामसाधरणप्रतिभावतां समस्तप्रतिवादिविजयकीर्त्त्या समेधितगरिष्ठनिष्ठाप्रतिष्ठानां महामान्यानां पूज्यतमानां सुनिर्मलं प्रखरतमं पाण्डित्यं केषाञ्चेतांसि न विस्मापयते ?

पाटलिपुत्रे विहारराजधान्यामेव विविधविद्याध्ययनकामनया देशान्तरमुपागतेभ्योऽन्तेवासिभ्य उत्तमोत्तमां शिक्षां ददतः ससुखमध्यवसन् ।

जगति कर्मैव प्रधानन्तत्र यज्ञस्तत्रापि च महापूर्वस्तेन विविधमिष्टं सिध्यतीत्यमुं राद्धान्तं सोपपत्तिकं प्रतिपादयतः पूर्वमीमांसाशास्त्रस्य "शाबरभाष्यस्योपरि कल्पकलिकानाम्नीं गूढार्थतमां टीकां विलिखन्तः सबहुमानं सम्मानिताः । एवं श्रीमद्भगवद्गीतायाः मधुसूदनसरस्वतीविरचितायाष्टीकाया भाषानुवादं निर्मायाद्वैतवादं प्राचारयन् ।

स्वनामधन्यानां पाठनप्रणाल्यपि विचित्रासीद्, यया विबुधा अविबुधाश्च सर्वे विमुह्यन्ति स्म, वितर्कये यदस्याप्रतिभटां प्रतिभां विलोक्य देवगुरुर्बृहस्पतिरपि भास्करशरणं समायाति ।

परमगुरोर्दुरितविषये मात्सर्यं, सत्कर्मणि पक्षपातः, अनीतौ क्रोधः, परोपकारेऽनुरक्तिः, ऋते हार्दमनृते औदासीन्यं, शास्त्रे स्वाधिकारः, परब्रह्मणि तल्लीनता नान्यत्रेति ।

एकदा श्रीयुक्तमदनमोहनमालवीयः स्वसंस्थापितविश्वविद्यालये विष्णुशिवरूपापन्नं (हरिहरनामानं) नियोजयितुं श्रीमन्तं श्रेष्ठिनं महोदयं भिक्षां याचितवान्, तद्वच आकर्ण्य श्रेष्ठिमहोदयः प्रावोचत् यच्छ्रीमन् यदयमपराधः क्षन्तव्यो यद्वल्लराजमाचार्यं परित्यज्य यदिच्छेत् तत् सर्वं भवते समर्पये इति, परन्नाहमाचार्यं वितरामीति। लक्ष्मीविलासपाशैः सहस्रं विद्वांसः संनद्धा भवन्ति, परं धन्याः पूज्यतमा महामहोपाध्यायाः परमगुरव एतद्पाशविशेषैः सर्वथाऽनपेता इति। अल्पधियो मम नास्ति कश्चन शब्दो येन परमाचार्याणां पूज्यतमानां गुणा वर्णयितव्याः स्युरिति। अल्पधिया मया एत एव वाक्यपुष्पाञ्जलयः श्रीमत्परमगुरुचरणेभ्यः समर्प्यन्त इति।

●

## विजयख्यातिः।

### श्रीरङ्गनाथपाठकः, प्रधानाचार्यः, पटना।

श्रीमतां भारतभूषणानां विहारहाराणां विद्वन्मण्डलीमण्डनानां विभूषितमहामहोपाध्यायपदानां साक्षाद्धरिहरांशावतारभूतानामाराध्यचरणश्रीहरिहरकृपालुद्विवेदिमहोदयानां गम्भीरपाण्डित्यपरिपूर्णवाग्वैभवचमत्कृतेः प्रथमदर्शनम्।

विहारोत्कलप्रान्तीयसंस्कृतसमितेः कन्वोकेशनपरिषदोऽधिवेशनं मोदफलपुरे दरभंगामहाराजस्य सुसज्जितमहाभवने तस्यैवाधिपत्ये महता समारम्भेणारब्धमासीत्। तत्र विहारोत्कलप्रान्तीयाः प्रायः सर्वे पण्डिततल्लजाः सदस्याः, विशेषत आमन्त्रिताः महापुरुषाः अन्ये च दर्शनार्थं कतिपयच्छात्राः समुपस्थिता आसन्। तत्र शास्त्रविचारस्यापि समयो निर्धारित आसीत्। कतिपयकार्यानन्तरं स समय आगतः, तदा एकः कश्चित् पण्डितः महामहोपाध्यायाभिमुखो भूत्वा व्याकरणे समासशक्तिविषये प्रश्नं कृतवान्।

यदा महामहोपाध्यायः उत्तरं दातुमारब्धवान् तदा प्रश्नकर्ता महोदयस्तु एकेनैवोत्तरेण मौनमवलम्ब्य स्थितः। तदापरः वद्धपरिकरः तदभिमुखमागत्य महताडम्बरेण तमेव प्रश्नमग्रेसरं कर्त्तुं प्रायतत, परन्तु सोऽपि महात्मा द्वितीयकोटावेव तदीयवाग्-

धारायां निमग्नो मूकताशरणमेवागच्छत् । एवमेव न्यायशास्त्रेऽपि पण्डितपरम्पराभिः प्रश्नः कृतः । महामहोपाध्यायानां महता गम्भीरविकटवाग्धाराप्रवाहेण समाहितिरभूत् ! एवं क्रमशः पञ्चषाः महाविद्वांसः यदा तदीयप्रचण्डविकटवाग्धाराप्रवाहे निमग्नाः कुण्ठित-वचना अभवन् तदा कश्चिदपि पण्डितः तदभिमुखं गन्तुं साहसं न कृतवान्, तदा स्वयं पूज्यपादमहामहोपाध्यायेनोक्तं मुच्यतामयमपि विषयः । वेदान्ते, सांख्ये, अन्यस्मिन् वा कस्मिंश्चिद् विषये कश्चित् प्रश्नं करोतु, तदा कश्चिदपि किञ्चिदपि प्रष्टुं नोत्साहं कृतवान् । तदैवमेव प्रायः सर्वैरनुभूयतेस्म यदस्य महानुभावस्य रसनाग्रे समाराधिता वाचामधिष्ठात्री साक्षाद् भगवती सरस्वती एव नरीनृत्यतीति । अत्रैव मया सह पूज्य-पादानां प्रथमं परिचयोऽभूत् ।

तदनु तद्दर्शनार्थं यदा कुत्रचित् सन्देहो भवति स्म तदा तन्निवारणार्थञ्च तदन्तिकं प्रायोऽगच्छम् । प्रतिदर्शनञ्च किञ्चिन्नवं ज्ञानप्रसादमादायैव विशङ्कश्चागच्छमिति अस्य महानुभावस्य धर्मनैष्ठिकता, सदाचारपरायणता, सुजनता, सहजकृपालुता च सर्वा एव स्पृहणीया आसन् ।

अस्य महानुभावस्य रिक्तं स्थानमिदानीं तदीयसकलस्पृहणीयगुणोपेतः पाण्डित्येऽपि अन्यूनः तदात्मज एव श्रीब्रह्मदत्तद्विवेदिमहोदयः समलङ्करोतीति महान् हर्षविषयः ।

यद्ययं नाभविष्यन् मन्ये तत् स्थानं रिक्तमेवाभविष्यत् । आशासे चैतस्य कार्य-काले तन्महाविद्यालयस्यातीव समुन्नतिर्भविष्यतीति ।

●

## श्रद्धाप्रसूनाञ्जलिः

श्रीरूपनाथझाः

( मिथिलासंस्कृतविद्यापीठस्थः, दरभङ्गा )

अज्ञानावृतभारते विरलतां याते प्रचारे श्रुते—
रर्थज्ञानविमोहिते बुधगणे शास्त्रं रटत्यक्षरैः ।
कारुण्याप्लुतमानसः श्रुतिपथं योऽबूबुधत् पण्डितान्
सोऽयं मे गुरुतल्लजो हरिहरः पायादपायात्सदा ॥

( २ )

समस्तशास्त्रेषु विलक्षणां तामकुण्ठिताञ्च प्रतिभां दधानः ।
असंशयं मानुषरूपधारी द्वैपायनो गीष्पतिरेष वा स्यात् ॥

( ३ )

वैदुष्ये तस्य कीर्तिं त्रिभुवनमखिलं पूरयन्तीं निशम्य
विद्वांसश्चेत्य दूरादवहितमनसोऽधीतवन्तः सुखेन ।
किं भूम्नां यद्गिराणां प्रसृमरकणिका लोकमुल्लासयन्ति
प्राप्याधारं कृपालुं गुरुवरचरणं भारतं भारतं नः ॥

( ४ )

ग्रन्थाननेकान् बहुशो विधाय निषिच्य तावच्छ्रुतिसल्लतायाम् ।
सुभाव्य सद्वारि सदैव फुल्लां धत्ते महौद्यानिक एष विज्ञः ॥

( ५ )

प्राभूद् येषां प्रवृत्तिः प्रथमवयसि हि प्रोल्लसद्वेदवादे
मध्ये चाध्याप्य शास्त्रं तमखिलशरणं सर्वदिक्षु प्रचारे ।
अन्ते चासीत् प्रशस्ता वयसि च चरमे कृष्णपादारविन्दे
तिस्रश्चैताः स्ववस्थाः ममलिखित इवाभाति तेभ्यो नमोस्तु ॥



# पावनस्मृतिः

## याज्ञिकसम्राट् पण्डित श्रीवेणीरामशर्मा गौड

( अध्यापक, जो० म०गोयनकासं०महाविद्यालय, वाराणसी )

वाराणसी अनादिकालतः संस्कृतवाङ्मयस्य प्रमुखं केन्द्रं वर्तते। संस्कृतविद्याम् अधिजिगमिषवः विद्याप्रणयिनः पारेसहस्रक्रोशात् काशीमुपेत्य विशिष्टविद्वत्ताम् अर्जयन्ति। अधिकाशि विद्यासाधकाः सुधियः निजविद्वत्तालोकेन सर्वदा सम्पूर्णं वैरिञ्चप्रपञ्चम् आलोकाञ्चितं वितन्वते।

महामहोपाध्यायपण्डितश्रीहरिहरकृपालुद्विवेदिनः अस्यामेव श्रेण्याम् उद्भटा मनीषिण आसन्। ते हि वाराणस्यां समेषां शास्त्राणां कूलङ्कषमदूष्यं वैदुष्यं समार्जयन्, येन तेषां गणना भारतवर्षस्य प्रमुखविद्वत्सु अधिष्ठितकनिष्ठिका समजायत।

महामहोपाध्यायाः सर्वेषु शास्त्रेषु पारगामिनो विपश्चितोऽभूवन्। ते विपश्चित्परिषत्सु यदा विविधशास्त्रेषु शास्त्रार्थं प्रावर्तयन्, यदा सुरगिरा प्रवचनमातन्वन् तदा तदीयासाधारणशास्त्रार्थप्रागल्भ्यं तथा निरर्गलनिर्गलद्वाग्धोरणीं दर्शं दर्शं विद्वन्मण्डलं मन्त्रमुग्धमिवाकृष्टं मोमुग्धमानमानसं तां लोकोत्तरप्रतिभां वैदुषीञ्च मुक्तकण्ठं श्लाघमानं तानेतान् वस्तुतः 'सर्वतन्त्रस्वतन्त्रान्' उद्घोषयति स्म।

महामहोपाध्यायाः 'पाटलिपुत्र'–नगरे श्रेष्ठिश्रीरामनिरञ्जनदासमुरारकासंस्कृतमहाविद्यालये 'अध्यक्ष'पदमधितिष्ठन्तः बहुतिथेऽनेहसि विविधशास्त्राण्यध्याप्य संख्यातीतान् संख्यावतोऽन्तेवसतः प्रास्तुवन्। पश्चात् स्मरपुरहरहरनगरीवासमभिलषन्तः स्वानुगुणं तदर्हं निजसुपुत्रं श्रीब्रह्मदत्तद्विवेदिनं स्वाधिष्ठिताध्यक्षपदे प्रतिष्ठाप्य स्वयं काशीं समाव्रजन्। एतेषां वाराणसीसमागमेन काशी सविशेषं चकाशे।

प्रातः स्मरणीयकैलासवासिमहामहोपाध्यायपण्डितसम्राजां श्रीशिवकुमारशास्त्रिणां महाप्रस्थानानन्तरं चिराय काश्यां विश्वतोमुखप्रतिभासम्पन्नसर्वतन्त्रस्वतन्त्रस्य विपश्चिदपश्चिमस्य यन् नैयून्यं विद्वन्मानसं खिलीकुरुते स्म तस्य पूर्तिः महामहोपाध्यायद्विवेदिमहोदयानां काशीसमागमेन समजायत। एतेषां विशिष्टविद्वत्तया प्रसभं प्रभावितो विद्याविद्वदनुरागी श्रीगौरीशङ्करश्रेष्ठिगोयनकामहाभागःताननुनयविनयोपसर्पणैः जो० म० गोयनकामहाविद्यालये 'प्रिन्सिपल' पदे प्रतिष्ठापयामास। इमे यदा गोयनकामहाविद्यालये विद्याप्रचाराय अध्यक्षपदं पर्यभूषयन् ( ततः प्राप्तं द्रव्यं निखिलमपि राजेष्टितं कृत्वा धार्मिककार्ये

समार्पिपन् । ) तदाऽस्य संस्कृतमहाविद्यालयस्य अनन्यसाधारणी प्रतिष्ठा समवर्तत । पण्डितप्रकाण्डानामेषां संस्कृतमहाविद्यालयस्य च भूष्यभूषकभावः परस्परनिरूपितः पर्याप्तं व्यद्योतिष्ट । संस्कृतविद्याया एव तदिदं स्वर्णयुगमासीत् पारतन्त्र्यनिगडितेऽपि भारते ।

काशीहिन्दूविश्वविद्यालयस्य वर्तमानवाराणसेयसंस्कृतविश्वविद्यालयस्य तातभूत-तदानीन्तन-गवर्नमेन्ट-संस्कृतकालेज-प्रभृतिशिक्षासंस्थानां प्राध्यापका अनेके मस्करिणश्च वेदान्तादिशास्त्राध्ययनार्थम् अहमहमिकया कयाऽपि महामहोपाध्यायानेतान् समुपासरन् । निरवच्छिन्नप्रवृत्ताध्यापनेन छात्रा अपि अचिरादेव विद्वन्मतल्लिकाः सम्पद्य चकाशिरे च ।

काश्यां प्रवर्तमानासु विविधविद्वत्सभासु यदेमे समुपतिष्ठन्ते स्म तदैते स्वविशिष्ट-वैदुष्यालोकेन भास्करायमाणा भासन्ते स्म । एषां चमत्कारकारिणाऽलौकिकशास्त्रार्थेन प्रौढव्याख्यानशैल्या च काशीविद्वद्वृन्दं विस्मयदष्टदन्तच्छदं प्रमोदकम्पितोत्तमाङ्गं समपद्यत ।

अस्माकं कै० महामहोपाध्यायपण्डितश्रीप्रभुदत्तशास्त्रिणां तथाऽस्मत्पितृचरणानां ब्र० महामहोपाध्यायश्रीविद्याधरशास्त्रिणां च महामहोपाध्यायकृपालुभिः साकं प्रत्नः घनिष्ठः संस्तवोऽनुवर्तते स्म । यदाऽहं किशोरभावमन्वभवं तदैवास्मत्पितृ-पितामहयोः मुखात् महामहोपाध्यायपण्डितहरिहरकृपालुद्विवेदिनां विद्वत्तायाः प्रशंसामशृणवम् । अतोऽहं कौमारादेव प्रतीक्ष्य महामहोपाध्यायनामधामविशिष्टविद्वत्ताभिः सुष्ठु संस्तुतोऽस्मीति भूतार्थं निगदामि ।

भागवत्याऽनुकम्पया म०म० यदा गोयनकासंस्कृतमहाविद्यालये अध्यक्षतां भूषयन्त आसन् तदाऽऽरम्भे उक्तमहाविद्यालयेऽहं पूज्यपादेभ्योऽस्मत्पितृमहामहोपाध्यायस्व०विद्या-धरजीगौड( वेदप्रधानाध्यापक-गोयनकासंस्कृतमहाविद्यालय )महाभागेभ्यः वेदाध्ययनं विदधान आसम् तथा शास्त्रिपरीक्षां ददानोऽभूवम् । म०म०श्रीकृपालुमहोदयानामध्य-क्षत्वेन नियुक्तिम् आकर्ण्य भृशमहृष्यम् । सम्प्रति मम म० म० दर्शनं प्रत्यहं भवति स्म । अहं महत्या श्रद्धया म० म० पादस्पर्शं कुर्वाण आत्मानं धन्यधन्यम् अमन्ये । श्रद्धेया म०म० मां परिचिन्वन्ति स्म, अतो यदाहं प्रणामं करोमि स्म तदा ते मां हार्दाशंसनेन सह सन्दिशन्ति स्म "यावद् निजप्राचीनपरम्परागतवेदविद्यासंरक्षणसंवर्द्धन-तत्परो भवेः, तावत् कदापि कस्यापि वस्तुनोऽभावं न्यूनतां वा नानुभवेः" इति ।

श्रेष्ठिगोयनकागौरीशङ्करः काश्यां यस्मिन्नेवाहनि जो० म० गोयनकामहा-विद्यालयं प्रत्यष्ठापयत् तदाप्रभृत्येव अस्मत्पितृपादा उक्तमहाविद्यालये वेदप्रधानाध्यापक-

पदे नियुक्ता अभूवन्। १९३९ ई० वत्सरे मत्पितृचरणा गोयनकामहाविद्यालयाध्यक्षान् म. म. श्रीकृपालुमहोदयान् पत्रमेकं विलिख्य न्यवेदयन् यत् "अहं गोयनकामहाविद्यालयोपक्रमदिवसात् अध्यापनं विदधन्नस्मि। अधुना भवन्तः निजमहाविद्यालयेऽध्यापनकार्यात् मां विमोच्यान्यं कमपि तत्र नियोक्तुं सकृपा भवन्तु" महामहोपाध्याया मत्पितृपादपत्रमनुवाच्य मत्पितरमब्रुवन्—"श्रीमन्तो गोयनकामहाविद्यालयात् मुक्तिं कामयन्ते, किन्तु वयं पुनः विद्यालयात् भवतो मोक्तुं नैव पारयामः। भवादृक्षाः सर्ववरिष्ठा वेदज्ञा महाविद्यालयस्य परमलंकरणम्। तदिदं हापयित्वा गोयनकामहाविद्यालयस्य शोभामवसाययितुं नेहामहे।" तदनु महामहोपाध्याया मत्पितृपत्रं श्रेष्ठिगोयनकागौरीशङ्कराय प्रादर्शयन् तथाऽकथयंश्च श्रेष्ठिनं—"म. म. पण्डितश्रीविद्याधरजीगौडाः विद्यालयात् स्वात्मानं पृथग्भावयितुमभिलषन्ति, परन्तु तानेतान् विमोच्य श्रीमन्महाविद्यालयस्य शोभाम् ऊनयितुं वयं नैव काङ्क्षामः। श्रीमत्परिवारेण साकं म. म. पण्डितश्रीविद्याधरजीगौडमहोदयानां सम्पर्कः समनुबध्नाति, स सम्पर्कः सर्वदा स्थेयान् भवेत्। अतो वयं कामयामहे यत् चतुर्णामपि वेदानामध्यापका म. म. श्रीविद्याधरजीगौडमहाभागा निरीक्षका विधीयन्ताम्। एते प्रतिमासम् एकस्मिन् दिवसे महाविद्यालयं समेत्य चतुर्णामपि वेदानाम् अध्यायिनश्छात्रान् परीक्षन्ताम्, येनेदं ज्ञातुं शक्येत केन च्छात्रेण कियदधीतम् एकस्मिन् मासि तथा पण्डितश्रीविद्याधरजीगौडात्मजं पण्डितश्रीवेणीरामगौडं स्वविद्यालये वेदाध्यापकपदे नियोजयतु श्रीमान्, यश्च साम्प्रतं गोयनकामहाविद्यालये शुक्लयजुर्वेदशास्त्रिचरमखण्डेऽधीयानः समेधते। एवं विधानेन पण्डितश्रीविद्याधरजीगौडमहाभागानां सम्बन्धः श्रीमद्विद्यालयेन समं दृढतरः सविशेषं सम्पत्स्यते" इति। श्रीगोयनकाश्रेष्ठी महामहोपाध्यायकथनं सहर्षम् अन्वमोदत तथा मत्पितृपादान् म. म. कथनानुसारं चतुर्वेदाध्यापननिरीक्षकान् माञ्च 'वेदाध्यापकम्' व्यधात्।

यदाऽहं वेदाध्यापकः सम्पद्य गोयनकासंस्कृतमहाविद्यालयेऽध्यापनार्थम् अगमम् तदा मदध्यापनकक्षं, म. म. कृपालुद्विवेदिनः तथा पंडितश्रीचण्डीप्रसादशुक्लमहोदयाश्च (मन्त्री—गो. म. गो. संस्कृतमहाविद्यालस्य) इमे उभयेऽपि महानुभावाः सनाथितवन्तः। म. म. द्विवेदिमहोदया मन्मस्तके माङ्गलिकं कुङ्कुमतिलकं व्यधुः तथा पण्डितश्रीचण्डीप्रसादशुक्लमहाभागाः कण्ठे कुसुममालां पर्यधापयन्। परस्तादुभयेऽपि महाभागा आशीरात्मकान् द्वित्रान् पौराणिकश्लोकान् पर्यपठन्। १९२९ सन् हायनस्य तच्छुभदिनं

यदाहम्—इदम्प्रथमतया गोयनकासंस्कृतमहाविद्यालयम् अयासिषं कदापि स्मृतिपथान्नावरोहति। पूज्यमहामहोपाध्यायानां तामुदारतां तञ्चोपकारं जात्वपि अहं विस्मर्तुं न पारयिष्यामि यत् ते स्वात्मना मां वेदाध्यापकपदे नियोक्तुं गोयनकाश्रेष्ठिनं प्रेषयामासुः।

ममेदं परमं भागधेयं यदहं श्रद्धेयमहामहोपाध्यायाध्यक्षतायां गो. सं. महाविद्यालये अनेकाः शरदः 'अध्यापक आसम्। अहं निजाध्यापनानेहसि समये समये पू. म. म. कृपालुमहोदयानाम् अध्यापनपाटवं वक्तृतादाक्ष्यञ्च प्रैक्षिषि। यदा म. म. शिष्यानध्यापयन्ति स्म प्रवचनं वा विदधते स्म तदेवं प्रतीयते स्म यत् तेषां वाणीं साक्षात्सरस्वती नूनमध्यतिष्ठत् यद्वशात् तेषां वाग्धोरणी स्वैरमप्रतिहतगत्या सरीसर्त्ति।

म० म० द्विवेदिनो मत्पितामहानां पितृपादानाञ्च प्रेष्ठत्वात् चिरानुबद्धस्निग्धत्वाच्च मय्यपि सविशेषं कृपां निदधति स्म, ममापि पू० महामहोपाध्यायेषु प्रगाढे श्रद्धाभक्ती अद्धाऽनुबध्नीतः। अतोऽहं यदा तदा तेषां सन्दर्शनार्थं तन्निवासस्थानमपि प्राचलम्। यदाऽप्यहं महामहोपाध्यायानामावसथम् अव्रजम् तदा तान् रिक्तकार्यतया समुपविष्टान् नालभे। कदाचन शिष्यानध्यापयन्तः, जात्वपि बृहदारण्यकवार्तिकसारकुसुमाञ्जलिगीतामधुसूदनीटीकां लिखन्तो विमृशन्तो वा, कदाचिच्च जिज्ञासूनां दार्शनिकप्रश्नान् समादधाना एव "स्वाध्यायप्रवचनेनेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः" इत्यौपनिषदमादेशं स्वरसतः पालयन्तोऽध्यक्षीकृताः।

पूज्यमहामहोपाध्याया यथा मूर्धन्याः प्रेक्षावन्तः अविद्यन्त तथैव उद्भटा लेखका एवम् अनन्यसाधारणाः प्रवचनचातुरीधुरीणा अप्यवर्तन्त। गीताया मधुसूदन्या म० म० यां टीकाम् अटीकयन् सेयं विशिष्टविदुषां पठनीया मननीया एवं संग्रहेलिमा च विराजते।

'अधीतमध्यापितमर्जितं यशः' इति सूक्त्यनुसारं म म० समग्रयशोमण्डितमनीषिण आसन्। एषां विद्वत्तायाः समादरं ब्रिटिशसर्वकारोऽपि समाचरत्। एभ्यो 'महामहोपाध्याय' इति विशिष्टा पदवी तेनैव सर्वकारेण ससम्मानम् उपायनीकृता।

श्रद्धेयमहामहोपाध्यायानां यादृशम् अद्वितीयं पाण्डित्यं चकास्ति स्म तादृशी एव तेषां भगवदास्था, धर्मविश्वासः, शास्त्रविश्वासः तथा आध्यात्मिकी निष्ठेति गुणसामग्र्यं "ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः। गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव॥" इति कालिदासभणितिं साधु स्मारयति। एषां पवित्रं हृदयम्, कुसुमकोमलः स्वभावः,

आदर्शं गार्हस्थ्यम्, ब्राह्मणत्वम्, अनुकरणीयः सदाचारः, अतुलनीये परोपकार-सरल-जीवने, चेति "सर्वं मधुरं मथुराधिपतेः"। इमे निजजीवने द्राघीयसि विद्या-धर्म-सत्य-दया-परोपकारादिसद्गुणानां प्रचुरमात्रायां वितरणं व्यतन्वन्, येन कृत्स्ना तज्जीवनवेला श्लाघनीयाऽवर्तत—इत्येव न, परस्तादपि तदीयं जीवनम् अक्षय्ययशोभूषितं विराजते "नास्ति तेषां यशःकाये जरामरणजं भयम्" इति सूक्तेर्नूनं निदर्शनायन्ते। 'जातस्य हि ध्रुवो मृत्युः' इति निर्यतिनियमानुसारं भारतरत्नानां पण्डितसम्राजां म०म० श्रीहरिहर-कृपालुद्विवेदिनामपि १९४९ ई० हायने 'मार्च' मासे मोक्षपुर्यां काश्यां कैलासवासः संवृत्तः। एषां महाप्रयाणेन समस्तं वाराणसेयं विद्वन्मण्डलं दुस्सहशोकतातप्यमानं समपद्यत तथा समेऽप्येकस्वरेण विलपन्तो न्यगदन् "अद्य काशी दिव्यमहाविपश्चिता विधुरा समजनि, यस्य पूरणं सर्वथा गगनकुसुमसोदरम्।"

हर्षविषयोऽयं यत् स्व०महामहोपाध्यायसुपुत्राः पण्डितवर्यश्रीब्रह्मदत्तद्विवेदिमहोदया अपि निजपितृवत् विविधशास्त्राणाम् उद्भटाः प्रथिताश्च विपश्चितः सन्ति। इदमीय-पाण्डित्यप्रकर्षेण सर्वतोमुख्याः प्रखरप्रतिभायाः प्रभापुञ्जेन भारतस्य समस्तं विद्वन्मण्डलम् आलोकितं तथा गरिमान्वितञ्च विद्यते। एतेऽपि स्वतातपादपदलक्ष्मसु पदं निदधाना निजपूज्यपितृवत्सरलसरसप्रकृतयः मृदुमिष्टभाषिणः तथा साप्तपदीनोर्वरभूमयः सन्ति। इमे निजस्वर्गीयपितृपादानां स्निग्धेषु मित्रेषु शिष्येषु भक्तेषु च पूर्णं स्निग्धं व्यवहारं सानुबन्धं यद् वर्तयन्ति तदिमेषां सौजन्यम् आभिजात्यं च द्योतयति।

बहुनाऽपि समुक्तेन ह्येकदेशो न पूर्यते।
रसनापावनार्थन्तु विबुधाः कीर्तिता मया॥

इति शम्।



# कल्पकलिका

## पं० श्रीउपेन्द्रझाः

( प्रधानार्य—रमेश्वरलता संस्कृतविद्यालय, दरभंगा )

महामहोपाध्यायपदवीविभूषितैः—प्रधानाचार्याद्यनेकोपाधिविशिष्टैः सहृदयगोष्ठी-गरिष्ठैस्तत्रभवद्भिः श्रीहरिहरकृपालुद्विवेदिमहोदयैर्यद्यपि बहवो ग्रन्था लिखिताः प्रकाशिता अप्रकाशिताश्च विद्यन्ते, तथापि मीमांसासूत्र-शाबरभाष्यस्य तर्कपादान्तस्य व्याख्यानभूतेयं 'कल्पकलिका' नितरां तदीयं प्रगाढं पाण्डित्यं, कठिनतरविषयाणामपि कोमलपद-विन्यासैः प्रतिपादननैपुण्यं, बहुतरपदसमूहप्रतिपाद्यवस्तुनोऽपि स्वल्पैः पदैः प्रतिपादन-कौशलं च प्रकटयतीति प्रत्यक्षमेव प्रेक्षावतां तदवलोकनकृतार्थीकृतनेत्राणां भविष्यति। किन्तु ये तदवलोकनावसररहितास्तेभ्यः किमपि तदीयं निदर्शनं प्रस्तोतुकामः कानि-चित्स्थलानि प्रदर्शये। तथाहि वाक्यस्य स्वतः प्रामाण्यमिति व्यवस्थापनावसरे 'विप्र-तिषिद्धमिदमुच्यते 'ब्रवीति वितथं चे'त्यादिशाबरभाष्यव्याख्यावसरे—'वाक्यस्य वितथत्वं प्रमाणान्तरसंवादाभावाद्वा, वक्तृगुणजन्यत्वानवधारणाद्वा, सन्दिग्धार्थबोधकत्वाद्वा विपरीतार्थबोधकत्वाद्वा अबोधकत्वाद्वोच्यते। तत्र तावन्न प्रथमः, प्रमाणस्य प्रमाणान्तर-संवादाधीनत्वनिराकरणात्, नापि द्वितीयः प्रमाणस्यान्वयव्यतिरेकाभ्यां दोषोत्सारणमात्रं प्रति उपयोगित्व-व्यवस्थापनेन प्रामाण्यं प्रति कारणत्वानभ्युपगमात्। नापि तृतीय-चतुर्थौ, सन्देहविपर्यययोरनुपदं निराक्रियमाणत्वात्। तस्मादबोधकत्वमात्रमप्रामाण्य-कारणमवशिष्यते इत्यभिप्रेत्येदमुच्यते विप्रतिषिद्धमित्यादि। उच्चार्यमाणः शब्दो यदि-स्वार्थं बोधयति, तदा कथं वितथम् अर्थात् स्वार्थं न बोधयतीति। बोधयति न बोधय-तीति मिथो विरुद्धमुच्यते। इत्येतदेव स्फुटयति—अवबोधयतीत्यादिना। ब्रवीति स्वार्थमवबोधयति, स्वार्थबोधस्य निमित्तं भवति स्वार्थबोधनिमित्तस्यैव शब्दस्य तादृशा-र्थबोधं प्रत्यनिमित्तत्वमुच्यत इति विप्रतिषिद्धमिदमिति।

एवं शाबरभाष्यस्योपमाननिरूपणप्रकरणं व्याचिख्यासुः पूर्वमुपमानस्य नैयायिका-भिमतं प्रमाणविशेषत्वमेव पूर्वपक्षयति—गवाभिज्ञो ग्रामीणः गवयाभिज्ञं वनचेरं पृच्छति कीदृशो गवय इति। वनेचरः प्रसिद्धगोसादृश्यादप्रसिद्धं गवयं येन वाक्येन ज्ञापयति

तद्वाक्यमुपमानं सादृश्यप्रतिपादकं वाक्यमिति यावत् । तच्च वाक्यं यथा गौस्तथा गवय इति । अनेन वाक्येन प्रसिद्धगोसादृश्याभिधानद्वारा अप्रसिद्धगवयपदवाच्यतावगति-रुपमितिः फलमिति प्राचीननैयायिकाः" तन्न गोसदृशो गवय इति वाक्यस्य आप्तोपदेशः शब्द इति लक्षणलक्षितागमे एवान्तर्भावेन पृथक् प्रमाणत्वाभावात् । न च संज्ञासंज्ञि-सम्बन्धपरिच्छेदफलकत्वेन भेदः, तथा सति लौकिकवैदिक—वाक्यानामनेकविधार्थबोध-फलकत्वेन प्रमाणानन्त्यापत्तेः इत्यादिना' । तथा च क्लिष्टोऽप्यर्थः स्पष्टैः स्वल्पैश्च पदैः प्रतिपाद्यत इत्येतावानर्थः प्रकृतसन्दर्भेण प्रतिपाद्यते ।एवमन्यत्रापि तदीयसन्दर्भाव-लोकनेनैषां प्रगाढमसन्दिग्धं च पाण्डित्यमुपलभ्यते ज्ञातुम् ।

एवं 'नित्यस्तु दर्शनस्य परार्थत्वात् ।' इति सूत्रव्याख्यानभूतं शाबरभाष्यं व्याच-क्षाणः—"अस्यार्थः—शब्दो नित्यः दर्शनस्य परार्थत्वादिति । ननु प्रसादः शुक्लः काकस्य कृष्णत्वादितिवदत्रापि हेतोः पक्षधर्मत्वाभावः । दर्शनस्य परार्थत्वे किमायातं शब्दस्य येन नित्यत्वं साध्यते । यदि दर्शनस्य परार्थत्वादित्यनेन परार्थदर्शनत्वादिति कथं चिद्विवक्ष्यते, तदापि दीपज्वालाघटादिषु व्यभिचारोऽनित्यत्वेऽपि तेषां परार्थत्वात् । एवं दर्शनपदेनोच्चारणविवक्षणे उच्चारणस्य पक्षमात्रवृत्तितयाऽसाधारणत्वापत्तिरिति चेन्न एतत्सूत्रस्यानुमानप्रदर्शनपरत्वाभावात् । अनुमानप्रदर्शने ईदृशदूषणं स्यात्, तत्त्विह न विवक्ष्यते, किन्तु अर्थापत्तिप्रदर्शनमनेन सूत्रेण क्रियते । अर्थापत्तौ च दूषणद्वयमेव नाधि-कम्—अन्यथैवोपपत्तिरन्यथाऽप्युपपत्तिः । एवं चात्रापि शब्दस्यानित्यत्वेऽपि, शब्दस्या-नित्यत्व एव वा यद्यर्थप्रत्ययः स्यात्तदाऽर्थापत्तौ दूषणं स्यात्, तत्त्विह नास्ति नित्यत्व एव शब्दबोधोपपत्तेर्वक्ष्यमाणत्वात्" इत्यादिना शब्दनित्यत्वं तथा साधितं यथा दुरव-गमोऽप्ययमर्थः स्वल्पबुद्धीनामपि स्फुटतरमवभासत इत्यस्या यथार्थनामत्वं व्याख्याया ईप्सितार्थावगतिमूलत्वात् ।



# श्रद्धाकुसुमाञ्जलिः

## श्रीकरुणापतित्रिपाठी

(प्राचार्यः, वाराणसेय-संस्कृत-विश्वविद्यालयः, वाराणसी)

तत्र भवतां परमपूज्यानां प्रातःस्मरणीयानां व्याकरणवेदान्तन्यायमीमांसासांख्ययोगवैशेषिकादिनानाशास्त्रपारङ्गतानां स्वकालिकसंस्कृतवाङ्मयनदीष्णविपश्चिन्मणिमालाकौस्तुभायमानानां धर्मशास्त्राध्ययन-बोधाचरणरूपत्रिवेणीपरिपूततीर्थराजकल्पानामलौकिकवैदुष्यप्रतिभाभास्वरीकृतचेतसां शास्त्रपारावारान्तःप्रविष्टानां विद्वद्वरेण्यानां महामहोपाध्यायोपाधिसमर्पणसंमानितानां काशीस्थभारतधर्ममहामण्डल-विहारपण्डितसभाविहारोत्कलसंस्कृत-एसोसिएशनादिसंस्कृतसंस्थासमर्पितविद्यारत्नाकर-विद्यानिधि-पण्डितविभूषण-महामहाध्यापकप्रधानाचार्यतर्कालङ्कारप्रभृतिविविधसंमान्यपदवीसभाजितानां ब्राह्मणकुलावतंसानां श्रीश्रीहरिहरकृपालुशास्त्रिमहाभागानां पूज्यचरणानां चरणयोरयं वाक्सुमनोऽञ्जलिः समर्पयता मया परमसौभाग्यशालित्वं किलात्मनोऽनुभूयते ।

एतेषां बुद्धि-मति-मेधा-प्रतिभाभिः प्रतिस्पर्द्धयेव वाऽहमहमिकयेव वा प्रतिक्षणं प्रवर्द्धमानाभिर्विद्याध्ययनकालादेव यद्वैलक्षण्यं प्रदर्शितं तेनैव एतेषां भविष्यतः कालस्यासाधरण-लब्धवर्णत्वं सूचितमभवत् । आरम्भिके बाल्यकाले यद्यपि समवयस्कैर्बालकैः सह इमे क्रीडापरायणा अभवन् तथापि तदापि इमे सर्वेषां बालानां सञ्चालका नेतार इव समाचरन् । परन्तु तदाप्येतेषां स्मृत्या असाधारणायाः प्रमाणानि भूयोभूयः प्रत्यक्षाण्यभवन् । आरम्भे च राजपुत्रैः सहाङ्गलभाषाध्ययनकालेऽपीमे प्रतिभाशालिनः सर्वानन्यान्स्वसहपाठकान् अतिक्रम्य पुरो गन्तारोऽभूवन् ।

संस्कृतविद्याकेन्द्रे च काशीनगरे यदा यदा विद्याजिज्ञासवः शास्त्रमर्माधिजिगमिषव इमे तच्छास्त्रनदीष्णानां गभीरपाण्डित्यभास्वराणां छात्रसंसत्सु

प्राप्तयशसां पण्डितानां समीपमगमन् तदा सर्वे अध्यापकाः एतेषां विलक्षणां प्रतिपत्तिं दर्शं दर्शं वात्सल्येन गुरुसहजप्रेम्णा चैनान् शिष्यरूपेणोररीकुर्वन्ति स्म, विद्यावितरणाय च सरहस्यानि शास्त्रतत्त्वानि च समध्यापयन्तिस्म। तदानीन्तनेभ्यः काशीस्थेभ्यः विद्वद्भ्यस्तत्तच्छास्त्रमर्मवेदिभ्यः किञ्चित्कालं विविधानि शास्त्राण्यधीत्य यदा रामजन्म-पुण्यप्रकाशितां विद्याकेन्द्रभूतामयोध्यापुरीमिमेऽगच्छन् तदा तत्रत्या अपि परमविख्याताः तत्तच्छास्त्रनिष्णाताः विद्वांसो विद्याग्रहणकुशलान् द्विवेदिमहोदयान् सोल्लासेन मनसा शास्त्राण्यपाठयन्। पुनरपि काश्यां ते महाभागाः शास्त्रज्ञानवैदुष्यपरिष्करणाय समागतवन्तः। तदानीन्तनानां काशीस्थशतसहस्रपण्डितेषु मुकुटायमानानां महामहोपाध्यायशिवकुमारशास्त्रि-महामहोपाध्यायदामोदरशास्त्रि-महामहोपाध्यायगङ्गाधरशास्त्रि-महामहोपाध्यायरामकृष्णशास्त्रिमहामहोपाध्यायराममिश्रप्रभृतिमहापण्डितानां घनिष्ठसम्पर्केण तेषां शास्त्राध्यापनपरिशीलनप्रणाल्या तेषां शास्त्रार्थपरिष्कारमनीषया च सह सम्यक् परिचिताः सन्तोऽधिगतशास्त्रचिन्तनकौशला इमे स्वाध्ययनपरिपूर्णतामलभन्त।

इत्थं चालौकिकवैदुष्यसम्पन्नानामनेकशास्त्रार्थपण्डितसभासु प्रतिष्ठापितयशसां छात्राध्यापनतत्पराणां तथैव विद्यार्थिषु पाण्डित्यख्यातिः प्रासरद्यथा खलु विचक्षणमण्डलेषु।

एतेषां दर्शनसौभाग्यमस्माभिर्बहुधा सार्वजनिकसभासु पण्डितसमाजेषु शास्त्रार्थगोष्ठीषु च लभ्यते स्म। शास्त्रार्थेषु पण्डितवरेण्यानां द्विवेदिमहोदयानां गूढतत्त्ववेदित्वं सूक्ष्मचिन्तनशालित्वं व्याकरण—नव्यन्याय-वेदान्त-साहित्य-मीमांसादीनां विलक्षण-वैचक्षण्यं प्रत्यक्षीकृत्यास्माकं चेतांसि साश्चर्यं, सबहुमानं च परमामोदं लभन्ते स्म। व्याख्यानावसरेषु यामीषां मुखात् सुरसरस्वती प्रवहति स्म, व्याकरण-साहित्य-प्रौढव्युत्पत्तिभास्वरा प्रातिपदिकरूप-स्वल्पप्रयुक्तकठिनधातुरूप-लक्ष्यव्यङ्ग्यार्थविचित्रिता सालङ्कारा सरसा सूक्ष्मार्थपरिचायिनी कलाविदग्धनर्त्तकीव जिह्वाग्रे क्रीडन्ती या वाग्धारा विनिर्गच्छति सा कस्य विदुषो मोदाय न सम्पद्यते स्म सर्वत्र श्रोतारो

हि प्रतिपादितपक्षस्य सर्वथौचित्यं स्वीकुर्वन्तः मुहुर्मुहुरेनान् प्रशंसन्ते स्म साधुवादं च सश्रद्धं समर्पयन्तिस्म तत्र चेदमपि दृष्टं मया यद् व्यक्तिगतवर्त्तालापे किलेमेऽतीव विनम्राः निरभिमानिनः दम्भरहिता आसन परन्तु शास्त्रार्थगोष्ठीष्वेतेषां स्वाभिमानिता खलु यशोधनानां यशोरत्नमिव परमरक्षणीयेवाभवत् ।

लोभदम्भमोहादिरहितानां विद्यानुरागिणां शास्त्रार्थपाटवपरिष्कृतवचसामेषां धाराप्रवाहं संस्कृतव्याख्यानं श्रावं श्रावं दर्शं दर्शं च द्विवेदिमहोदयानां सहजशास्त्रपाण्डित्यं सर्वे विस्मयविमुग्धाः अभवन् । अद्यापि तेषामप्रतिहतां वाग्धारां स्मारं स्मारं तान् प्रति नतमस्तका इमां समादरगुम्फितां श्रद्धाप्रसूनपदमालां समर्पयन्तः परमकृतकृत्यतां लभामहे ।

श्रीमद्द्विद्वद्वरेण्यानां सुधियां दिव्यपादयोः ।
समर्प्यते मया ह्येषा श्रद्धाकुसुममालिका ॥



# गुरुस्तवः

## श्रीवर्धनठक्कुरः

श्रीगङ्गाधरशास्त्रिणः समभवन् साहित्यसम्बोधने
श्रीमद्बालसरस्वती-बुधकृता या चैव छन्दोमुखे ।
शैली गौतमभाषिते पुनरहो कैलाशचन्द्रस्य या,
ताभिस्तिसृभिरावृता गुरुवरा वर्ण्याः कथं मादृशैः ॥

( २ )

यस्माद् बिहारस्य कुमारमिश्रः,
शिवादिरेषः परमो गुरुर्मे ।
इत्येवमूचुर्जनताः सभासु,
विद्वत्समालोचनसंकथासु ॥

( ३ )

न यामि काशीं नदियां न यामि,
सर्वार्थमत्रैव समापयामि ।
एवं समूचुर्गुरुपाठतुष्टाः
जुष्टात्मकाश्छात्रवराः सदैव ॥

( ४ )

स्थाने गुरुर्मम तदीयसुतः समास्ते,
तातस्य विश्वजनवन्द्यगुणैरुपेतः ।
दिग्भिश्चतसृभिरुपागतशिष्यवर्गान्
सम्पाठयन्नमरवाङ्मयशासनानि ॥

( ५ )

ज्ञानी मध्ये विश्वविद्यारतानां,
ध्यानी चैवं योगशास्त्राश्रितानाम् ।
शास्त्राभ्यासे जातमिथ्यामतीनां,
भेदी धन्यो ब्रह्मदत्तद्विवेदी ॥



# अविस्मरणीयाः स्मृतयः


## श्रीवाचस्पतिद्विवेदी

( संस्कृतविभागाध्यक्षः, महाराजकालेजः, आरा )


शैशवानुभूतयः कालापिधानं दूरीकुर्वाणाः भूयोऽद्य सजीवतामापन्नाः । पूर्वं मृषाभूता इव प्रतीयमानाः स्फुटं समालक्ष्यन्त । दीर्घकालापगमेऽपि तत्स्वरूपमवगन्तुमहं क्षमे । नवीनं सङ्केतमुपदर्शयन्ति तत्स्वरूपाणि जीवनाय बलमादधति च ।

कदाचिदपि इयता नैकट्येनाहं महापुरुषं तं पितामहं द्रष्टुमशकमिति सहसा न भवति द्रढीयान् विश्वासः । तेषां मयि अपूर्वा सहजा वत्सलता तपःपूतेन हृदयेन अभ्युदयसाधकः शुभाशीर्वादोऽनितरसाधरणोऽद्यापि स्मृतिपथान्नापगच्छति ।

सूर्योदयात् सूर्यास्तं यावत् पूजनाध्यापननिपीतसमया अपि ते नियमेन स्वल्पमपि समयं मम बाल्योचितां सहजां शङ्कामपनेतुं प्रसादयितुञ्चारक्षन् । येभ्यः कमपि विषयविशेषं द्रष्टुं विद्वांसोऽप्यभैषुस्तेभ्योऽहं यत् किञ्चिदपि सविनोदमपृच्छम् । प्रासादयन् च अनुरूपेणोत्तरेण माम् । चन्द्रमसो मध्ये नीलिमा कथमायात इति स्वानुयोगं पौराणिकीं तत्समाहितिरूपां गाथामद्यापि स्मरामि ।

१९४२ तमे वर्षे कियतो मासान् यावन्मया तैः सह काश्यामुषित्वा लघुकौमुदी अमरकोशश्चाधीतः । अध्यापितं पाठं श्रावितवतो ममावकाशः । पाठश्रावणाद् ऋते नान्यः कश्चित् निर्बन्धः । पाठाभ्यासे जाते ममोत्साहवर्धनाय कियतां पणानां प्रदानं न ते कदापि व्यस्मार्षुः ।

एकदा तदीयादेशं विना केनचिद् बालकेन सह चापल्याद् भगवतीं भागीरथीमवगाहितुमचलम् । ततः परावृत्य समागतं मां स्वसन्निधौ अवस्थातुं समादिशन् । अकथयंश्च नाद्य किञ्चिदध्ययनं केवलमत्र स्थितिः । नाद्य प्रतिपत्तिथिः नवान्यदनध्यायकारणम् । कथमयं पाठावरोधादेशः इति चिन्तयन् तदादेशस्य पिपालयिषया तूष्णींभूय उपाविशम् । अध्ययनादपि कठिना तूष्णीं भावेनावस्थितिः । परमेतस्याः स्थितेः सहनमन्तरा नान्यः कश्चनोपायः प्रतीतिपथमारूढः । सापराध इवाधोदृष्टिः नतशिरा

उपविष्टः परिभावनया स्फुटं रोदितुमप्यसमर्थः कथं कथमपि समयं यापयन् उद्विग्नमनाः सूर्यास्तं प्रत्यैक्षत । तथाविधं मामवलोक्य तैरुक्तम् । पूर्वमध्ययनानुरूपमासनबन्धं स्थिरीकुरु । यो हि च्छात्रः आसनं न स्थिरीकुर्यात् स किमधीयीत । बाबा (मम तातः) स्वसमीपे समुपवेश्य पाठितश्चिरम् त्वयापि स्थिरासनेन पठितव्यम् ।

भारतीयसंस्कृतौ महान् आदर आसीत्तेषाम् । कश्चन महानुभावो महर्घं हैटनामकमुष्णीषं प्रादात् । तद् धारयित्वा आगतं मां वीक्ष्य विहस्य चोपदिदिशुः । नैतादृशी संस्कृतिरस्माकम् । स्वकुलाचारपरम्पराबन्धिनो वेशो भूषा आहारो विहारश्च शोभन्ते ।

काशीस्थपण्डितसभायां पूज्यपितामहैरेभिः सह मञ्चस्थोच्चासनासीनोऽहं बहुशः शास्त्रार्थं दृष्ट्वा परं प्रमोदमवाप्नुवम् । तदनन्तरं च तेषामादेशेन हितोपदेशस्य पूर्वं शिक्षिताः कथाः मया श्राविताः । यत्र शास्त्रीयं गूढं तत्त्वं विवेचयितुं पण्डिताः प्रायतन्त तत्रास्माकं मूषकमार्जारयोः कथाभिः वृथैव कालक्षेपो जात इत्यस्य रहस्यमधुना स्फुटी भवति । तादृशकथाश्रवणव्याजेन सभायामुपवेशनप्रकारस्य निर्भयं भाषणस्य च शिक्षणाय ते तथा व्यधुः । स्नानोत्तरं जपः श्रीभगवतो विश्वनाथस्य दर्शनं मम नियतमासीत् । तदर्थं प्रेरणा तेषामभूत् । मृन्मय्यो मूर्तयो देवानां मम प्रसादनाय बहुविधाः आसन् ।

एतादृशस्य महापुरुषस्य कुले मम जन्म पूर्वार्जितानां सुकृतानां फलम् । विद्याधनं सर्वधनप्रधानमिति सूक्तेश्चारितार्थ्यं सम्पन्नमिति । इत्येवमविस्मरणीयस्मृतिप्रसूनाञ्जलिना सपर्या विधीयते ।

•

# ब्रह्मर्षिस्मरणम्

## डॉ० श्रीशीतांशुशेखरबागची

( निदेशकः, मिथिलारिसर्च इन्स्टिट्यूट, दरभङ्गा )

भारतवर्षं स्मरणातीतकालादेव राजर्षि-सुरर्षि-ब्रह्मर्षीणां भूमिरूपेण वेदपुराणादिषु संकीर्तितं समजनि। यद्यपीदमद्य विगतयुगस्यैव वृत्तं संवृत्तम्, तथाऽपि साम्प्रतमपि अस्यां भारतधरायां ज्ञानयोगिनां ब्रह्मर्षीणां क्वचित् कदाचित् दर्शनमद्यापि भवति। विषयोऽयं दुर्लभोऽपि सर्वथा नास्ति खपुष्पायितः। वर्तमानानेहसि भारतवर्षीयाः साधारणजना भारताभिजनस्य प्राचीनं गरिमाणं सर्वथा व्यस्मार्षुः। दिवसानुदिवसं विस्मृतिरियं भारतीयजनसाधारणमनोमेदिन्यां दृढतां भजन्ती किमपि व्यध्वध्वान्तं प्रसारयति। एनच्च बाढं गाढं भवत् द्रुतगत्या विसरत् अभास्करनिरास्यं लोचनगोचरी भवति।

एकलो भारतमनीषी तरुणोषरमानसे ब्राह्मलोकगतो ब्रह्मर्षिकल्पो ब्राह्मणश्रमण-न्यायेन भूसुरवरो म० म० हरिहरकृपालुद्विवेदी अदूष्यवैदुष्याक्षय्यनिधिः स्वोत्कृष्टानन्य-साधारणवर्यचर्याचरित्रसम्पन्नः कल्पनास्पदतां नैव भजेतापि परमेष लेखकः पश्चिम-वङ्गराजधान्यां कलिकतानगर्यां तस्य प्राज्ञवरेण्यस्य साक्षादीक्षणं समासाद्य स्वात्मानं परमभाग्यवन्तमवधारयति।

दीर्घायतदेहात् प्रतिभाच्छटा निर्याति स्म। प्रदीप्ते भालभागे चन्द्रांशुरिव शान्ति-राभासते स्म। अस्मत्पूज्यपादपितृदेवः म० म० श्रीयोगीन्द्रनाथबागची कृपालुमहोदयस्य अनितरसामान्यं शास्त्रज्ञानं तथा वाग्मितां च भूयो भूयो भृशं प्राशंसत्। वर्तमानसमये अधिभारतवर्षं ब्रह्मलोकाधिवासिश्रीकृपालुसदृक्षाणां तपोविद्याविराजितानां नितान्तावश्य-कता नूनमनुभूयते। अतोऽस्माभिः परिपूतभारतधरित्र्याः सन्त्राणपरस्य परमेशितुः समक्ष-मेषैव प्रार्थना विधेया यदियं भारतभूमिः कृपालुसगर्भ्यं पुत्रतल्लजं प्रसूय पुनर्धन्या कृतार्था च भूयादिति।



# स्मृतिरोमन्थनम्

## डॉ० सिद्धेश्वरभट्टाचार्यः

( संस्कृत-पालीविभागाध्यक्षः, काशी-हिन्दूविश्वविद्यालयः, वाराणसी )

ऊनविंशतमशताब्द्याः पञ्चत्रिंशत्तमं वर्षं स्यात्। वाराणस्यां मणिकर्णिकायाः सान्निध्ये ललिताघट्टः। तमेव समलङ्कृत्य 'गोयनका-संस्कृत-महाविद्यालयो विराजतेतराम्। पुराणं प्रस्तरमयं हर्म्यम्। द्वितीयप्रकोष्ठे उन्मुक्तं सुनीलाकाशप्रकोष्ठस्य एकप्रान्ते सङ्कीर्णं गृहम्। उपरि लोहमयमाच्छादनम्। कति गवाक्षिकाः। द्वारमपि द्वारिकैव। तत्रैव स्थूलकायानां कृष्णवर्णानामपि विद्यादीप्तशरीराणां सर्वतश्छात्रपरिवेष्टितानां श्रीमतां महामहोपाध्याय-हरिहरकृपालूनां प्रथमं सन्दर्शनमभूत। कस्यचिन्मित्रवरस्य साहाय्येन तत्र आगतवान् आसम्। प्रविश्य सादरं चरणावस्पृशम्। प्रसन्नदृष्ट्या आशीर्वादान् वितेरुरध्यापकपादाः जगृहुश्च मां स्वान्ते तस्मादेव दिवसात्। अकृत्रिमः स स्नेहः चिरमम्लान आसीत्।

गोयनकामहाविद्यालये सोपानानि सङ्कीर्णान्येव। तान्यतिवाह्य प्रतिदिनं द्वादश-घटिकावादनसमये एवाध्यापकपादाः अध्यापनगृहं प्रविशन्ति स्म। पञ्चवादनपर्यन्त-मध्यापनकार्यं प्रचलति। शाङ्करवेदान्तस्य आकरग्रन्थाः—भामती, अद्वैतसिद्धिः, खण्डन-खण्ड-खाद्यं, चित्सुखी चापाठ्यन्त। प्रत्येकं पाठः एकहोरावधिः। पाठस्य माध्यमं निरर्गला देववाणी। सर्वे ग्रन्थाः कण्ठाग्रे नरीनृत्यन्ते, अन्तराऽन्तरा पादस्पर्शमनुसाट्ट-हासमाशीर्वादवचनम् जयोऽस्त्विति।

क्लान्तिलेशोऽपि नास्ति। शीतग्रीष्मानुभूतिरपि तिरोहिता। स्मरामि; व्यजनमे-कमासीदध्यापकपादानां सान्निध्ये। व्यजनसेवा नारोचत तेभ्यः। यदि कश्चिच्छिष्यः घर्मार्त्तकलेवरः व्यजनार्थमचेष्टत तदापि गुरुचरणानामट्टहासैः स निवर्तितोऽभूत। पारे-गङ्गं रौद्रदीप्तः समीरणः द्वितीयप्रकोष्ठोपरि निर्बाधमचरत्; प्रस्तरेषु मूर्च्छितः सन् प्रदीप्ततरः सर्वतः प्रासरत्। तृष्णया ओष्ठागतप्राणाः विद्यार्थिनः। येषां पाठान्तरं भविष्यति अथवा प्रथममेव येषां पाठः ते बहिरेव प्रतीक्षन्ते स्म। हस्तद्वय-परिमिता छाया; सापि लौहाच्छादनस्य। पुनः पुनः पानीयं पीयते।

परन्तु अध्यापकपा। निरन्तरं होरापञ्चकं पाठयन्तः सन्ति। द्वन्द्वातीताः बहिः-प्रकृतिं प्रति सम्पूर्णतः उदासीनाः, अन्तर्जगति देदीप्यन्तेतराम्। न तितिक्षासममस्ति साधनम्—इत्याप्तवाक्यं स्वकीये एव जीवने प्रमाणयितुं श्रीमन्तो विराजन्ते। विद्यार्थि-

नोऽपि तथैव तितिक्षान्वितसाधनचतुष्टयसम्पन्नाः वेदान्ताध्ययने अधिकारिणो भवन्तु इत्येव मन्ये तेषामभिप्राय आसीत् ।

सभासु बहुशः श्रीमतां भाषणमश्रौषम् । निरर्गलं लुञ्चन्तपदमालाभिः लीलं भाषणमररचत् । कुत्रापि विच्छेदो नास्ति; गाम्भीर्यस्यापलापो नास्ति । मन्ये भगीरथ-घोषेण सह तरङ्गमयी स्वर्धुनी गुरुचरणमुखात्मिकां गङ्गोत्रीमुद्भिद्य धरातले प्रादुर्बभूव । पावनी वाङ्मयी मूर्तिः सभ्यानां सर्वविधानि मालिन्यानि दूरीचकार । स्तब्धाः सर्वे; उच्छ्वसिताः सर्वे; तत्रापि कदापि गुरुचरणानां क्लान्तिर्नादृश्यत ।

निरवच्छिन्नदिवसीयपरिश्रमात् परं सायं स्वगृहे तत्रभवतां पुस्तकलेखनेऽपि व्यसनमासीत् । मदीयच्छात्रत्वावसरे एव श्रीमतां मधुसूदनसरस्वती-प्रणीतस्य गीताव्या-ख्यानस्य अनुवादः प्रकाशित आस्ते । अन्याश्च कृतयः श्रीमतां लेखनप्रेम्णः निदर्श-नानि सन्ति ।

मया सह निर्वैयक्तिकः गुरुशिष्यसम्बन्धः आसीत्, तद्वहिः, श्रीमन्तः कुतः समायाताः ? श्रीमतां के के सन्ति ? किंवा पूर्वजीवनम् ? तथा, अहमपि कः ? को वा मम परिचयः ? के वाऽन्ये विशेषाः—इत्येवं प्रश्नाः कदापि न बभूवुः । कतिवारान् श्रीमतामावासभवने गतवानस्मि । तत्रापि अनाडम्बरं वैयक्तिकजीवनमपश्यम् । तत्रापि अकृत्रिमस्य च्छात्रवात्सल्यस्य धारा अव्याहता प्रावहत् ।

स्मरामि श्रीमतां छात्रवात्सल्यस्य सुयोगोऽपि गृहीतः । बङ्गीयसंस्कृतपरिषदस्तीर्थ-परीक्षायां मौखिकी परीक्षापि भवति । अहमेव व्यवस्थापक आसम् । कश्चित् परीक्षकोऽ-पेक्ष्यते यः सर्वविषयाणां मौखिकपरीक्षणे पारदर्शी भविष्यति । शेषमूहूर्तमादेशः श्रुतः । किं करिष्यामि ? क्व गच्छामि ? अध्यापकपादानां शरणमगच्छम् । यथारीति साट्टहासं श्रीमन्तः स्वीकृतवन्तः । दक्षिणायाः वार्तापि नास्ति; पाथेयं पञ्चरूप्यकाणि । अर्धहोरा-मध्ये सज्जीभूय श्रीमन्तः समायाताः । सर्वतन्त्रस्वतन्त्राणां कृते परीक्षणं खेलनमेवासीत् ।

परिशीलितसर्वशास्त्राः महामहोपाध्यायाः श्रीहरिहरकृपालुद्विवेदाः नूनं हरिवत् हरवच्च कृपालव एवासन् । ताः विभूतयः अस्तङ्गताः । किन्तु तेषां हार्दिका आशी-र्वादा अमूल्यनिधयः जीवनं सर्वथा सर्वदा च दीपयन्ति । श्रीमतां चरणकमलयोरयमेव वाक्यपुष्पोपहारः सविनयं सादरं च समर्प्यते इति शम् ।



# 'गाण्डीवम्' श्रद्धानतम्

पं० रामबालकशास्त्री

( गाण्डीवम्-संस्कृत-साप्ताहिक-सम्पादकः )

अद्य परमोल्लासस्य विषयोऽस्ति यत् विहारसंस्कृतसम्मेलनविद्यायशोधनमानवर्धनानां सकलमहामहोपाध्यायपदवीकानां स्वनामधन्यानां पं० हरिहरकृपालुद्विवेदानां स्मारकग्रन्थप्रकाशनव्याजेन तच्चरितामृतसागरावगाहनाय सुखदोऽवसरः प्राप्तः। श्रद्धेयद्विवेदमहाभागाः स्वप्रगाढसंस्कृतविद्यापाण्डित्येन अपूर्वोर्जस्वलब्राह्मण्येन च पूज्यपादगङ्गाधरशास्त्रिदामोदरशास्त्रितात्याशास्त्रिशिवकुमारशास्त्रिसदृशपण्डितप्रकाण्डानाम् विद्यावैभवावदातकोटिम् आसाद्य पाटलीपुत्रमारभ्य विद्याराजधानीं काशीं यावत् निजयशःशरीरेण विदुषां हृदयमन्दिरे प्रतिष्ठिताः सन्तोऽमरायन्ते।

सत्यमेव तद्विद्यागुरवः पूज्यपादनाकछेदरामद्विवेदाश्चापि सर्वथा वन्दनीयाः स्मरणीयाश्च यैः नक्तन्दिवं भूरिशः परिश्रम्य स्वपाण्डित्यप्रातिनिध्यं निजान्तेवासिनां विशेषतया भविष्णुशीलानां शिष्यहरिहरकृपालुद्विवेदिनाम् शुद्धबुद्धसंस्कृतान्तःकरणे सन्निधापितम् अपूर्वम्। येन द्विवेदमहाभागाश्चापि एते निजान्तेवासिनः निजप्रखरपाण्डित्यप्रतिनिधीन् निर्मातुम् निरवच्छिन्नं परिश्राम्यन्ति स्म।

एते महाभागाः अध्ययनातिरिक्तं नान्यत् किमपि कर्त्तव्यं संस्कृतविदुषामिति गुरुपरम्पराप्राप्ते निजविद्यावितरणजीवनोद्देश्यसत्पथे वर्तमानाः विद्यादानमेव सर्वोत्तमं शास्त्रीयसम्मतं दानं मत्वा सततम् अध्ययनाध्यापननिरताः समस्तजीवनम् अयापयन्। फलतः बहुभिः शास्त्रनिष्णातैः निजस्नातकशिष्यैः धुरन्धरैः तां प्राचीनगुरुपरम्पराम् इमे प्रत्यष्ठापयन्।

तेषां महामहोपाध्यायद्विवेदानां शिष्येषु कियान् स्निग्धभाव आसीत् स मूर्त्तिमान् यथा मदीयस्मृतिपटलेऽङ्कितः सन् अद्यापि मन्मानसं स्वाभिमुखं नूनमावर्जयति। तथाहि—

बलियामण्डलान्तर्गतात् मदीयश्रीनगरग्रामात् नातिदूरे वर्तमाने भाखरनामके ग्रामे विद्यावदातः एकः शाकद्वीपीयः ब्राह्मणपरिवारोऽस्ति। तत्र परिवारप्रसिद्धनाम्ना ( परिचितमपि तन्नाम न स्मर्यतेऽधुना ) बूचनजीसूचनजीनामानौ कुमारौ पाटलीपुत्रे श्रद्धेयद्विवेदमहाभागानाम् अन्तेवासित्वे तदुदात्तपाण्डित्यम् आर्जयताम्। तयोः कनिष्ठः सूचनजी अग्रजापेक्षया विद्यावरिष्ठः दुर्दैवात् तारुण्ये एव क्षयरोगाक्रान्तः गृहमागतः मृत्युदिनं गणयतिस्म। तं स्निग्धं विनतं शिष्यं द्रष्टुमेते द्विवेदमहाभागाः पाटलीपुत्रपुरात् आगत्य रेउतीनामकस्थल ( रेल ) स्थानात् सुदूरं तद्ग्रामं भाखरं पद्भ्यामेव गत्वा स्वशिष्यं मृत्युशय्योपरि शयानं सूचनमपश्यन्। तदानीम् रयलस्थाने ( रेलस्टेशन ) स्थितः परिचितेन सूचनपितृव्येन श्रद्धेयमहाम्होपाध्यायपरिचयेन सह कारुणिकं तदागमनवृत्तमाकर्ण्य विषण्णोऽहं नूनमन्वभवम् यदेषः द्विवेदमहाभागानां हृद्गतः प्रगाढस्निग्धः स्वशिष्यवात्सल्यभावो निश्चलो निश्छलोऽसौ पाश्चात्त्यवातेरितमपि चपलमपि मानसं परिष्कुर्यात्। ततः प्रस्थानावसरे द्विवेदमहाभागा भूयोभूयः कृतेऽपि प्रतिषेधे स्वशिष्योपचाराय किमपि गूढं द्रव्यराशिं तदभिभावकहस्ते निधाय तच्चिन्तया विवर्णवदनाः परावृत्ताः।

भौतिकवादस्य चाकचिक्यपूर्णे दुर्दिनेऽत्र स्वतन्त्रभारतस्य सफलभारतत्वाय तादृशानाम् कृतविद्यानाम् नितान्तमावश्यकता वर्त्तते। यद्यपि साम्प्रतं नास्ति संस्कृतविद्यालयानां न्यूनता। स्थाने स्थाने शासनानुदानजीविताः संस्कृतविद्यालयाः महाविद्यालयाः संस्कृतविश्वविद्यालयाश्चापि प्रतिष्ठिताः सन्ति। परन्तु तत्र द्विवेदिमहाभागसदृशाः विद्याधनाः गुरवः क ? क च तत्सूचनजीसदृशाः गुरुभक्तिप्रवणाः शिष्याः ? इति तु अक्षरशः सत्यम् यदद्यतनेषु संस्कृतशिक्षासंस्थानेषु संस्कृताध्ययनाय समागताः छात्राः सर्वथा अयोग्याः वेषभूषाचेष्टाभिः पाश्चात्त्यानुकरणचणाः निर्जीवाः शवभूताः भवन्ति। वस्तुतो योग्यास्तु छात्राः असंस्कृतविद्यालये आंग्लविद्यालये धावन्ति। हा! हन्त!! स्वतन्त्रेऽपि भारते। येन संस्कृतशिक्षा-केन्द्रीकरणात् सङ्कुचिता अत एव सर्वथा वैफल्यं गता येन केनापि उच्छ्वसिति, हसति च तद्विपरीता आंग्लशिक्षाविकेन्द्रीकरणम् आपन्ना। इतः प्राक् परतन्त्रे भारते राज्येषु संस्कृतपाठशालानां संस्कृतटोलानाञ्च नगरादारभ्य ग्रामं यावत् जालं प्रसृतमासीत् यत्र, तत्र स्वतन्त्रे भारते शिक्षायाः निरुद्देश्यत्वात् धर्मार्थकाममोक्षपुरुषार्थचतुष्टयस्य स्थाने अर्थधर्मकाममोक्षेति व्यतिक्रमात् संस्कृतशिक्षायाः समाजे अनावश्यकतायां सिद्धायाम् कः प्रवर्त्तताम् संस्कृतोद्धाराय ? एवञ्च ततस्तेषाम्

पाटलीपुत्रात् वाराणसीमलङ्कुर्वतां द्विवेदमहाभागानां सन्दर्शनसम्पर्काभ्याम् सा मदीया प्राचीनाऽपि तरुणायमाना श्रद्धा हृदयेऽमन्ती आप्रयाणमनुवर्त्तमानाऽऽद्य पुनः पुनः मां भृशम् द्रढयति स्वल्पायामपि संस्कृतसेवायाम् । तत् संवलमेव 'गाण्डीवम्' स्वोदर्काय श्रेयस्करं मनुते ।

तथापि एतादृशपुण्यश्लोकानां संस्कृतमुक्तात्मनां चरितचित्रणस्मरणस्मारणश्रवण-कीर्तनैः पूतान्तरात्मानः संस्कृतस्नातकाः अपरे च नूनं कामपि कृतार्थतामासादयिष्यन्तीति दृढं मन्महे ।



# हरिहरस्तोत्रम्

श्रीसूर्यदत्तशास्त्री वैद्यः
( चौक, पटना सिटी )

हरेर्हरस्य चैकत्वं प्रभा यस्य कृपालुता ।
द्विवेदिनं गुरुं वन्दे भासते भारती यथा ॥

( २ )

सर्वशास्त्रार्थवेत्ता च, वक्ता च सार्वभौमिकः ।
तत्त्वद्रष्टा सुविख्यातः, ब्रह्मविद् ब्रह्मणि स्थितः ॥

( ३ )

स्फोटितो दर्शने ग्रन्थिः, आस्तिको नास्तिकोऽपि वा ।
यं लब्ध्वा ज्ञानिनो धन्याः धन्यं भारत-भूतलम् ॥

( ४ )

व्याकृति-न्यायमीमांसा—सांख्यशास्त्रार्थपारगम् ।
द्विवेदिनं गुरुं वन्दे, भारते भारतीव तम् ॥

( ५ )

प्रतिद्वन्द्विमतध्वंसी सभायां सिंहगर्जनः ।
मनीषिमण्डलीभूषा द्विवेदो ज्ञानगौरवात् ॥

( ६ )

पठने पाठने निष्ठा तद्भिन्ना तस्य न स्पृहा ।
संसारेषु न सम्पृक्तो निर्मुक्तो भवविस्तरात् ॥

( ७ )

गुरूणां गुरुरासीत् सोऽलौकिको ब्रह्मवर्चसि ।
पूर्णः सारस्वतो धीमान्, अग्रगण्यः सुधीगणे ॥

( ८ )

मानितो राजतन्त्रेण, परमोच्चपदं श्रितः ।
यस्य स्मरणमात्रेण, विद्याबुद्धिर्विवर्द्धते ॥

★

# हरिहरचरितचम्पू:[1]

स्व० श्रीरघुनन्दनत्रिपाठी

महसां तपसां पारे वचसामपि यो विभुः।
यस्माज्जातं स्थितं लीनं जगत्तं कञ्चिदाश्रये ॥ १ ॥

यत्क्रोडक्रीडनेन प्रथयति गरिमाणं गुणस्याखिलस्य,
ब्रह्मा ब्रह्माधिवासो विबुधपटुवटुस्तूयमानः समन्तात् ।
लक्ष्मीर्यत्पादमूलस्नपनविधिबलाद्दिव्यभावं व्यनक्ति
कस्मिँश्चिद् दिव्यदेशे विहितनिवसनं तं हरिं संश्रयेऽहम् ॥ २ ॥

श्रीरामो विश्वमूर्तिर्विदलितवसुधाभारहारावतारः
पुर्यां सीरध्वजस्याऽचलितमजगवं योऽभनग् राजदर्पैः ।
वीर्यस्फूर्जद्भुजङ्गद्भुजबलदनुजाधीशसंहारदक्षो
जीवातुः सज्जनानां जयतु जनकजाजानिरस्यां जगत्याम् ॥ ३ ॥

मार्तण्डमण्डलविखण्डकदन्तरोचिः—सम्पर्कदन्तुरितविम्बविडम्बकोष्ठः ।
तत्कान्तिसंक्रमविमण्डितगण्डशुण्डोऽखण्डं विखण्डयतु विघ्नमिभाननो नः ॥४॥

मातस्त्वत्पादपद्माश्रयणजसुकृतैर्जालपादोऽपि लेभे
नीरक्षीरे विवेकं सुनिपुणधिषणाऽगोचरं तन्न चित्रम् ।
तच्चित्रं यत्त्वदंशस्थलनिहितपदा सार्यमाणाऽपि वीणा
तालग्रामानुसारं सरिगमपधनीन् दारुजा द्रागजानात् ॥ ५ ॥

दिव्यं धामाश्रयत्त्वत्परिचरणबलात्पङ्कजं चाण्डजोऽपि
स्यात्किं चित्रं ! त्वदेकाश्रयणबलगुणाद् दिव्यरूपं दधाना ।
त्रीँल्लोकान् वर्णयेच्चेच्छरणपरवशे वाणि ! वाणी मदीया
नो चेन्मातस्तव स्याच्छरणगतजनत्यागजन्योऽपवादः ॥ ६ ॥

श्रौताचारपरायणश्च सकलज्ञानैकभूमिं सदा
विद्यैश्वर्यविसर्जनेन परितः सम्पूरितोर्वीगृहम् ।

---

१. हरिहरचरितचम्पूकाव्यं बहोः कालात् पूर्वं प्रकाशितम् । तत्र काशीवासात् पूर्वतनमितिवृत्तमस्ति । तदेव संक्षिप्य प्रकाश्यते क्रमेण चरित्रज्ञानाय ।

भूयः सेवितचन्द्रशेखरपदाम्भोजद्वयं शाश्वतं
वन्दे शास्त्रसरोजवासरमणिं श्रीदेवदत्तं गुरुम् ॥ ७ ॥
दयागारं धर्मत्रिदशतरुमूलं सहृदयं
श्रितश्रौताचारं कविकुमुदराकेशमनघम् ।
सदा गङ्गागङ्गाधरचरणकञ्जैकशरणं
गुरुं वन्दे शास्त्रप्रचयसदनं रामवदनम् ॥ ८ ॥

"कविः स्वाहङ्कारं परिहरति"

उर्व्यामुर्वरितं विलक्षणगिरां नैवाणुमात्रं क्वचिद्
नैवालङ्कृतिचुञ्चुचुम्बितमहं पन्थानमालोकये ।
शुद्धाश्वासदुपाधिभेदविधयाऽशुद्धा मदेकाश्रया
वाचः श्रीगुरुदेववृत्तरचनापूताः परं कामये ॥ ९ ॥
करालकलिकुण्डलिप्रखरकालकूटानल-
ज्वलज्जटिलहेतिभिर्हृदभिदग्धमाघूर्णितम् ।
गुरूज्ज्वलकथासुधासरिदधीशमध्योदरा-
वगाहनमहौषधिश्रयणतोऽस्तु मे नीरुजम् ॥ १० ॥
दिनकरमिव दीपो वारिधिं पाद्यमम्भः
पतिमिव कुसुमस्रक्चन्दनश्चेन्दिरायाः ।
कविकृतिरिव वाणीं पण्डितान् सर्वकालं
भणितिरपि मदीया तोषयिष्यत्यवश्यम् ॥ ११ ॥
अयं मे विश्वासो गुरुवरचरित्रामरवनी
विचित्रामोदाढ्यैर्विविधसुमनोभिः सदवनिः ।
सुखं खेलन्तं मां तरलपदमज्ञातपृथुकं
सहिष्यन्ते सन्तः सहजकरुणापूर्णहृदयाः ॥ १२ ॥
नैवास्तु मत्कृतिरियं विबुधेषु मान्या
मान्यं भविष्यति चरित्रमिदं गुरूणाम् ।
दौवारिकेण कथिता नृपतेरनुज्ञा
धार्या न किं भवति माल्यमिवाखिलानाम् ॥ १३ ॥

नैवं विदन्तु सुधियो लघुबन्धबद्धं
यास्यत्यपारचरितं लघुतां गुरूणाम् ।
लोकातिशायि विभवस्य हरेर्नु कच्चिद्
मूर्त्यात्मना व्यवहितस्य महत्त्वहानिः ॥ १४ ॥

द्वित्राक्षराणि सविधे मम सञ्चितानि
प्रायेण सन्ति गुरुभिः समुदीरितेषु ।
तान्येव तच्चरितचित्रणतो विधातुं
स्थास्नूनि तच्चरणयोः समुपाहरामि ॥ १५ ॥

## कथा-प्रारम्भः

आस्ते भारतवर्षको जनपदो यत्राभवन् भूयसा
वेद-व्यास-कणाद-गोतममुखाः षड्दर्शनाहस्कराः ।
श्रीमान् यत्र च बौद्धकुञ्जरघटाकण्ठीरवश्शङ्करः
श्रीवाचस्पतिमण्डनावुदयनो ये दर्शनोद्धारकाः ॥ १६ ॥

श्रीमान् भट्टकुमारिलो बुधकुलालङ्कारचूडामणिः
श्रीमान् खण्डनखण्डखाद्यजनिभूर्हर्षश्च तर्कार्णवः ।
वाल्मीकिः कविरादिरद्भुतकलाः श्रीकालिदासादयः
श्रीमत्पाणिनिपन्नगप्रभृतयः शब्दाकरोद्धारकाः ॥ १७ ॥

तत्रास्तेऽखिलधर्मशास्त्रविदितं तीर्थं प्रयागाभिधं
गङ्गा यत्र सरस्वती च यमुना स्वच्छाम्बुपूर्णा सदा ।
भारद्वाजकुटी महाऽक्षयवटो दुर्गं तथाऽभ्रंलिहं
धन्यो भारतवर्षशेखरमणिस्तीर्थाधिपो राजते ॥ १८ ॥

खाद्यन्ते दुरितान्यनन्तजननाऽसद्भावजातानि यज्-
ज्ञाताज्ञातपरापराणि जगतां सद्यः पदन्यासतः ।
वेण्या नित्यमतीव निर्मलतया सान्द्रं स्फुटं दृश्यते
मन्येऽसौ यमुनाच्छलेन पिहितो वेण्यन्तरे कालिमा ॥ १९ ॥

वनप्रयाणावसरे ससीतः सहानुजो नक्तमुवास रामः ।
अहो भरद्वाजनिकेतनं तन्नु तीर्थराजस्य किरीटमेतत् ॥ २० ॥

त्रिशक्तिरूपा जयति त्रिवेणी वटोऽक्षयश्छत्रनिभो विभाति ।
विशालदुर्गं परराजदुर्गं न तीर्थराजोऽस्तु कथं प्रयागः ॥ २१ ॥

त्रैलोक्यराज्यं सुदृढं त्रिशक्त्या सम्पादयन् धर्मदलोपगूढः ।
जयत्ययं पाप-सपत्नराशीनशेषरूपान् विदहन् प्रयागः ॥ २२ ॥

आसीत् तत्सविधे शुभे "समहन"ग्रामे घनश्यामविद्
वाग्मी मानधनः पवित्रसरयूपारीणविप्रान्वयः ।
पुत्रोऽस्येन्द्रमणिर्धरामरमणिः सद्वत्सगोत्रोद्भवः
श्रीमट्टंकधरोऽथ तस्य तनयो विद्यानवद्यान्तरः ॥ २३ ॥

श्रीमट्टंकधरस्य तस्य विदितः श्रीशम्भुनाथः सुतः
तस्याचारपरायणाः क्षितिपतिप्राप्तप्रभूतादराः ।
रामान्ता हरिवेणिमाधवबुधा अन्ये धरान्ताः क्रमा-
दासन् सप्त सुता हि धीरधरणीधारादिविद्यादिमाः ॥ २४ ॥

तेषु हरिरामद्विवेदी प्रथमः पुत्रो वाराणस्यामेकस्मादेव गुरोरखिलं शास्त्रमधिजगे। कदाचिच् श्रीमान् गुरुमहोदयो रुग्णो जातः। अथ म्रियमाणेन तेन—

आहूयेमं विनीतं चिरपरिचरणाश्चयितेनातुरेण
पुत्रैतन्मद्वचोऽन्त्यं त्वमव मम महापद्धतिं प्रस्थितस्य ।
अन्त्येष्टिं पूरयेथाः श्रुतिविहितविधामङ्ग हस्तेन सर्वा-
मित्थं सत्येव पुत्रे प्रमुदितगुरुणाऽदिश्य नाकः प्रतस्थे ॥२५॥

स्वमङ्कमानीय पतिं प्रविष्टया तया चितायां गुरुभार्यया बुधः ।
निमित्तमात्रानलमर्थितो भृशं कथं कथञ्चित् कर उल्मुकन्ददौ ॥ २६ ॥

चित्युद्यच्चित्रभानु-प्रसृमरविमलज्वालसोपानमार्गाद्
गच्छन्ती धाम दिव्यं वरमतिविमलं सा ब्रुवाणा प्रसन्ना ।
वाक्सिद्धिं वेदपुत्रान् धनमपि तुलनातीतमन्ते च मोक्षं
सायुज्यं प्राप पत्या धवलितधरणिर्धर्मपूतैश्चरित्रैः ॥२७॥

ततो यथावद्विधिनौर्ध्वदेहिकी क्रियाऽखिला श्रीहरिरामशर्मणा ।
स्वयं सपत्नीकगुरोः समाप्यदो धनं तदीयाय सुताय चार्पितम् ॥२८॥

आचारनिष्ठगुरुभक्तदयालुचेताः शुद्धान्तरो भुवनपण्डितचक्रवर्ती ।
दिव्यद्युतिः समुदियाय कुलावतंसो धन्यं कुलं यदुदरे हरिराम एषः॥ २९॥

एकग्रामक्रयणविषये स्पर्द्धया बद्धवैरः
श्रीमान् कश्चिन्नृपतिरमुना क्रीततद्ग्रामकेण ।
हेतोः कस्मान्नृपतिसदनद्वारमायातमेनं
सोपालम्भं सुधियमसकृद् भूमिनाथो निनिन्द ॥ ३० ॥

तद्भूपस्यानुचितवचसा वर्द्धिताधिः सुधीशो
नातो द्वारं तव नृप ! कदाप्यागमिष्यामि भूयः ।
त्वं चेदायास्यसि मम गृहं वेत्स्यसि ब्राह्मणत्व-
मित्युक्त्वा द्राक् तत उदचलत् कम्पमानः क्रुधाऽयम् ॥३१॥

वाक्सिद्धिभीतेरनुकूलितेनाधीशेन केनाश्रितकूटनीतिः ।
ऋणाभियोगं किल लक्षमुद्रा-निबन्धनं कारितवान्नृपस्य॥३२॥

ततोऽभियोगे जयिनं सुधीशं स्वयं समागत्य विनष्टदर्पः ।
अजानता यद् गदितं कृपालो क्षमा विधेयेति जगाद भूपः ॥ ३३ ॥

ततो जितं तद् द्रविणं समस्तं समर्प्य तस्मै प्रथितप्रभावः ।
अलब्ध तस्मान्नृपतेः सकाशात् समं प्रशस्त्या विभवं प्रभूतम् ॥३४॥

श्रीमन्माधवरावपेशव इति ख्याताद् धराधीश्वरात्
पूनाराज्यपुरन्दराद् गुणबलाल्लेभे प्रतिष्ठापदम् ।
सर्वोच्चं पदमञ्जसाऽतुलसभामध्ये पुरो धीमतां
श्रीमान् धीरधरो दिगन्तविजयी विद्यावनौ विश्रुतः ॥ ३५ ॥

श्रीमद्धाराधरस्याऽप्रतिभटविदुषो विज्ञतायाः प्रभावात्
सन्तुष्यानापुरेशः समतलपृथिवीं निष्करां संविधाय ।
शस्याढ्यां सर्वकालं विमलमतिरदाद् भूयसीं धीमतेऽस्मै
तस्यामेकं स्वतन्त्रं पुरमथ सुधिया स्थापितं पण्डिताख्यम् ॥३६॥

अन्ये च जगद्विदितवैदुष्याः वेणीराम-माधवराम-धरणीधर-विद्याधराः गृहकार्यं सम्पादयन्तो भूमण्डलमिदं मण्डयामासुः ।

पण्डितमण्डलीमण्डनेन श्रीमद्धाराधरेण गङ्गायमुनयोरन्तराले स्थापितं पण्डितपुरं धन्यम् ।

गङ्गोत्तुङ्गतरङ्गभङ्गिमभरव्यासङ्गसङ्गीभवद्-
धावद्गन्धवहावधूतपरितः प्रेङ्खत्पताकावलि ।
कालिन्दीजलमौलिमञ्जुलचलत्कल्लोलकोलाहला-
क्रान्तप्रान्तविराजि पण्डितपुरं यत्पण्डितानां पुरम् ॥ ३७ ॥

यस्योपकण्ठनगरी "करमा" प्रसिद्धो-
दीचीं दिशं श्रयति सर्वसमृद्धिपूर्णा ।
प्राचीं दिशं "हथिगनी" तु दिशामवाचीं
"वारी" स्वकीयपुर 'दानपुरं" प्रतीच्याम् ॥३८॥

धाराधराच्च विबुधाद्विबुधाग्रगण्यो
विश्वम्भरो जनिमलब्ध कुलावतंसः ।
विद्याधनेन विहितो भुवनोपकारो
विश्वम्भरेति समवाप यथार्थनाम ॥ ३९ ॥

विश्वम्भराच्च विदुषो बलभद्रदत्तो
जातो गुरुप्रवरतातमहोदयोऽयम् ।
आसाद्य यं विजयते बुधरत्नराज-
मद्यापि किन्न वसुधा वसु धारयन्ती ॥ ४० ॥

सोऽयं श्रीद्विजवंशभूषणमणिर्धीराग्रणीर्दीप्तिमान्
साक्षात्पूर्णकलः कलाधर इवोद्भूतोऽम्बुधेः सत्कुलात् ।
लोकं कीर्त्तिकरोत्करैर्धवलयन् पीयूषवाचाकरः
पूज्यः श्रीबलभद्रदत्तसुमनाः सम्मानितः सज्जनैः ॥ ४१ ॥

नम्रीभूतप्रभूतक्षितिपतिविनमन्मौलिमालान्तराल-
व्यालोलोत्कालिमालामुखरमुखसुखास्वाद्यपादारविन्दः ।

विद्वत्प्रत्यर्थिसार्थप्रबलतममदध्वंसनाद्वैतवीरः
सञ्जातः कोऽपि लोके बुधवरबलभद्रो बुधाखण्डलोऽयम् ॥ ४२ ॥

सद्राजधान्यां रुचिरे वरांवे श्रीमन्महावीरमहीमहेन्द्रात् ।
अग्रयासनं शास्त्रबलादवाप्तं नाके मघोनो गुरुणेव येन ॥ ४३ ॥

गिरिनयननवैके वत्सरे ( १९२७ ) विक्रमस्य
शुचिसितशरतिथ्यां युग्मलग्नेऽर्कवारे ।
बुधवरबलभद्रान्मातृलक्ष्म्यां हि जाता
हरिहरकृपयाऽतो भेजिरे तादृशाख्याम् ॥ ४४ ॥

गौरी च गङ्गा यमुना च तस्माच् श्रीगोमती वेदमिताः सुपुत्र्यः ।
आविर्बभूवुः श्रुतयश्चतस्रो यथा विधेः पावनदिव्यभासः ॥ ४५ ॥

देवांशद्वयमाश्रयंस्तदनुजः श्रीरामकृष्णाभिधो
भ्रातृत्वोचितयोग्यतामधिगतः श्रीराकृष्णोपमः ।
जातो दिङ्मुखदानगुम्फितयशस्सम्भारसम्भासुरो
विद्वत्तल्लजदन्तिदन्तदलने दक्षो दयालुः क्षितौ ॥ ४६ ॥

हरिर्हि लक्ष्म्यां विहितात्मभावनो हरस्तथायं द्विजराजभूषणः ।
कृपालुरप्येष महादयोदयाद् गुणानुसारादभिधां दधुर्न किम् ॥४७॥

हव्यक्षेपादिव हुतभुजो दीप्यमानाः समन्तात्
कर्माभ्यासादिव च निगमा जाततत्त्वावभासाः ।
तेजःपुञ्जाः स्वयमपि पुनर्जातकर्मावसाने
शाणोल्लीढा मणय इव ते प्रापुराभामदभ्राम् ॥ ४८ ॥

संवर्द्धमाननवचन्द्रकलाभिरामा
लोकातिशायिशुभलक्षणपूर्णकामाः ।
मार्तण्डमण्डलविमुग्धमुखावभासाः
पित्रोरिमे नवनवां मुदमावितेनुः ॥ ४९ ॥

ततस्तु चूडाकरणं महात्मनामनुष्ठितं पञ्चमहायनेऽखिलम् ।
यथाकुलाम्नातविधिश्रुतीरितं महासमारोहमहामहोज्ज्वलम् ॥ ५० ॥

अथाक्षरारम्भविधिं पितामहो महोदयानां निरवर्तयत् स्वयम् ।
शुभे मुहूर्त्ते गुरुवासरे यतो गुरुत्वमेषां जगतीतले भवेत् ॥ ५१ ॥

अथ समयोचितं बालकेलिवर्णनमाह—

बालकेलिनिरताः सवयस्यैस्तान् प्रजा अभिनयन्त उदाराः ।
ते स्वयं परिवृढाः समभूवन् नीतिशासनकलासु धुरीणाः ॥५२॥
मन्त्रिमित्रभटदण्डधराद्यान् पार्श्ववर्त्तिपरिचारकवर्गान् ।
तेषु चैव परिकल्प्य यथावत् प्रारभन्त नियतीरितखेलाम् ॥ ५३ ॥
सर्वतः शिशुगणैरतिगूढा मध्यवर्तिनृपवेशविगूढाः ।
शर्वरीश इव पर्वणि पूर्णस्तारकावलयमण्डलकीर्णः ॥ ५४ ॥
कश्चिदेति करमर्पयति द्राक् कोऽपि गच्छति करग्रहणाय ।
कोऽपि नैति पुनरेति स दण्डात् स्तौति बद्धकरपङ्कजकोषः ॥५५॥
कोऽपि कश्चिदवगूरयते चेत् कोऽपि ताडयति वा कमथैवम् ।
दण्डनीतिनियतेशनिदेशाद् दण्डभाग्भवति दण्डधरेण ॥ ५६ ॥
बालकेलिरचिरादधुना सा सत्यतां श्रयति भाग्यबलेन ।
ताः प्रजाः परिवृढाश्च त एव क्रीडनञ्च न सतामिह मोघम् ॥५७॥
उपार्जितप्राक्तनसंस्कृतीनामुद्बोधनायैव यथोक्तकालम् ।
यज्ञोपवीतं धृतमष्टमेऽब्दे यथाविधानं गुरुभिर्वसन्ते ॥ ५८॥

नानाविधेयविधिविक्लवमानसत्वात्-
स्वस्यातिजीर्णवपुषो वपुषोऽक्षमत्वात् ।
एषाञ्च बाल्यचलचित्ततया स धीमान्
सम्प्रेषणे मतिमधत्त पितुः समीपे ॥ ५९ ॥
आकर्णितञ्च निखिलं व्यवहारयोग्य-
मह्नाय वर्णगणितादि पितामहास्यात् ।
यत्पाठने प्रभुरभून्न पितामहोऽपि
मन्येऽद्वितीयमहसः प्रबलं प्रमाणम् ॥ ६० ॥

कालक्रमेण नियतिप्रबलप्रभावाज्जग्मुः पितामहनिदेशदिशा वराँवे ।
तत्त्वावबोधपरिशुद्धधियः सुधाम्नः शिक्षाग्रहाय गुरवः स्वपितुः समीपे ॥६१॥

तत्र लोकातिशायिसमृद्धशालिन्यां 'बरांव' राजधान्यां लब्धप्रतिष्ठात् प्रधानराजधानीपण्डितात् स्वपितुः श्रीमद्बलभद्रदत्तद्विवेदिनोऽध्येतुममरकोशं लघुकौमुदीञ्च प्रारभन्त। तदानीं बाल्योचितचापल्यबलाच्चलाचलवृत्तितया शिशुसमाजसार्वभौमानां समवयस्कैः समं कदाचिदुत्प्लवनं कदाचिद्भ्रमणं कदाचित् क्रीडान्तरावलोकनं कदाचित् परस्परं नियुद्धाभासनाटनं कदाचित् पङ्क्तिशः सर्वानर्भकान् परितः समुपवेश्य तन्मध्ये सर्वोच्चासनासीनस्य स्वात्मनोऽध्यापकत्वाभिनयनं कदाचिद्विवदमानयोर्निर्णयाय साक्षिभूयावलम्बनमित्यादिनानाविधबालकेलिविलासलालसमानसानामेषां भाविपाण्डित्यसाम्राज्यशासनाधिकारसूचको विलक्षणः क्रीडाविशेषः प्रस्तुतः।

अथ व्यतीते कियति काले त्रिकालदर्शी कश्चित् श्रीमद्गुरुवरतातपादानां सुहृद्-राजज्यौतिषिकः क्रीडैकतानमानसानिमान् विलोक्य सौहार्दसम्बन्धाद् दुरन्तचिन्तानितान्तक्रान्तस्वान्तः श्रीगुरुवरपितरमुपगम्य अये! नु खलु भोः, किमिति तव धीरधुरीणचक्रचूडामणेर्महामहिममहीमण्डलाखण्डलश्रीमन्महावीरप्रसादसंलालितचरणस्य नयनानन्दकरो नन्दनो मुधा समयं नयन्नयं किल तिष्ठति ? इत्यभिधाय विरते तस्मिन् दैवज्ञे विज्ञोऽसावाह—

धावन् खेलन् वयस्यैरनुपलमधिकक्रीडनोत्तालचेता
नायं मत्पार्श्ववर्त्ती कथमपि भवति त्रास्यमानस्तनूजः।
किन्त्वेतद्वच्मि तथ्यं यदयमनुदिनं यावदध्यापितं तु
तावत्सर्वं प्रकामं कथयति शिशुभिः संश्रितक्रीडनोऽपि ॥ ६२ ॥

मालिन्यं प्रेममिश्रं गुरुवरजनकेनेत्थमावेद्यमानं
श्रावं श्रावं प्रसद्य त्वरितमयमिहाकारयेत्यादिदेश।
आहूतास्त्यक्तखेलास्सरभसमगमन् श्रावयन्तः स्वपाठं
निर्वर्ण्यैतान् स धीमान् जननफलकलाकोविदो व्याजहार ॥ ६३ ॥

पठसि किं वद भो इति भाषिता अमरकोशमथो लघुकौमुदीम्।
अभिदधुर्गुरवस्तदनन्तरं, स च सुधीर्निजगाद वचोऽपरम् ॥ ६४ ॥

शिशो ! अहं पाठयामि पठेत्यभिधाय गुरुवरान् दश पद्यानि पाठयामास । श्रावयितव्यानि चेमानि कण्ठस्थीकृत्य पद्यानि प्रातरिति चाभिधाय विरते, अद्यैवाहं श्रावयिष्ये इति कृतप्रतिज्ञाः कियत्क्षणानन्तरमेव अशिश्रवन् । ततस्तदानीमेषां तादृगलौकिकीं चमत्कृतिमवेक्ष्य विस्मयाविष्टचेता गुरुवरपितरमुद्दिश्य जगाद दैवज्ञः 'भो दृष्टादृष्टफलप्रकाशयित्रीं स्वशिशोर्जन्मपत्रीं दर्शयन्तु' इति विज्ञापिते शुभज्ञे कथमपि सञ्जातधैर्य आचार्यवर्योऽसावदर्शयत् । तां सम्यङ् निभाल्य गणकः—

दृष्ट्वा तदद्भुतफलं स हि जन्मपत्र्या एषां विबोधनविधिं समुपादिदेश ।
सम्पाठयैनमतुलप्रभमाङ्गलविद्यां सम्राट्समर्चितपदो ध्रुवमेव भावी ॥ ६५ ॥

वादि–द्विपेन्द्र–मदसादी मृगेन्द्र इति नोदीयतां भ्रम इह
नो खिद्यतां मनसि सन्धीयतां धृतिरहो दीयतां च हृदयम् ।
वादिप्रभेन समगादि प्रभो किमपि नाऽऽदिः कविस्तव सुतो
वादी गुरोरपि सुवादी सतां सदसि नन्दीश्वरस्य कृपया ॥ ६६ ॥

अथ श्रीमन्महीपतिमहावीरप्रसादोऽपि समाकर्णितसर्वोदन्तजातः कृतप्रसादः स्वात्मजैरेव सहैतानाङ्ग्लविद्याध्ययनाय समजिज्ञपत् ।

अये महावीर महीमहेन्द्र ! प्रतापवह्निस्तव कीदृशोऽसौ ।
रोहन्ति दूर्वाः परचत्वरेषु गृहास्तथैरण्डगृहाः भवन्ति ॥ ६७ ॥

त्वद्वैरिणामपयशोऽशरणं शरण्यो विज्ञाय निर्जितमपारसमज्ञया ते ।
विश्वम्भरः स्वशरणागतमाररक्ष कालायसाऽसितशरीरमुवाह तस्मात् ॥ ६८ ॥

त्वत्कीर्तिवैरिशरणं निपुणं विदित्वा शेषासनं नु परिकल्प्य तपः प्रकुर्वन् ।
त्वत्कीर्त्तिराशिकणदुग्धसमुद्रतीर्थे नित्यं निमज्जति मलान् परिहर्त्तुकामः॥६९॥

ततो राजानुमत्या पित्रादेशेन च आङ्ग्लभाषाऽध्येतुमेभिः प्रारम्भि ।

नित्यमेव बलवर्द्धनक्रियातत्परा गुरुवरा महाबलाः ।
बाहुदण्डभरतोऽधरोन्मुखीमन्तरायमिव मेनिरे धराम् ॥ ७० ॥

अथैवं व्यतिगच्छसु कियत्सु कालेषु—

प्रयागतो दक्षिणदिग्विभागे चाकाभिधः क्रोशमिताध्ववर्त्ती ।

ग्रामोऽस्ति तत्र द्विजराज आसीत् श्रीमान् सुधीष्ठाकुरदीनशर्मा ॥७१॥

तस्यात्मजासीत् परिणेतुमर्हा स तद्वरार्थी परितो भ्रमन् सन् ।
योग्यान् कुलीनान् धनिनो विचार्य तत्पण्डितानां पुरमाजगाम ॥७२॥

तस्मिन्विविच्य निखिलानुगुणैरिमान् स
सम्प्रार्थ्य चाशु बलभद्रबुधं तदानीम् ।
व्रातप्रयाणशुभलग्नतिथिं प्रमाय
ग्रामं स्वकं निववृते मुदितान्तरालः ॥ ७३ ॥

आमन्त्र्य पूज्यसहजानितरांश्च सर्वान्
सम्भारकान् स परिकल्प्य गजाश्वमुख्यान् ।
हस्त्युष्ट्रवाजिरथभूरि पदातिजुष्ट-
श्चाकां प्रहृष्य बलभद्रबुधः प्रतस्थे ॥ ७४ ॥

विनिद्रपङ्केरुहगन्धबन्धवस्तरंगिणीतुङ्गतरङ्गसङ्गिनः ।
सुखादिशन्तः पवना इव त्वरां वरात्तसन्मङ्गलसूचका ववुः ॥७५॥

ढक्कानिनादबधिरीकृतदिग्विभाग-
श्चाकां जगाम स जनौघमहासमुद्रः ।
प्रत्युद्गमं तदनु ठाकुरदीनशर्मा
कृत्वा परीक्ष्य च ददौ जनवासमस्मै ॥ ७६ ॥

स्वतन्त्रवासं परिचारकं तथा मनोनुकूलं सरसञ्च भोजनम् ।
यथेच्छपानं स हि कल्पपादपादवाप तट्ठाकुरदीनशर्मणः ॥७७॥

सद्वारे शुभलग्नके च समये देवाग्निसाक्ष्ये ततः
श्रीमट्ठाकुरदीनशर्मविबुधः शुद्धः सदाचारवान् ।
विद्याबुद्धिविचारवैभवकुलाढ्येभ्यो गुरुभ्यो मुदा
कन्यारत्नमदाद्यथोक्तविधिना स्त्रैणैर्गुणैरर्चितम् ॥ ७८ ॥

अथ समासादित विवाहमङ्गलाः श्रमेण पठितुं पुनरारेभिरे ।
क्षणं क्षणं जागरणं समाश्रितैर्यथा यथा सम्ववृधे धियां गुणैः ।

कृतावमर्षं विषयावभासनं तथा तथैवोपचितिं बभार किम् ॥ ७९ ॥
कियद्दिनैस्तान्विरहय्य भूपजान् तदग्रमीयुर्यदि मे विचक्षणाः ।
न तत्कथञ्चिद्दुरिताय मन्यतां न सन्ति सार्था हि सदाग्रगामिनः॥८०॥
अधीतिवर्त्मन्यवनीश्वराङ्गजान् विहाय याता यदि मेऽग्रतोऽग्रजाः ।
न कौतुकं तत्किल मन्यते मया यदग्रजन्मोचितिरेव केवलम् ॥८१॥
किमद्भुतं वा यदिहोच्यते मया तदग्रगामित्वमहो महात्मनाम् ।
न वा तदानीं सहपाठिनोऽभवन् न चाधुना तादृश एव का भिदा ॥८२॥
अथापि किं सा सहपाठितास्ति नो इहैव सर्वे यदधीयते समम् ।
अहो महीयान् महिमा महात्मनां विरुद्धधर्मोऽपि भिदां यदत्यजत् ॥८३॥

अथानन्तरं शीघ्राभ्यासावगाहनगुरुरोषकषायिताशययेव किलाङ्ग्लविद्यया, सुरभारत्या नु 'तथाविधसदुपाधिविशेषसंविधीयमानमहोन्नतिसमुन्नताशयया च प्रेरित इव धीरोऽपि श्रीमन्महावीरप्रसादः स्वात्मजेभ्योऽधिकमधीयानानिमानवाष्टम्भनात् ।

ततो निरुद्धप्रसरोरुशेमुषी निरुद्धधारेव दिहत्तरङ्गिणी ।
समुच्छलत्सत्प्रतिभोर्मिसङ्कुला सहस्रधासावुदजृम्भत क्षणात्॥८४॥

ततः "किमहमाङ्ग्लविद्यामेवेतोऽन्यत्र अधीयीय, आहोस्विदग्रजन्मोचितसुरभारतीसेवनं विदध्यां किंवाऽध्ययनं विरहय्य स्वतन्त्रं गार्हस्थ्यमेवानुतिष्ठेयम्'' इति नानाविधतर्कतरङ्गोत्तरङ्गितविचारसागरे मनो निमज्जयामासुः ।

ततः कुमारेभ्योऽधिकमधीयानस्य नरेशादेशानुसारेण मम पाठावरोधो जातस्तेन लघुकौमुदीममरकोषमेव पुनः पिपठिषामि, इत्येभिर्निवेदिते पठनाद्विरक्तोऽसि, चपलोऽसि, वितथं प्रलपसि, इत्याक्रुश्य ताडयिष्यामि भन्त्स्यामीत्यादि भूयो भर्त्सयमानेन पित्रा आङ्ग्लविद्यामेवाध्येतुमादिष्टाः श्रीमद्गुरवः ।

तत आंग्लविद्यायां सञ्जातपरापरागाश्चञ्चरीका इव चम्पकवनात्ततो निवृत्य पितुरात्मानं संगोप्य स्वग्राममाजग्मुः ।

तत्रागत्य पूज्यपादां स्वमातरं प्रणम्य मुद्रानयनाय पित्राहं श्रीमत्याः समीपे प्रेषित इत्यभिधाय विरराम। ततो माता प्रचुरतरमुद्रालाभवतामपि तेषां मत्तो मुद्रायाचनं विश्वासानर्हम् अथवा भविष्यति प्रयोजनमेवेति पूर्वं सन्दिह्य पश्चाद्विश्वस्य तत्कथनानुसारेण मुद्रा अर्पितवती।

अवाप्य मुद्रा जननीकराच्छुती सुपर्वभाषाध्ययनार्थमुत्सुकाः।
सरस्वतीस्नेहगुणाहृतान्तराः स्वयं हि संगोप्य गृहात्प्रतस्थिरे॥ ८५॥

इति बालकाण्डम्



## अथ अध्ययनकाण्डम्

पाथेयमादाय निगूढभावाः महानुभावा नगरीं हरस्य।
प्रतस्थिरे मोदभृतान्तरङ्गाः सरस्वतीसेवनसाभिषङ्गाः॥ १॥

गत्वा तत्रानुपमनगरीदर्शनोद्दाममोदाः
यातायातोद्यतवटुचयान् कुर्वतोवाग्विलासान्।
किं भोः कण्ठीकृत इति मिथः पाठमालोचमामान्
शङ्कातङ्कोपहितहृदयान् पृष्टवन्तोऽनुगम्य॥ २॥

यूयं मान्याः पठथ कुहचिद् कस्थ चान्तेवसन्तो
धन्यस्य श्रीबुधवरगुरोः क्लान्तचित्ताः कथं स्थ?
साभिप्रायं गुरुभिरिति सम्पृष्टमाकर्ण्य सर्वे
सर्वं स्पष्टं कथयितुमथारेभिरे छात्रसङ्घाः॥ ३॥

अत्र श्रीमान् महितचरणः पुङ्गवः पण्डितानां
लोकत्रय्यां दशरथ इति ख्यातनामानुभावः
मान्यः श्रीमान् दशरथ इवोर्वीशचक्रार्चिताङ्घ्रिः
तस्य श्रीमच्छुभगुणगुरोरन्तिकेऽधीमहेऽङ्ग॥ ४॥

पाठस्तत्र प्रभवति सदाऽशेषशास्त्रोच्चयानां
चेतोग्राही सहृदयविदां सर्वसाधारणानाम् ।
किन्त्वेकेयं सकलवटुभिस्तत्प्रतिज्ञा विचित्रा
श्रुत्वा पूर्वाधिगतमखिलं पाठ्यते छात्रवर्गः ॥ ५ ॥

तस्मात् सर्वेऽवहितमनसोऽधीतमेतद्विवृण्म
आकाङ्क्षा किं भवति भवतोऽधीतिवर्त्मानुगन्त्री ।
इत्याभाष्योपरतवचनानूचुरेतन्महान्तः
वाराणस्यामधिजिगमिषाहेतुकोऽभ्यागमो नः ॥ ६ ॥

सामर्थ्यञ्चेत् प्रथमपठितश्रावणे तावकीनं
वाढं सिध्येत्सहृदयगुरोः प्रीयमाणादधीतिः ।
एतच्छ्रुत्वा सपदि सह तैः सङ्गता मोदमानाः
विद्यागारं दशरथगुरोरीयिवांसोऽग्रगण्याः ॥ ७ ॥

तानायातान्प्रणतिचटुलान् बद्धगम्भीरभावान्
प्रह्वीभूतान् दशरथगुरुः सादरं प्रत्युवाच ।
काधीतिस्ते ? पदविषयिणी पुस्तकं ? कौमुदीय-
मत्राकांक्षा तव पठितुमोश्चेद्दया श्रीदयालोः ॥ ८ ॥

अत्रत्या किं तव न विदिता नीतिरीतिर्विचित्रा
विज्ञायैवेदमुपगतो नीतिमार्गं मनोज्ञम् ।
इत्यापृच्छ्यौत्तरितवचतो नोदमानो महात्मा
प्रश्नान् योग्यामथ कतिपयान् साधुशीलानपृच्छत् ॥ ९ ॥

पूर्वान् पक्षान् प्रखरधिषणास्तान् समाधाय सर्वान्
सौम्यावासं प्रमुदितगुरोरापुरेते महान्तः ।
आरभ्यातः प्रकृतविषयाधीतिदत्तावधानाः
पूर्वाधीतं सकलमनिशं श्रावयन्तः पठन्ति ॥ १० ॥

इमे लघुकौमुदीमसमाप्यैव सिद्धान्तकौमुदीं प्रारेभिरे । तत्र ताव-च्चेतश्चिरं चिन्तयित्वापि न नाम कारणान्तरमवगाहते ॥ तथाहि—

शेषित्वं न क्वचिदपि गतं कृत्यमेतद्विधानां
कोऽयं शेषिप्रथमविरहो धैर्यगाम्भीर्यभाजाम् ।
हेतुः कोऽपि स्फुरति हृदये नात्र सम्भाव्य किन्तु
ग्रन्थप्रोत्थामहमहमिकामेव हेतुं वदामः ॥ ११ ॥

अहमहमिका च तुल्या यद्यपि सर्वत्र भवति सर्वेषाम्,
न्यायस्तथापि मानं विप्रतिषेधे परं कार्यम् ॥ १२ ॥

परित्यक्तविषयानभिज्ञताभ्रमं निरस्यन्नाह—

पठितापठितसमानं प्रतिभार्पितमस्तु हेतुरौचित्यात् ।
पाण्डित्यस्य विलक्षणमुक्तं विचक्षणैर्हि लक्ष्म ॥ १३ ॥

स्वल्पे काले गतवति गुरोः प्रीतिकेकीपयोदाः
सर्वाद्वैतं पदमधिगताः सार्थसन्दोहमध्ये ।
सेवायासामृतभरसदासिक्तमूलालवाल
एषां विद्यातरुरुपचितिं प्राप नित्यं प्रकामम् ॥ १४ ॥

एनान् देवेक्षणकपटतो दिक्षु बम्भ्रम्यमाणाः
सम्बोध्यान्ये जगदुरभितो देवसंदर्शनोत्काः ।
किं भो ? काशीनिवसनफलं ? यन्न विश्वेशलिङ्गम्
बाढम् ढुण्ढिप्रभृतिमखिलं देवमासेवसे त्वम् ॥ १५ ॥

काशीवासो मम शृणुत भोः ! पूर्णविद्यार्जनाय
विद्यादाने प्रभवति सतामाशुतोषो महेशः ।
साक्षाद्धेतुं श्रममिह शिवं किन्तु हेतुं निमित्तं
ज्ञात्वा नित्यं श्रममनुसरन्नन्तराऽसेव एव ॥ १६ ॥

भागीरथ्यां विहितमतयः स्नान्त एवैकदा ते
गन्तुं सर्वे त्रिभुवननुतं श्रीजगन्नाथधाम ।
हस्ते कृत्वा सलिलमभिसङ्कल्पमानाः सहैव
पूज्यान् दृष्ट्वा विरतहृदयानूचुरेतत् किमङ्ग ॥ १७ ॥

देव्यो देवाः कृतवसतयः सन्ति शास्त्रेषु नित्यं
तस्माद् यावत्पठनसमयं तानि मन्ये पराणि ।
युष्माकं चेद् ध्रुवमतिरभूद् गम्यतां नाम सर्वै-
र्द्रक्ष्याम्यद्धाऽऽगमनिपुणधीः श्रीजगन्नाथमूर्त्तिम् ॥ १८ ॥

युक्तं युक्त्या गुरुवरवचस्तूर्णमाकर्ण्य दीप्ता
रात्रौ पाठाभ्यसनसमये दीपनिर्वापणेन ।
ग्रन्थस्यैवं रहसि पिहितैरन्तरायं वितेनुः
पादे पादे भवति सुकृते विघ्नबाधा जगत्याम् ॥ १९ ॥

किन्त्वस्माभिर्हरिपुरमहो पूर्वगन्तव्यमासीत्
पश्चादेतत्किल हरपुरं नामवर्णानुसारम् ।
योऽयं जातोऽतुलभगवतोऽतिक्रमस्तत्फलं किं
प्रत्यूहोऽसाविति हरिपुरीं गन्तुमुत्का बभूवुः ॥ २० ॥

विश्वाधारनरावतारनिलयां तद्बाललीलालयां
भूयः सत्त्वनिपातलोलसरयूस्रोतः पवित्रोत्तराम् ।
संख्यातीतविदग्धमुग्धशरणां त्रैलोक्यपापापहा-
मध्येतुं सुरभारतीं कृतधियो रम्यामयोध्यां ययुः ॥ २१ ॥

पीयूषवर्षिसरयूविशदप्रवाह-व्याधूततापतिमिरा नितरां निषेव्या ।
तत्त्वावबोधपरिशुद्धसमिद्धसिद्धैः श्रीरामचन्द्रजनिभूः प्रथिता पृथिव्याम् ॥२२॥

क्वचिद् घण्टाघोषः क्वचिदपि च भेरीघनरवः
क्वचिच्छङ्खस्वानः क्वचिदपि मृदङ्गध्वनिरहो ।
क्वचिद् वीणाक्वाणो रघुपतियशोगानसदसि
क्वचिड्ढक्कानादः क्वचिदपि विपण्यां कलकलः ॥ २३ ॥

क्वचिद्देवागारं क्वचिदपि च विद्योदवसितं
क्वचिद् रम्यो हर्म्यः क्वचिदपि च सौधोऽधिगगनम् ।
क्वचिद्धर्मागारं क्वचिदपि वटूनां निवसनं
मुनीनामावासः क्वचिदलमयोध्या विजयते ॥ २४ ॥

श्रीमद्ब्राह्मणकुलभूषणश्रीगुरुचरणोपाध्यायस्थापित'सरयूबाग' इति नाम्ना प्रसिद्धे विद्यालये प्रधानाध्यापकपदमलङ्कुर्वाणं सकलबुधजनविभूषणं सर्वविद्याप्रदं चन्द्रभूषणमिव श्रीचन्द्रभूषणं महोदयं प्रति तत्राध्ययनाय स्वाभिप्रायं प्रकाशयाञ्चक्रुः। ततः किमधीषे इति तेन पृष्टाः "सप्तमसर्गान्तेन रघुवंशेन सह सिद्धान्तकौमुद्याः पूर्वार्द्धमवसितम्, उत्तरार्द्धमधिजिगमिषामि"।

ततोऽग्नीषोमौ अग्निष्टोम इति प्रयोगद्वयप्रक्रियायां विशेषानुशासनं किमिति पृष्टाः विशेषानुशासनेन प्रयोगद्वयं संसाधयामासुः।

"ततोऽथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम्" इति रघुवंशपद्यं व्याख्यायैतत्पद्यघटके रथमधिशिश्य इति वाक्ये शीङ्धातोरकर्मकत्वात् रथमित्यत्र कर्मत्वानुशासकं कथयेति तैरनुयुक्ताः सुस्पष्टं श्लोकं व्याख्याय कर्मत्वानुशासकशास्त्रप्रतिपादनेन समाहितिश्चक्रुरेते। ततः सम्यक्समाहितिसमवाप्तिसञ्जातहर्षोत्कर्षेण मनीषिणाऽनवसरे समुपस्थितानामप्येतेषां प्रवेशपुस्तिकायां नामोदलेखि। अत्रस्थाद् द्वितीयाध्यापकात् पं० श्रीमद्रामाज्ञाभिधानबुधादधीयतामित्यभ्यधायि च। ततः—

रामाज्ञेव स्वभावः फणिपतिगहनज्ञानतत्त्वाग्रचविज्ञो
रामाज्ञाख्यो मनीषी विविधजनपदाभ्यागतांश्छात्रसङ्घान्।
यस्यामासीदजस्रं समवहितमनाः पाठयन् शब्दशास्त्रं
प्राप्यैते तन्निदेशं गुरुवरचरणा अन्तिकं तस्य जग्मुः॥ २५॥

तत्र विद्यालये परितः समुपविष्टान् गुरुवराभिधीयमानविषये दत्तावधानांश्छात्रान् पाठयन्तं द्वितीयाध्यापकं सादरं प्रणम्य यथावकाशं सावधानाः समुपाविशन्। ततो यथावसरमध्यापकमहोदयैरभिहिताः श्रीगुरवः सर्वं पूर्वोदन्तजातं निवेदयामासुः। अनन्तरं श्रमशीलान् इमान् विज्ञाय प्रसन्नचेताः स्वीयानुमतिमध्ययनाय ददौ। एतेऽपि अनवरतभूरिपरिश्रमेण पठन्तः प्रतिभोपचितिपरिचितिं ददानास्तत्र न्यवात्सुः।

अथ सिद्धान्तकौमुद्यास्तिङन्तमधीयाना जाते कियत्कालातिपाते श्रीमद्गुरुचरणभिया कस्मिंश्चित्कोणकुहरे स्वात्मानं संगोप्य मनोरमापरिभाषेन्दु-

शेखरयोरपि पाठं शृण्वन्ति स्म । एवं रीत्या श्रवणक्रमेणापि तयोरपारपारावारयोरिवातिगहनगम्भीराशययोरन्तर्गतसद्वस्तुजाततत्त्वावगाहनपुरस्सरं सम्यक् पारीणतां प्रापुः । पाठशालीयपरीक्षावसरे समागते पूर्वोक्तग्रन्थत्रितयविषयकपरीक्षां दित्सुभिरेभिस्तदनुसारमावेदनं व्यलेखीत्येतद्दृष्ट्वा शशविषाणप्ररोहणप्रायं परीक्षाफलमनुसन्धाय तादृग्–दित्साप्रवृत्तिश्चावलोक्य चकितचकितेन चेतसा सुमनसाऽऽहूय 'कदा "मनोरमापरिभाषेन्दुशेखरा"वध्यगीष्ट' इति पृष्टाश्छात्रानध्यापयतः श्रीमतो मुखाच्छ्रुतप्रायमिदं ग्रन्थद्वयमिति सप्रश्रयमूचुः । ततः प्रकृतग्रन्थस्थान् कतिपयान् प्रश्नान् परिपृच्छ्य सम्यक् तत्समाहितिश्चावाप्य साश्चर्यं परीक्षानुमतिं स्वीचकार ।

ग्रन्थत्रितयपरीक्षा यद्यपि गुर्वी चैतादृगन्येषाम् ।
शक्तित्रितयाभिजुषां कथं गुरूणां तथा भवतात् ॥ २६ ॥

ततः कतिपयदिवसानन्तरं परीक्षाफलप्रकाशनपत्रमपि शक्तित्रयावदातश्रीगुरुवराभिधानोत्तंसितं सत् समुदियाय सर्वप्रथमेन सहाभ्युदयेन श्रीगुरुचरणानाम् ।

नित्यानन्ताब्दतप्ताप्रतिमततपस्तुष्टरुद्रोपदिष्ट-
प्रोत्कृष्टज्ञानकूटप्रतिफलितमहो शब्दशास्त्रं यदेतत् ।
दाक्षीपुत्रेण लब्धं क्षतविपुलशरत्स्वल्पकालेन तत्तु
स्वभ्यस्तं सर्वमेभिर्गुरुभिरथ गुरूँस्तोषयद्भिर्विचित्रम् ॥ २७ ॥

माद्यत्फणीन्द्रफणभीमविषानलौघसाद्ध्राधिवासविषमं पदतन्त्रभाष्यम् ।
पीयूषभप्रतिमया शमयन्त उग्रं जग्मुर्गुरोर्हृदयहर्षनिदानभावम् ॥ २८ ॥

ततो भूणेति नाम्ना विश्रुते तत्रत्ये विद्यालये सकलदर्शनाध्यापकप्रधानाध्यापकपदं गोरखपुरमण्डलमण्डनायमानाः सरयूपारीणब्राह्मणवंशावतंसाः श्रीमदुमापतिशर्माणोऽलञ्चक्रुः । एषामेव किल द्विजकुलमुकुटालङ्कारहीराणां नामान्तरं नकछेद इति ।

यो नाकनायकपुरोहितमानमर्दात्
नाकच्छिदात्मजनुषा नकछेदनाम्ना ।

ख्यातो गभीरगुरुबोधतया धरण्यां
स स्वीकृतो गुरुतया गुरुभिर्मदीयैः ॥ २९ ॥

न्यायाम्भोरुहमध्यगग्रहपतिर्योगे यतीनां पतिः
वेदान्तार्णवकर्णधारनृपतिः साहित्यवाचस्पतिः ।
चाणक्योऽखिलकूटनीतिनृपतिः सांख्याम्बराहर्पतिः
शब्दे कश्चिदुमापतिर्विजयते मल्लेषु सेनापतिः ॥ ३० ॥

नाद्यावधिप्रतिभटो भुवि यस्य जातः
कश्चिच्च शास्त्रसमराङ्गणसम्मुखीनः ।
जागर्ति यद् विजयडिण्डिमघोष एषः
यस्यागमे हि विबुधाः शिथिला बभूवुः ॥ ३१ ॥

शास्त्रविद्यायामिव मल्लविद्यायामपि प्राधान्यमस्येत्याह—

माद्यद्दोर्दण्डपिण्डीभवदतुलबलोत्तोलिताखण्डखण्डो
जङ्घाकाण्डाभिघातप्रतिरसितमुहुस्त्रस्तपातालखण्डः ।
ब्रह्माण्डोद्दण्डभीमो भुजबलविभवव्यस्तनेपालखण्डः
सोऽयं जातो गुरूणां गुरुरतुलबलो मल्लविद्याप्रकाण्डः ॥ ३२ ॥

कदाचिद् दिग्विजययात्राक्रमेण प्रालेयाचलाङ्कपर्यङ्कसुखासीनां नेपालनृपालभुजबलपालितां नेपालराजधानीं नेपालजनपदावतंसीभूतां काष्ठमाण्डूनाम्नीमगच्छत् श्रीमान् पं० उमापतिद्विवेदी । तत्रस्थान् च श्रीनेपालनरेशादेशानुसारेण विजिगीषया च पर्य्यायेण सर्वशास्त्रेषु विहितपूर्वपक्षान् विचक्षणविलक्षणान् धीरधौरेयान् प्रखरतरशेमुषीमुखस्थीकृतसकलशास्त्रसारोऽयं पण्डितप्रवरस्स्वप्रतिभाविशेषैर्निःशेषान् विजित्य सह हर्षोत्कर्षेण नेपालनरपालहृदि पदमधत्त । ततस्तत्र पातितमल्लशतो वज्रसंहननो भीषणभुजयुगोत्पटितभटकोटिकीर्तिविटपो दिग्विजययात्राक्रमेण कश्चिन्नियोद्धुकामो योद्धा धीरोद्धतगतिराजगाम ।

तं तथाविधं योद्धुं समुद्यतञ्चावलोक्य तत्रस्था नेपालनृपालपालिता योद्धारस्तत्प्रतिद्वन्द्विपत्रं ( सहयोधनपत्रं ) स्वीयनामाङ्कनेन नालञ्चक्रुः ।

ततः—

मल्लेनालं न मल्लाः कृतदृढहृदया योद्धुमागन्तुकेन
भूता नेपालपृथ्वीपरिवृढहृदयह्रासमाशङ्क्य तस्मात् ।
तूर्णं योद्धुं प्रवृत्तो बहु नरपतिना वार्यमाणोऽपि भूय-
स्तालानास्फोटय धूल्या धवलवपुरयं मल्लखाते चुकूर्द ॥३३॥

ततो नियोद्धुं कृतपूर्वनिश्चयो महामलः सोऽपि चुकूर्द उद्धतः ।
उभाविभावुभयत्र संस्थितौ प्रचक्रमाते तुमुलं नियोधनम् ॥ ३४ ॥

भ्राजद्भीमभुजाग्रपञ्जरमिलद्वज्राग्रवक्षःस्थलम्
पादाघातनमद्धराधरधरं साटोपहुंहुंकृतम् ।
स्कन्धास्कन्धि भुजाभुजि स्यदवलाभ्यावर्जितान्यस्थिति
हस्ताहस्ति च मल्लतल्लजयुगस्पर्धासमुज्जृम्भितम् ॥ ३५ ॥

यामार्द्धमानमविराममनियुद्धमेतौ
कृत्वाऽपि नो व्यरमतामथ भूमिपालात् ।
रुद्धौ कथं कथमपि प्रतिरुद्धवीर्यौ
बन्धात् प्रदीपगमनाविव सिन्धुपूरौ ॥ ३६ ॥

कीदृशोऽयं महानुभावो योद्धेति नेपालनरपालेन एकान्ते पृष्टः ।
नेपालभूपालमुवाच सोऽयमजेय एष द्विजराजभीमः ।
न धर्मयुद्धाद् विजयो मम स्यात् श्वः कूटनीत्या नृपते ! नियोत्स्ये ॥ ३७ ॥
स एव जीवेदहमेव वा श्वः न संशयोऽग्रे नृपतिः प्रमाणम् ।
इति ब्रुवाणो नयकोविदेन द्रुतं नियुद्धात् स निवारितोऽभूत् ॥ ३८ ॥
बुधेश्वरो भूपतिनापि वारितो न वारितोऽभून्निजगाद भूपतिम् ।
स्वयं स एत्याहमहो जितस्त्वया वदेद् विरंस्यामि तदा न चान्यथा ॥ ३९ ॥

आटोपभङ्गिभणितं विदुषो निशम्य
ज्ञात्वा बलाधिकममुं स च मल्लवीरः ।
श्रीशास्त्रिपादमुपगम्य जगाद नम्रः
भो भो भटोद्भट भवान् विजयी जितोऽहम् ॥ ४० ॥

ततो मल्लयुद्धे पणभूतं विजयपारितोषिकप्रायं सुसज्जितं श्रीराजराजेन दीयमानं गजराजं नाग्रहीदयं त्यागवीरोऽग्रगण्यो गुणवतां श्रीपण्डितप्रवरः।

अथैतादृशस्य धीरवीरपुङ्गवस्य दिगन्तविश्रान्तकीर्तेरध्यापननैपुण्यं विद्वन्मुखात् श्रावं श्रावं सञ्जातश्रद्धातिशयाः समभ्यस्तशब्दशास्त्रा न्यायशास्त्रमध्येतुकामाः पूज्यपादा मदीयगुरवो भूणविद्यालये सुखमासीनस्य श्रीमत उमापतिपण्डितस्य चरणौ सादरमभिवन्द्य तदादेशेन यथावकाशं समुपाविशन्।

तत्र च तदानीं व्यधिकरणधर्मावच्छिन्नाभावस्य पाठः प्रारब्ध आसीत्। बहुशः कुशाग्रबुद्धयः पटवो बटवः श्रीगुरोः पुरस्ताद् बद्धासनाः पाठं शृण्वन्त आसन्।

सद्योऽध्यापितस्य व्यधिकरणधर्मावच्छिन्नाभावस्य च्छात्राणां यथार्थावबोधो जातो नवेति जिज्ञासया पृष्टाश्छात्राः प्रायो मौनमुद्रया जुगुप्सितमिव वाचो गोपयाञ्चक्रुः। तत एतेषां मध्ये यदि कोऽपि वक्तुं प्रभवेत् तर्हि ब्रवीत्विति कथित आदेशश्चेदहं कथयामीत्यभिधायाज्ञाञ्च समवाप्य सर्वं सुस्पष्टतया तदाशयं विवव्रुः श्रीमन्तो मम गुरुवराः। इत्येतन्निशम्य श्रीगुरोर्हृदि महान् हर्षोत्कर्षो जातः। ततः प्रभृति सर्वेषामन्तेवसतामेत एव श्रीगुरुवराणां हृदि प्राधान्येन स्थानमवापुः। गुरुवरा अपि अतिकर्कशं न्यायशास्त्रं तत्त्वतोऽधिगन्तुमुदयुञ्जत।

दिवौदनं, वा कृशरां नु रोटिकां निशासु नित्यं चणकं जलाप्लुतम्।
अदन्त एते पठनाय योगिनस्तपः परं चेरुरहो गतक्लमाः॥ ४१॥

सदा वपुर्धारणमात्रभोजना अधीतिबोधार्थवचःप्रयोजनाः।
निरस्तनिद्राक्षपिताक्षिमुद्रणाः सुरा इवालौकिकसर्वयोजनाः॥ ४२॥

अथैकदा तन्मयतां श्रयन्तः सरस्वतीस्नेहहृतान्तरङ्गाः।
चिन्तामणिं मन्त्रमिमे ददानामेकां स्त्रियं स्वप्नगतामपश्यन्॥ ४३॥

अशेषशास्त्रेष्वतुलप्रभावो भविष्यसि, त्वं जप मन्त्रमेनम् ।
इतीरयन्त्यन्तरधात् द्रुतं सा प्रबुध्य चैतेऽपि न तामदर्शन् ।। ४४ ।।

परेऽह्नि गोरक्षपुरं ( गोरखपुर ) गता इमे
कुतोऽपि हेतोर्गुरुपुत्रसंयुताः ।
अवापुरेकं दलमङ्कितं च्युतं
गुरोः सुतस्यानवधानतो भुवि ॥ ४५ ॥

तमेव पत्रस्थितमन्त्रमुत्तमं वपुःकरन्यासविधानभूषितम् ।
गुरुप्रहर्षं ददृशुर्महोदयाः सरस्वतीदत्तमिवाथ मेनिरे ॥ ४६ ॥

निवेद्य सर्वं तदवाप्तिकारणं समर्पितं तद् गुरुसूनवे दलम् ।
प्रसह्य मन्त्राङ्कितपत्रमार्पिपत् स मद्गुरुभ्यः समधीत्य सत्यताम् ॥४७॥

निवृत्य गोरक्षपुरादिमे ततो बुधा अयोध्यां समुपागताः पुनः ।
प्रणम्य वृत्तं गुरवे न्यवेदयद् स चापि तुष्टः समुपादिशद् विधिम् ॥४८॥

अथातिविश्वस्तहृदो यथाविधि समारभन्तास्य जपं निरन्तरम् ।
न मन्त्र एषोऽस्ति सरस्वती स्वयं समागता मामिति निश्चयं दधुः ॥४९॥

स्वयं यदेतेऽनुभवप्रभावतोऽखिलेषु शास्त्रेष्वपि विज्ञतां गताः ।
गुरूँस्तदेतद् ध्रुवमाश्रिता स्वतः सरस्वतीयं कृतमन्त्रविग्रहा ॥ ५० ॥

श्रीयुक्ता भुवि विश्रुताश्च सुकुला रामेश्वराख्या बुधाः
श्रीलश्रीबुधपुङ्गवाश्च सुकुलाश्चण्डीप्रसादाभिधाः ।
रामाचार्यमहोदयाः सुमनसः श्रीरुद्रदत्तास्तथाऽ-
योध्यायां भुवनाभिनन्दितपदाभेते सहाध्यायिनः ॥ ५१ ॥

सततशास्त्राध्ययननिरतैरेभिः सहाध्यायिभिः सह मिथः पाठं पर्यालोचमानाः श्रीगुरुवरा न्यायदर्शनं पञ्चषाणि तत्वतोऽध्यगीषत ।

दीव्यद्द्रव्यकथाश्रितो गुणपयाः कर्मोत्तरङ्गाकुलः
सामान्यं सविशेषमेव च तटे सत्सिन्धुसम्बन्धभृत् ।

सन्माधुर्यसहान्तगाधलघुताऽभावानभावान् दधद्
तूर्णं यैरधिरुह्य बुद्धितरणिं तीर्णः प्रमाणार्णवः ॥ ५२ ॥

अथानन्तरं न्यायव्याकरणपारावारपारीणा विदितदर्शनान्तरमूलतत्त्वा अपि गुरुवर्य्या विश्वविख्यातां विद्यापीठं वाराणसीं विज्ञाय तत्र जग्मुः ।

अयोध्यागमनानन्तरं काशीगमने हेतुरुत्प्रेक्ष्यते—

पुराऽयोध्यां गत्वा हरिपुरमधीत्यागमकला-
स्ततो याताः काशीं हरपुरमिमे यद् गुरुवराः ।
हरित्वाभिव्यक्तिं क्रमत इह तद्धेतुमुभयो-
र्हरत्वाभिव्यक्तिं स्फुटमपि नु मन्ये ध्रुवमहम् ॥ ५३ ॥

गङ्गां वर्णयति द्वाभ्याम्—

माद्यद्धूर्जटिधूतमूर्द्धशिखरभ्राम्यज्जटामण्डली-
भ्रम्यभ्यासबलाच्चकास्ति न किमावर्त्तक्रियाद्यावधि ? ।
यस्याः शम्भुजटाजुषः समुदितो यत्ताण्डवव्याहते-
र्मन्ये तुङ्गतरङ्गनर्तनकला नाद्याप्यहो शाम्यति ॥ ५४ ॥

तन्नीरे ब्रुडतां तटे निवसतां स्नातां पयःपायिनां
संसारार्णवतारणाय तरणीव्याजेन जागर्ति या ।
यान्तस्तीर्थमयित्वबोधनपरैस्तीर्थैरनेकैः श्रिता
सा गङ्गाऽखिलपावनी विजयते वाराणसीवासिनी ॥ ५५ ॥

काशीं वर्णयति—

या साक्षात्सुरभारतीनिवसतिर्गङ्गाप्रवाहोज्ज्वला
यस्यां हाटकमन्दिरे निवसता श्रीविश्वनाथेन वा ।
कैलासाचलवासवैभवसुखं स्वप्नेऽपि न स्मर्यते
सा सद्धर्मपुरी महेशनगरी काशीपुरी राजते ॥ ५६ ॥

यस्यां घूर्णति कालभैरवमहादण्डो यमं दण्डयन्
द्रारिद्र्यं दलयन्त्यसौ विजयते माताऽन्नपूर्णेश्वरी ।

यस्यां सङ्कटमोचनः पवनजो द्राक् सङ्कटं मोचयन्
सा सद्धर्मपुरी महेशनगरी काशीपुरी राजते ॥ ५७ ॥

ढुण्ढिश्चापि गणाधिपो जनिभृतां विघ्नान्समुन्मूलयन्
कल्याणं कलयन् विभाति सततं सौख्यञ्च सम्पादयन् ।
मालिन्यं मणिकर्णिकाऽपनयति क्षोदाम्बुसंस्पर्शनात्
सा सद्धर्मपुरी महेशनग‍री काशीपुरी राजते ॥ ५८ ॥

आसीनाः प्रतिभान्ति यत्र विदुषां साम्राज्यसिंहासने
श्रीमन्तोऽर्चितपादुकाः शिवकुमाराख्या महाशास्त्रिणः ।
यद्वैदुष्यकलालवस्य न मनाक् स्पृष्टञ्च वर्त्माभवत्
केनाप्यागामिना दिगन्तजयिना मेधाविना कर्हिचित् ॥ ५९ ॥

श्रीदामोदरशास्त्रिणोऽप्रतिभटा गङ्गाधराः शास्त्रिणः
भूत्युद्भूतिभुवो विभूतिनिलयाः श्रीरामकृष्णाभिधाः ।
दैवज्ञाश्च सुधाकरा यदुदरे प्रत्नानि रत्नान्यहो
सा सद्धर्मपुरी महेशनगरी काशीपुरी राजते ॥ ६० ॥

अद्वैतप्रतिभावधीरितगुरुप्रज्ञाः सुविज्ञोत्तमाः
श्रीमद्विश्रुतराममिश्रचरणाः प्राणा गिरोऽभ्यर्हिताः ।
बाढं यत्र विबोधयन्ति विबुधान् अध्यापनाध्वाग्रगाः
सा सद्धर्मपुरी महेशनगरी काशीपुरी राजते ॥ ६१ ॥

यस्यालयस्य सुषमामसमां विलोक्य
किं पाकशासनपुरं न तथाऽभ्यधायि ।
श्रीराममिश्रविबुधेशनिकेतनं तद्
याता मलीमसदुकूलसमावृताङ्गाः ॥ ६२ ॥

यत्रालयेऽतिविबुधा विविधा विबोध्या
बद्धादरा गहनशास्त्रवचोविमुग्धाः ।

हा तत्र शास्त्रिपदपङ्कजदर्शनाय
द्वारान्तरं प्रविशतो रुरुधुः क्रुधा ते ॥ ६३ ॥

निर्भीकतामधिगतान् गुरुवर्यपादान्
निर्वर्ण्य शास्त्रिचरणैर्वद किंस्विदङ्ग ।
अन्विष्यसीति कथितेऽधिजिगांस्यतेऽत्रै-
ष्वेतद्वदत्सु पुनरूचुरिमान् सुधीशाः ॥ ६४ ॥

शिष्यप्रधानमिह यो मम सत्यदेव-
स्तस्माद् वटो ! पिपठिषानुगुणं पठ त्वम् ।
एतन्निशम्य ययुरन्तिकदेशमस्य
श्रीसत्यदेवसुधियोऽध्ययनाय तूर्णम् ॥ ६५ ॥

शक्तिः पदार्थ इह किं पृथगस्ति नो वा
मुक्तावलीयविषयानिति पाठयन्तम् ।
तं तर्ककर्कशधिया परितः परास्य
पान्थाधिवासमगमन् गुरवो मदीयाः ॥ ६६ ॥

श्रुत्वा च शास्त्रिचरणः सत्यदेवमाहूय पृष्टवान्—

कस्कस्त्वया सह समूर्जितवाग्विलासो
वादी वद क्व विषये कृतवान् विचारम् ।
यद्भाषणश्रवणतो मम चित्तवृत्ति-
श्चित्रीयते मृगयते क्व गतः स वाग्मी ॥ ६७ ॥

श्रीसत्यदेव आह—

कश्चिन्मलोल्वणदुकूलसमावृताङ्ग-
श्छात्रौघशिक्षणसमीक्षणदत्तचित्तः ।
सम्यक् समाप्य विरतं वटुशिक्षणान्मां
मुक्तावलीस्थविषये कृतवान् वितर्कम् ॥ ६८ ॥

वाग्विज्ञता सहृदयत्वमुदारभावो
वैदुष्यमप्रतिसमं सममत्र सन्ति ।
सर्वे गुणा अवगुणो मद्दते न कश्चित्
मन्ये तथाविधदुकूलमिदं न्यगादीत् ॥ ६९ ॥

यच्छेमुषीशतमुखीप्रसरप्रभावात्
मूकीकृतोऽहमपि नो वितथं ब्रवीमि ।
इत्थं गुरुप्रणुदितो लुलितान्तरालः
श्रीसत्यदेवसुमनाः प्रशशंस सर्वम् ॥ ७० ॥

गच्छ द्रुतं द्रुतगतिद्रुतमानय त्वं
तं तद्दुकूलविहितं नररत्नराजम् ।
इत्थं प्रसन्नहृदयैर्गुरुभिः स धीमान्
आज्ञापितो लघुगतिस्त्वरितं चचाल ॥ ७१ ॥

शीघ्रं स मद्गुरुनिवासमुपेत्य धीमान्
अभ्यर्थ्य भो व्रजत शास्त्रिण आह्वयन्ति ।
इत्थं शशंस तदनु प्रतिपन्नधैर्यो
रात्रौ न याम इति मद्गुरवोऽभ्यधुस्तम् ॥ ७२ ॥

इत्थं तदा गुरुगभीरवचो निशम्य
गत्वा निवेद्य स च शास्त्रिपदाब्जमूले ।
प्राप्तः पुनश्च गुरुशास्त्रिपदातिदिष्टो
गत्वाऽपि नो सफलतां समवाप हन्त ॥ ७३ ॥

मन्ये यदा पुनरगच्छदलं बुधोऽसा-
वह्वाय यद् द्रुतमयुस्सह तेन मान्याः ।
शक्तित्रयक्रमजुषो गमनत्रयाङ्ग-
पूजाविधीन् समभिगम्य कृतप्रसादाः ॥ ७४ ॥

पादाम्बुजं स्वशिरसा समिलिन्दयन्तः
श्रीशास्त्रिणा पठसि किं क्व तथाऽसि पृष्टाः ।

वेदान्तमित्यभिदधुः श्रितनम्रभावाः
नाद्यावधि स्थितिरलम्भि मयेत्यवोचन् ॥ ७५ ॥

श्रुत्वैव शास्त्रिचरणैर्गुरुभिः समुक्तं
रामानुजस्य किल कूट इति प्रसिद्धे ।
प्रादायि भव्यभवनेऽनुमतिर्वसत्यै
पूज्याश्च तन्निवसनाय लघु प्रयाताः ॥ ७६ ॥

तत्रार्चकैः कतिपयैः कलितान्तराले
स्मार्तानुगान् वसतये समुपागतांस्ते ।
एनान् निरीक्ष्य कृतधर्मविलोपशङ्काः
संचुक्रुधुर्ननननेत्यशनैरवोचन् ॥ ७७ ॥

एतन्निशम्य गुरुरोषकषायनेत्राः
श्रीशास्त्रिणो ददुरथोत्तमवासमेभ्यः ।
श्रीरामचन्द्रवरमन्दिरमध्यभागे
मान्यापमानजनिपापविलोपनाय ॥ ७८ ॥

एकैव सा प्रकृतिरस्त्यनयोर्भिदा च
सा प्रत्ययादिति वितर्कयितुं किलैते ।
सद्वासमादिशत किं हरिमन्दिरान्ते
श्रीमद्गुरुप्रतिभयोल्लसदन्तरङ्गाः ॥ ७९ ॥

श्रीमन्तः सुरभारतीभगवतीभाग्योदया विश्रुताः
श्रीवामाचरणाः प्रमाणवसुधासाम्राज्यसंराजिताः ।
श्रीमल्लक्ष्मणशास्त्रिणो नरपतिप्रत्तं पदं बिभ्रतः
ख्याता दर्शनभास्कराश्च महतां जाताः सहाध्यायिनः ॥

एभिः पूर्वनिर्दिष्टनामधेयैः सुगृहीतनामधेयैः समं श्रीशास्त्रिमहोदयानां सविधे वेदान्तशास्त्रस्य श्रवणमननद्वाराऽनुभवपुष्टिमकार्षुः ।

वेदान्तामलकल्पपादपभुवं प्रज्ञागुणैरर्पित–
मद्वैतं फलमार्यदर्शितपदं तापत्रयोन्मूलनम् ।

स्वादं स्वादमपास्तकल्कक्कुहकं विज्ञानसारोल्वणं
ब्रह्मानन्दसमुद्रसान्द्रलहरीलीलावगाहं ययुः ॥ ८१ ॥

एवं कियत्कालं वाराणस्यामुषित्वा अशेषशास्त्राटवीसञ्चरणपञ्चाननानामविकल्पानल्पकल्पनैकधाम्नामखण्डब्रह्माण्डमण्डलपण्डितप्रकाण्डानां तत्र भवतां भवतां साक्षाच्छिवावताराणां महामहोपाध्यायपदभाजां श्रीशिवकुमारमिश्रशास्त्रिमहोदयानामप्यनल्पकल्पनापाटवमध्यापनकलाकौशलञ्च वेदं वेदं सर्वाङ्गीणपाण्डित्यसाम्राज्यशासनसामर्थ्यमवापुः ।

इति अध्ययनकाण्डम्



## अथ विजयकाण्डम्

अथ द्वितीयावस्थासमुचितं कर्म सम्पादयेति नीतिसम्मतोपदेशेन पित्रादेशेन मन्दान्दोलितारविन्देन सान्ध्येनेव गन्धवहेन संकुचत्सरोजकलिकान्तरालविलीनो मधुव्रतः कमलकोशादिव शास्त्राद् वियोजिता इममुपदेशमादेशं शिरसि संधार्य सर्वप्रथमयात्रया श्रीमन्महाराजाधिराजश्रीरघुराजसिंहपालितां रीवां राजधानीमगच्छन् ।

तत्र च पञ्चषदिवसोत्तरभावी श्रीमन्महाराजकुमारस्य श्रीमद्वेङ्कटेशनारायणसिंहमहोदयस्य राज्याभिषेकसमारोह आसीत् । तत्र कथनोपकथनक्रमेण जाते शास्त्रविचारे प्रखरपाण्डित्यप्रभावेण सर्वे तत्रस्था विदग्धा एभिर्मूकीकृताः । तदनु पञ्चषदिनानि स्थीयतां राज्याभिषेकसमये शास्त्रविचारे परस्परं विवदमानानामस्माकं भवद्भिरेव प्रमाणपुरुषैर्भूयताम् इति तैः सभ्यैरभ्यर्थिता न्यवात्सुः ।

ततः कालक्रमेणागते तदवसरे सर्वैर्विद्वद्भिः शास्त्रविचारं कुर्वद्भिरेत एव माध्यस्थ्यपदेऽभिषिक्ताः । एतेषामलौकिकशास्त्रीयचमत्कृतिचाकचिक्यचकितेन राज्याभिषेकमहोत्सवावसाने श्रीमद्वेङ्कटेशनारायणवर्मणा महाराजाधिराजेन सर्वप्रथमं पुरस्कारेण सभाजिता मद्गुरवः ।

ततस्ततः प्राप्तप्रतिष्ठाः विद्वद्वृन्दाभिनन्द्यामन्दयशःसन्दोह-मन्दाकिनीविमलधारया धरातलं धवलयन्तो भ्रमणं समारेभिरे। भ्रमणप्रसङ्गेन पाटलिपुत्रमुपजग्मुः।

## ( पाटलिपुत्रवर्णनम् )

जयत्यदः पाटलिपुत्रपत्तनं परस्सहस्रक्षितिपालपालितम्।
परीक्षिताः पाणिनिवर्षपिङ्गलाः स्वयं हि गोविन्दगुरुस्त्विहाजनि॥ १॥

सुखेन नन्दा नव भूभुजोऽभवन् बभूव चाणक्य इहैव नीतिभूः।
अशोकचन्द्रौ नृपवृन्दवन्दिताविहान्वशिष्टामखिलं धरातलम्॥ २॥

अगम्यकूपोऽस्य निधिस्वरूपः स्थूलोन्नतं गोलगृहश्च यूपः।
पूर्वाऽपरं द्वारमथाधिगङ्गं दुर्गश्च राज्ञां प्रथयन्ति धानीम्॥ ३॥

यच्चाद्यावधि राजधान्यभिधया ख्यातं जगन्मण्डले
देवी रक्षति यद् द्विधाकृतवपुर्व्यापारकेन्द्रश्च यत्।
गङ्गा यन्न जहाति जातु परिखाकारोत्तरे रक्षति
जह्ना दक्षिणतश्च प्रावृषि पयःपूरैः परं प्लावितम्॥ ४॥

यस्मिन् विलोक्य विपणेरतुलां समृद्धि
तूर्णं विलज्य धनदोऽव्रजदुत्तराशाम्।
प्रालेयपावनधराधरसानुभागे
शङ्के तपस्यति यतो न निवर्त्तितोऽद्य॥ ५॥

चन्द्रश्चकास्ति किल यत्र हि राशिरूप-
श्चित्रं किमस्तु रजनी न जहाति वासम्।
निर्माणशिल्पनयनागरचक्रवर्त्ति-
श्रीविश्वकर्मतपसामुदयस्वरूपम्॥ ६॥

सङ्ख्यातिशायिजनताव्यवहारघोषो
नक्तंदिवं विरतिमेति न जातु किञ्चित्।

लोकप्रपञ्चरचनानिपुणस्य धातु-
र्निदर्श एष रचनोरुचमत्कृतेः किम् ॥ ७ ॥

मनःसुखीराय उदारचेताः श्रेष्ठीश्वरः पाटलिपुत्रवासी ।
विद्यालयं स्थापितवानिहैव गीर्वाणवाणीपरिरक्षणाय ॥ ८ ॥

अशेषशास्त्रार्णवपारदृश्वा विद्यालये श्रीलसुरेशमिश्रः ।
अध्यापकाद्वैतपदेऽभिषिक्तश्छात्राश्च वृत्त्या बहवो नियुक्ताः ॥९॥

चतुष्कदेशस्य समीपभागे विद्यालयस्याप्युपकण्ठदेशे ।
विराजते पाटलिपुत्रमध्ये पान्थाधिवासाय सुधर्मशाला ॥ १० ॥

तस्यां कदाचिद् भ्रमणक्रमेण समागताः श्रीगुरवो महान्तः ।
नक्तं न्यवात्सुः पथिकायमानाः प्रच्छन्नपाण्डित्यमहाप्रभावाः ॥ ११ ॥

प्रभातकाले निकटस्थितस्य विहारिदासाभिधभूसुरस्य ।
यज्ञोपवीतोत्सवसंसदासीत् आमन्त्रिता यत्र विपश्चितोऽगुः ॥ १२ ॥

समागतानां सुधियां प्रधानं सुरेशमिश्रो वटुसेविताङ्घ्रिः ।
महारथी पण्डितमण्डलीषु रेजे यथा दन्तिदलेषु सिंहः ॥ १३ ॥

न तेन वक्तुं प्रबभूव कश्चित् गोष्ठ्यां यदा शास्त्रविचारवादे ।
श्रुतं तदा तत्र जगाद कश्चित् पान्थाधिवासेऽस्ति सुधीश एकः ॥ १४ ॥

अभ्यर्थिताः सभ्यगणैस्ततस्ते सभां गता व्यक्तगभीरभावाः ।
निर्वर्ण्य निश्शङ्कहृदस्तदानीमेनानशेषां मुदमावितेनुः ॥ १५ ॥

सुरेशमिश्रेण विधीयमानं प्रश्नं समाकर्ण्य रयेण जाताः ।
पयोदनिर्घोषविकर्णनोत्कसाचीकृतग्रीवमृगेन्द्रकल्पाः ॥ १६ ॥

प्रातिपदिकार्थसूत्रे व्याख्यानं प्रस्तुतं विदग्धानाम् ।
नानाक्षेपसमाहितिपुरस्सरं विस्मयस्थानम् ॥ १७ ॥

बहोः कालात्परम्—

श्रीमन्मदीयगुरुभिर्विहितस्य पश्चात् पक्षस्य धीरधिषणामदमर्दनस्य ।
श्रीमत्सुरेशविबुधोद्भवसाधुवादः प्रादुर्बभूव सह विस्मयपूर्णनेत्रैः ॥१८॥

ततस्तदानीं गुरुहर्षसङ्कुला सभा सुधीभिर्जयघोषपूरिता ।
अमंसतैनानखिलास्तदा बुधा अशेषशास्त्रावनिचक्रवर्तिनः ॥ १९ ॥

मनःसुखीरायमहोदयेन द्रुतं तदानीं गुरवोऽनुरुद्धाः ।
मदीयविद्यालय आर्यवर्या अध्यापयन्तु प्रतिपन्नधैर्य्याः ॥ २० ॥

छेद्या न वृत्तिः सुधियाऽपि केन कस्यापि यस्मान्मरणप्रभा सा ।
अतोऽहमीहे न तथा विधातुं न वा विधेयं भवताऽपि तद्वत् ॥ २१ ॥

इतीरितं सद्गुरुभिर्निशम्य मनःसुखी हर्षविमुग्धचेताः ।
पदं स्वतन्त्रं भवतां समीहे विद्यालयोऽलङ्करणीय एषः ॥ २२ ॥

तथाऽपि पूज्यपादाः श्रीगुरवोऽमुमवैधं विधिं मन्यमानाः स्वगृहं प्रतस्थिरे ।

ततः कियत्कालमसावुषित्वा सुधीः सुरेशः स्वगृहं जगाम ।
वृत्तेः स्वदेशे यदि सम्भवः स्याद् वृथा तदन्वेषणमन्यदेशे ॥ २३ ॥

पूर्वञ्च नैते जगृहुः पदं तद् गतैषणाः स्वं पुरमेव जग्मुः ।
अभ्यर्थितास्तेन ततः प्रकामं कथं कथञ्चित्पुनरीयुरत्र ॥ २४ ॥

ततः प्रसन्ना गुरवो महान्तो विद्यालयं संविदधुर्यथार्थम् ।
अदृष्टसामर्थ्यमहो महीयः कृपालुताथा अथवा प्रभावः ॥ २५ ॥

यदा स विद्वान् गतवान् स्वदेशं ततः परं नागतवान् किमेतत् ।
पदं प्रधानं परितुष्य सद्भ्यो वितीर्य नूनं स गतो महात्मा ॥ २६ ॥

अथ प्रधानाध्यापकपदमलंकुर्वाणाः श्रीमन्तो गुरुवराः विविध-विद्यावाप्तिकामान् नानादेशसमागतान् छात्रसङ्घान् प्रकाममध्यापयन्त-स्तेषां हृदि परमानन्दसन्दोहं जनयन्तः सुखेन न्यवात्सुः ।

विश्वं कर्मप्रधानं यजनमिह तथा कर्मणाञ्च प्रधानं
तत्रापूर्वो महान् वा भवति यदनुगाभीष्टसंसिद्धिरिद्धा ।
युक्त्या सूक्त्या समेषामपि च सुमनसां सत्क्रियां दर्शयन्तीं
मीमांसां स्वानुमत्या समधिकमपि सम्मानयाञ्चक्रिरे ते ॥ २७ ॥

कर्तृत्वं प्रकृतेः परस्य कलयत् पुंसश्च निर्लेपतां
सांख्याख्यं शरयुग्मसंख्यकजगत्तत्त्वाभिसंख्यानतः ।
यद्विष्णोः कपिलावतारमहसा शास्त्रं समुद्भासितं
वेदं वेदमिमे श्रमात् प्रतिभया जाताः स्वयं ज्ञानिनः ॥ २८ ॥

एकान्तचित्तप्रणिधानयोगाद् यावज्जगद् ब्रह्म गभीरतत्त्वम् ।
प्रकाशमानं पटु निर्दिशन्तं योगं मनोयोगबलेन दध्रुः ॥ २९ ॥

अलङ्कारसम्भारभासाप्रसारो रसागारचेतश्चमत्कारकारः ।
सुधासारकासारसाहित्यसारः स्वयं साधु विद्यावतारैरधारि ॥ ३० ॥

ध्यात्वा श्रीगुरुवर्यपादयुगलं काव्यं पदं दुर्गमं
काणादीश्च गभीरतत्त्वगहनां ज्ञात्वाऽऽक्षपादीन्तथा ।
वेदान्तं श्रुतिसारभूतमखिलं साङ्ख्यञ्च योगं सुखं
मीमांसां गुरुभक्तिभावितहृदो विज्ञातवन्तो मुदा ॥ ३१ ॥

अनुपमगुणरत्नराशिभूतान् त्वरितमिमान् द्विजराजमोदहेतून् ।
अहमहमिकया समस्तविद्याः सरित इव प्रतिपेदिरे समुद्रम् ॥ ३२ ॥

अथैवं व्यतीते कियति काले—
सुकृतसञ्चयचारुफलोदयं गतवति त्रिदिवं तु मनस्सुखे ।
तदनुजः प्रबभूव तदास्पदे सुजनराममनिरञ्जननामकः ॥ ३३ ॥

दैन्यध्वान्तापसारप्रखरतरकराहर्पतिः शान्तिमूर्त्तिः
विद्वद्वृन्दप्रसर्पद्गुणगणसुमनःसौरभास्वादभृङ्गः ।
कारुण्याद्वैतमूर्त्तिर्विभवमदजुषामुत्तराशाधिराजः
कीर्त्त्या धर्मप्रसूत्या धवलितभुवनो वैश्यवंशावतंसः ॥ ३४ ॥

यत्सद्धर्मविकर्त्तनांशुनिकरैः सम्पूरिते भूतले
पापान्धन्तमसं नभोनिवसतिं चक्रे निरस्यावनिम् ।
नीरन्ध्रेण तमोभरेण पिहितं लब्धावकाशेन यत्
सूर्याचन्द्रमहोज्ज्वलं त्यजति खं नाद्याप्यहो नीलताम् ॥ ३५ ॥

मन्येऽसौ तमसो भरोऽतिविमनाः स्वावासभूमिं धरा-
मेतत्कीर्त्तिकलापभासुरतलां हित्वाऽन्तरिक्षं ययौ ।
तत्राप्युद्विजितस्तदंशवपुषा चन्द्रादिनायं यतः
पर्वादौ ग्रसतीन्दुमुष्णकिरणं भूत्वा तमः प्रायशः ॥ ३६ ॥

एतत्कीर्त्तितुलामभीप्सुरनिशं बालेन्दुरीशं श्रितो
बालत्वोचितचापलं स च विधुं ज्ञात्वोत्तमाङ्गे दधौ ।
क्वास्तेऽयं खलगः कलङ्कमलिनः क्षीणस्तमोऽभ्यर्दितः
श्रीमद्रामनिरञ्जनोरुयशसां राशिः क्व नामातुलः ॥ ३७ ॥

श्रेष्ठीश्वरः श्रेष्ठिकुलावतंसो विद्यालयो मास्त्विति निश्चितात्मा ।
विद्यालयं पाटलिपुत्रसंस्थं स्वीयेन नाम्ना प्रथितं चकार ॥ ३८ ॥

युग्मकम्—

न्यग्भूतजिष्णुभवने भवने द्विभूमे विद्युत्प्रदीपकुलसङ्कुलितान्तराले ।
कुड्याहितैः प्रचुरचारुचरित्रचित्रैः सञ्चित्रिते च तडिदाशुगवीज्यमाने ॥३९॥

छात्रान् परीतहृदयान् विनयेन शान्तान्
नम्रासनान् गुरुवराभिहितैकतानान् ।
उच्चासने स्फटिकशुभ्रदुकूलकान्ते
बद्धासना अवहिता अवबोधयन्ति ॥ ४० ॥

का नाम पाठनकलाऽभिनवा गुरूणां
मुह्यन्ति यत्र विबुधा अबुधाश्च सर्वे ।
मन्ये यदप्रतिभटां प्रतिभां विलोक्य
वाचस्पतिः पतिमहो श्रयते प्रभायाः ॥ ४१ ॥

दुर्ज्ञेयबोधविधुरा अपि बोध्यवर्गा
विज्ञानिनो लघु भवन्ति पुरो गुरूणाम् ।
तेजस्तदस्ति तरणेर्ननु सम्मुखीना
यस्योज्ज्वलन्ति दृषदोऽपि हि सूर्यकान्ताः ॥ ४२ ॥

मध्ये मध्ये भवति महता मोदनार्थं वटूना
मीषद्धासः समुचिततमः शिक्षणाध्वानुकूलः।
सर्वान् स्निग्धैरमृतमधुरैर्दृष्टिदानैर्नितान्तं
सिञ्चन्तस्ते सकलविषयान् पाठयन्तो जयन्ति ॥ ४३ ॥

अन्तरेऽपि यदि पृच्छति कश्चित् पाठ्यमानविषयं वटुरेनाम्।
तं पुनः सरलया परिपाट्या बोधयन्ति मधुमुग्धवचोभिः ॥ ४४ ॥

श्रमस्तथाऽश्रान्त इहावलोक्यते निरन्तरं योऽखिलशास्त्रसंश्रयी।
यथा यथा शास्त्रकलाऽभिवर्द्धते श्रमोऽपि किं नाम तथा तथाऽन्वहम् ॥४५॥

अस्ति द्वेषो दुरितविषये सत्कृतौ पक्षपातः
क्रोधोऽनीतौ जगदुपकृतौ कामना श्रीगुरूणाम्।
सङ्गः सत्ये विरतिरनृतात् स्वाधिपत्यश्च शास्त्रे
चेतोऽध्यासस्तु निरतिशयः सच्चिदानन्दरूपे ॥ ४६ ॥

अथ १७-११-१९१५ ई० वर्षे मोदफलपुरे विहारोत्कलसंस्कृत-समितिः सर्वप्रथमं संवृत्ता। तत्र श्रीमान् महाराजाधिराजो दरभङ्गा-धीश्वरः सभापतित्वेन सर्वैरभ्यर्चितः। अन्ये च बहवो महामहोपाध्या-यास्तथा परे विद्वांसः सदस्यत्वेन निर्वाचिताः। तेषु मद्गुरूणामपि प्रधानपदमासीत्। तत्र कार्यान्तरनिश्चयोत्तरम्—अग्रिमाधिवेशने वेदान्त-विषये यस्य किल लेखः सर्वोत्कृष्टः स्यात् स एव सर्वोच्चासनासीनः सर्वप्रथमपारितोषिकेण सम्पूजितः सम्मानितश्च स्यादिति सूचना सर्व-सम्मत्या समितेर्निःसृता।

अथ १९१६ तमे ई० वर्षे विहारोत्कलसंस्कृतसमितेः 'मुजफ्फरपुरे' द्वितीयाधिवेशनं सञ्जातम्।

विद्वद्वृन्दसरोजवासरमणिर्नीतिच्छटाकोविदो
भोजस्त्यागकलोपबृंहितगुणग्राहित्वशक्तौ भुवि।
ख्यातः श्रीलरमेश्वरः सहृदयः श्रीद्वारवङ्गेश्वरो
यस्यां सभ्यतमः सभापतिपदं व्याभूषयद् भूपतिः ॥ ४७ ॥

धर्मसिंहासनासीनं श्रीमत्सिंहरमेश्वरम् ।
सिंहसंहननं दृष्ट्वा गोत्रभिद् वसुधां जहौ ॥ ४८ ॥

शिक्षाध्यक्षपदे प्रतिष्ठिततमाः प्रान्ते विहारोत्कले
जेनिङ्गेत्यभिधेयगेयचरिता आङ्ग्लेषु धन्यास्तथा ।

रञ्जेमिश्रबुधाश्च रञ्जितसभाः स्वीयैः प्रशस्यैर्गुणैः
बक्सी श्रीलमुकुन्दझा अपि महोपाधिं श्रिता रेजिरे ॥ ४९ ॥

यत्सारस्वतवैभवोर्जितवचोवाचंयमा वर्वराः
व्याधुन्वन्ति शिरः सभासु सुधियो यस्याभिधानश्रुतेः ।

व्याकृत्याकृतिपद्धतिश्च कृतिभिर्नास्पर्शि यत्नादपि
श्रीमाँल्लालजिझा बुधो विजयते शब्दज्ञपञ्चाननः ॥ ५० ॥

कल्पनापहृतवादजल्पनास्तर्ककुण्ठधिषणा विचक्षणाः ।
यस्य संसदि विदन्ति पाटवं भ्राजते स्म स उमेशतार्किकः॥ ५१ ॥

श्रीमाँश्चित्रधरो विचित्रधिषणो मीमांसकाहस्करः
श्रीविज्ञानकलानिधानसुमना एम्० ए० पदालंकृतः ।

काशीनाथमहोदयोऽमितदयः प्रोद्दामधीरौत्कलः
का वार्ताऽन्यजनस्य यस्य सविधे जीवोऽप्यजीवोऽभवत् ॥५२॥

खुद्दीझा बुधपुञ्जकुञ्जरघटाकण्ठीरवः श्रीयुतः
श्रीमान् श्रीरघुनन्दनो बुधवरः साहित्यवारां निधिः ।

झोपाह्वः परमेश्वरः सुमनसां श्रेष्ठो महीमण्डनं
यस्याः सभ्यतया महामहवता सूपाधिनाऽलंकृताः ॥ ५३ ॥

ज्योतिर्विदां दिनमणिर्मुरलीधरश्च शब्दार्णवो विजयते रविनाथझाख्यः ।
एशोसियेशनसभाऽखिलकार्यकर्त्ता बी० ए० पदार्चितबुधो बलदेवमिश्रः ॥५४॥

श्रीमाँस्तार्किकपुञ्जकुञ्जरघटाप्लुत्कण्ठकण्ठीरवः
मिश्रो विद्वरबालकृष्णविबुधो विद्यानवद्यान्तरः ।

मीमांसार्कजटेश्वरो विजयते प्रेक्षावतामग्रणी-
रायुर्वेदविशारदश्च मगुनीमिश्रो भिषग्भास्करः ॥ ५५ ॥

पाण्डेयो हरिशङ्करो मतिमतामग्रेसरो दीप्तिमान्
रेजे यत्र निरीक्षकः सुरगिरो विद्यालयानामहो ।

शब्दव्योमतलामलारुणरुचिर्यस्यां किशोरी बुधः
श्रीमान् शब्दसमुद्रमन्दरगिरिः श्रीदेवदत्तो गुरुः ॥ ५६ ॥

यस्यां स्म भूषयति सभ्यसभावतंसः सभ्यास्पदं गुरुमहोदयशिष्यहंसः ।
साहित्यसाङ्ख्यमकरालयमन्दराद्रिर्नन्दप्रसादसुमनाः सुमनोऽभिनन्द्यः ॥५७॥

श्रीमट्ठाकुरमुक्तिनाथसुमना विद्वत्सभाभूषणं
मिश्रो यत्र सदाशिवः शिवसमः सर्वज्ञतासंश्रयः ।

अन्ये चापि दिगन्तगुम्फितगुणाः सभ्याः समभ्यागमन्
येषां पूर्णतया पृथक्त्वकलना कल्पान्तसम्भाविनी ॥ ५८ ॥

भूयांसो बुधपुङ्गवा विजयिनो विद्यानवद्यान्तरा
नानादेशसमागताः सुरगिराशृङ्गारहारायिताः ।

यत्रैकत्र बभूवुरूर्ज्जितवचश्चेतश्चमत्कारिणः
सा प्रान्तीयमहासभा समुदिता स्वर्गेऽपि या दुर्लभा ॥ ५९ ॥

यस्यां सदस्याश्च महामहोपाध्याया असङ्ख्या निगमागमाढ्याः ।
गुरुप्रभावाः प्रथितानुभावाः कथं न साऽनिर्वचनीयरूपा ॥ ६० ॥

श्रीमद्रमेश्वरनरेश्वरभूषितायाः सभ्येभ्यशासकबुधादिसमन्वितायाः ।
गीर्वाणवाक्प्रसरसम्भरितान्तरायाः नैवोज्ज्वलं भवतु किं वदनं सभायाः ॥६१॥

उच्चैः सिंहासनस्थः क्षितितलतिलको नायकः श्रीरमेशः
सभ्या यस्यामनन्ता हरिहरगुरवः शास्त्रसर्वस्वभूताः ।

धृत्वा रूपं प्रभूतं श्रयति रघुपतिः सभ्यतां श्रद्दधानो
नो भूता भाविनी वा पुनरपि भुवने भारतीया समेदृक् ॥ ६२ ॥

तत्र संसदि पूर्वनिर्धारितं लेखसौष्ठवप्रदर्शनं प्रस्तुतम्। तत्र प्राज्यानामाचार्यवर्य्यैर्लिखितानामखिलानां लेखानां शिरोभूषणतया श्रीमद्भिर्मद्गुरुवरैर्लिखित एव वेदान्तप्रबन्धाख्यो लेखः सर्वैः सहृदयैस्साधु स्वीकृतः।

स चायं लेखः स्रग्धरावृत्तबहुलः। अतीन्द्रियवस्तुविषयकविचारगहनदुर्ज्ञेयो वेदान्तः क्व! तत्रापि तद्गतसूक्ष्मातिसूक्ष्मतत्त्वप्रकाशनविषयको लेखः क्व? तत्रापि स्वातन्त्र्येण प्रयोज्यगद्यमयबहुलवचःप्रयोगेणापि दुर्वचोऽसौ क्व! तस्य च लघुगुरुवर्णसङ्ख्याविचारनियमितवृत्तमयाल्पवचसा स्फुटं विवेचनं क्व! तत्रापि साधारणनियमानुगुणसुकरलघुरूपाऽनुष्टुबादिभिरपि दुष्करस्य स्रजेव लम्बमानेन छन्दोविशेषेण स्रग्धराभिधानेन विशेषनियमितरूपेण विस्पष्टशब्दैर्निर्भ्रान्तभावैः पूर्णतया प्रकाशनेन सौकर्यीकरणमित्यहो दुष्करं किं प्रतिभाजुषाम्।

सर्वोच्चलेखमखिलं प्रशशंसुरेके चान्ये तथा न सममंसत वावदूकाः।
वाग्विज्ञताविषयपूर्णपरीक्षणाय स्पर्द्धाधरीकृतधियस्सुधियो बभूवुः ॥६३॥

श्रीभारती प्रचुरपण्डितपुङ्गवाना-
मास्थाय रम्यरसनाफलकाग्रभागम्।
ख्यातिं निजां प्रथयितुं जगतीतले किं
शास्त्रार्थघोषणमजिज्ञपदाशु विज्ञैः ॥ ६४ ॥

वाग्विज्ञताविहितवामधियोऽप्यधीराः
धीराः स्वयं परिषदं परिकल्प्य तूर्णम्।
प्रातर्भवत्वखिलशास्त्रविचारगोष्ठी
प्रार्थ्यः सभापतिरिदं निरधारयँस्ते ॥ ६५ ॥

लेखेन किं सकलशक्तिपरीक्षणार्थ-
मन्योन्यमस्तु विदुषामिह शास्त्रवादः।
योऽस्मिन् बुधो विजयतां लभतां प्रधानं
सत्पारितोषिकमिदं जगदुस्तदानीम् ॥ ६६ ॥

प्रातः समस्य बहवः सुधियोऽभ्युपेत्य
श्रीमत्सभापतिमहोदयपादमूलम् ।
एषा सभा नरपतेऽश्रुतदृष्टपूर्वा
योऽस्यां जयेत् स भविता भुवनाभिनन्द्यः ॥ ६७ ॥

तस्मान्नरोत्तम ! बुधेष्वखिलेषु यः स्यात्
सर्वेषु शास्त्रविषयेष्वतिवावदूकः ।
सर्वानुमोदिततमां लभतां सपर्या-
मित्यर्थनां विदधिरे विबुधा विमुग्धाः ॥ ६८ ॥

सर्वान्तरङ्गमवगम्य सभाधिनाथः
सानन्दमुत्सुकतमानवलोक्य सभ्यान् ।
स्वीयां ददावनुमतिं निपुणं विचिन्त्य
मन्दस्मितैरमृतबिन्दुमयैः सुसिञ्चन् ॥ ६९ ॥

लेखानादरिणी श्रुतिस्मृतिसदाचारार्चितैरञ्चिता
देशोद्धारकुलोपकारकुशलाध्यक्षा क्व विद्वत्सभा ।
क्वास्तां गोत्रभिदीश्वरा बत सुराचार्योपदेशानुगा
लेखौघादरिणी सुरालयसभा गुप्तं द्वयोर्नान्तरम् ॥ ७० ॥

ततो मध्यन्दिने विद्वद्वृन्दैः सानन्दं समारब्धायां सभायां प्रस्तूयतां नाम शास्त्रविचारः क्रमप्राप्तावसरैः सभ्यसभासभाजितभारतीभव्यभावुकैस्तत्रभवद्भिर्भवद्भिरिति सभापतिनाऽदिष्टम् ।

ततः—

सभापतेः सम्मतिमेत्य सत्वरं ततः पुरस्कृत्य च लालजि बुधम् ।
गुरून् समुद्दिश्य समुत्थितो महानपूर्वपक्षोऽपि च पूर्वपक्षकः ॥७१॥
श्रीमत्सभापतिनगेशनिदेशपूरप्रोत्तालवादतटिनी युगविज्ञकूला ।
तर्कोत्तरङ्गिततनुर्गुरुसिन्धुगन्त्री प्रश्नोत्तरस्यदवती तुमुलं व्यचालीत् ॥

ततः कियत्कालमपरेषु विद्वद्वरेषु विश्रम्य सभापतिमहोदयानुशासनमुखेन सा विचारतरङ्गिणी गुरुसागरमागता। तद्दर्शयति ।

शक्तिः समासे पृथगस्ति नो वा नैवेत्ययं पण्डितपुङ्गवस्य ।
अस्तीति पक्षोऽजनि मद्गुरूणां गाम्भीर्यगर्भः प्रसृतो विचारः ॥ ७३ ॥

प्रश्नोऽन्यतोऽन्वपरतोऽस्य समाहितिश्च
तर्कोपतर्कविधया प्रतिभानभङ्ग्या ।
एवं क्रमप्रसृतवादविमुग्धचेता
वैदुष्यमप्रतिहतं निपुणं विवेद ॥ ७४ ॥

ततः धीरधुरीणचक्रचूडामणिः श्रीमान् उमेशमिश्रमहोदयोऽनुभव-विशेषोपबृंहितं "सामान्यनिरुक्ति" विषयकं पूर्वपक्षमेनानभिलक्ष्य विहितवान् ।

विपक्षपक्षक्षयदक्षपक्षिणां विचक्षणानां क्षितिसूक्ष्मवीक्षिणाम् ।
गिरामवच्छेदकलक्षकक्षया विलक्षणानामपिपः क्षणात्सभा ॥ ७५ ॥

सभा कियत्कालमतीत्य जाह्नवीविचारधाराशतसङ्कुलाऽभवत् ।
सुधीश्वराः सभ्यतमाः सुखेन तां जगाहिरे साधुवचःपुरस्सरम् ॥ ७६ ॥

निगूढमानं गुरु वाचि विज्ञा विज्ञाय विज्ञापितवन्त एवम् ।
पदे प्रमाणेऽवसितो विमर्शो विरम्यतां शास्त्रविचार एषः ॥ ७७ ॥

श्रुत्वैतद् गुरुचरणा ऊचुः—

वेदान्तसाङ्ख्यप्रभृतीनि धीराः महान्ति शास्त्राण्यभिविश्रुतानि ।
मीमांसितुं तानि न वः समीहा विरम्यतां नाम विमर्श एषः ॥ ७८ ॥

किञ्चित्क्षणानन्तरमान्तरज्ञः, पतिः सभायाः परितो निरीक्ष्य ।
श्रुतिः श्रुतिं पूरयतु प्रमोदैः, भवन्मुखोत्थेति जगाद तज्ज्ञान् ॥ ७९ ॥

श्रुत्वात्यतिष्ठत्सदशाङ्गुलान्तम् अर्थेऽस्ति कोऽस्या इति तानपृच्छत् ।
तदीप्सितार्थं गुरवो न्यवेदयन्नितोऽपि भूपः प्रससाद भूयः ॥ ८० ॥

सारस्वतं प्रसृतधाम धराधिनाथो
धीरास्सधीशधरणीश्वरसार्वभौमम् ।

प्रौढं दिनेशमिव तान् समसंसतान्ये
भावानुगा भवति धीरिह मानवानाम् ॥ ८१ ॥

ततस्तु सर्वप्रथमं सभापतिः पटं द्विशालं जयपारितोषिकम् ।
ददौ गुरुभ्यः स्वकरेण संसदि प्रसह्य सभ्यैरनुमोदितोऽखिलैः ॥ ८२ ॥

समार्चि शक्तिद्वयमद्वितीयं द्विशालतस्तेन न वा तृतीया ।
कृपालुशक्तेरसमा क्षमाऽस्ते न पङ्क्तिभेदः परिशङ्कनीयः ॥ ८३ ॥

खुद्दीक्षापरमेश्वरादिसुधियां गोष्ठीस्थितानां नृणां
सानन्दं करतालिकोत्थनिनदैः सम्पूरिता सा सभा ।
संसत्साधुसभापतिः प्रमुदितः पूज्यप्रशंसावचः—
स्रग्जालोपचितोपहारविधिभिः प्रार्चीच्च शक्तित्रयम् ॥ ८४ ॥

मधुव्रतानन्दकरारविन्दमरन्दसन्दोहसुधाभिवर्षैः ।
आनन्दविस्मेरमुखारविन्दा व्यसर्जयन् सभ्यतमाः समज्याम् ॥८५॥

ततो मुजफ्फरपुरस्थसंस्कृतमहाविद्यालये प्रधानाध्यापकपदमलङ्कर्त्तुं तन्महाविद्यालयाध्यक्षैः सादरं बहुशोऽभ्यर्थिता अपि एतद्विद्यालयाध्यक्षाणां श्रेष्ठिश्रीरामनिरञ्जनदासमुरारकामहोदयानां प्रेमपाशस्य दृढं ग्रन्थिं शिथिलयितुं नाशकन् ॥

सशब्दषड्दर्शनमस्तपारं वगाह्य सप्ताम्बुधि सम्यगेते ।
वितेरुरश्रान्तहृदोऽपि नाऽहो निरञ्जनप्रेमपयोधिमेकम् ॥ ८६ ॥

कालान्तरे च—

मातुश्चैकसुतोपमः सुरगिरो वात्सल्यविश्रान्तिभू-
र्लोके मातृगिराऽऽदरेण विबुधो बच्चेति यो विश्रुतः ।
यो भूमीशरमेश्वरेण महितो गूढार्थतत्त्वोद्गमो
बच्चाझा बुधकेसरी विजयते तेनापि सम्मानिताः ॥ ८७ ॥

अथैवम् अस्मिन्नेव विद्यालये सानन्दं छात्रसन्दोहमध्यापयतां सततशास्त्रपरिशीलनलब्धविशुद्धावबोधसम्भूतकीर्तिकलापधवलितदिगन्तरालानां गुरुवराणां पटुतमपाठनपरिपाटीं नैकवारमाप्तमुखात् शुश्राव

श्रीमान् महामनाः पं० मदनमोहनमालवीयः काशीविश्वविद्यालयसंस्थापनसम्भूतविश्वविश्रुतयशोराशिभासुरभूसुराग्रेसरः केसरी कर्मयोगिनाम् ।

किं त्याग एष उत पौरुषमस्ति मूर्तं
धर्मोऽथवा क्विमु दया विनयो नयो वा ।
शान्तिर्नु साधु निरणायि मयाऽतिमान्यः
श्रीमानयं मदनमोहनमालवीयः ॥ ८८ ॥

विद्वांसः शतशो दिगन्तविदितो यस्मिन्महाध्यापका-
श्छात्रा यत्र सहस्रशोऽनवरतं शिक्षां लभन्ते पराम् ।
यत्र द्रव्यमपेक्षते प्रतिदिनं मुद्रासहस्रात्परं
काश्यां तेन महोदयेन विहितोऽसौ विश्वविद्यालयः ॥ ८९ ॥

अथैकदा श्रीयुतमालवीय आहूय पूज्यान् श्रितनम्रभावः ।
तद्विश्वविद्यालयगौरवार्थं स्थितिं ययाचेऽग्रपदे गुरूणाम् ॥ ९० ॥

तत आगमनप्रतिबन्धकीभूतं हेतुमाहुः श्रीगुरुवराः ।

तत्त्वावबोधनिपुणेन हृदा विभाव्यं
स्वातन्त्र्यमस्ति मम तत्र निवासहेतुः ।
स्वातन्त्र्यसश्रयपरः कथमन्यदिच्छे-
न्नेक्षो रसेन परिशाम्यति सौधतृष्णा ॥ ९१ ॥

ततो महामनाः श्रीमालवीयः—

स्वातन्त्र्यमत्र भवतां न विनंक्ष्यतीति
तथ्यं विदन्तु बुधवन्दितपादपद्माः ।
एषा स्थितिस्त्रिभुवने विदिता समेषां
स्वाच्छन्द्यपूर्णहृदया हि सदा महान्तः ॥ ९२ ॥

गुरुवराः—

श्रेष्ठीश्वरस्वीकृतितोऽत्र मान्याः संन्यासतो वाऽपि मम स्थितिः स्यात् ।
गतिं तृतीयां न विलोकयामि प्रमाणमग्रे भवतां समीहा ॥ ९३ ॥

महामनाः—

न कामये संन्यसनं सतां वः श्रेष्ठीश्वरोऽसावनुकूलनीयः ।
यथाऽर्थये चार्थमहं जनेभ्यस्तथाऽर्थयिष्येऽर्थपतेस्ततो वः ॥ ९४ ॥

सम्मन्त्र्य सर्वं नयमर्मविज्ञः स श्रेष्ठिराजान्तिकमाश्वगच्छत् ।
अर्यार्यवर्यान् तत आर्यधुर्य आचार्यवर्यान् बहुशो ययाचे ॥ ९५ ॥

श्रेष्ठीश्वरः—

अदेयमन्यन्न च वोऽङ्ग मत्कं विहाय विद्वद्वररत्नराजान् ।
सर्वस्वसर्वस्वनिभा इमे मे क्षमा विधेयाऽत्र विधौ भवद्भिः ॥ ९६ ॥

लक्ष्मीविलासकुटिलैर्हि कटाक्षपातै-
सन्तर्जिता जगति हन्त बुधाः सहस्रम् ।
विद्याविलासविभवोर्जितमानसास्तु
के केऽपि सन्ति विरला गुरवः स्वतन्त्राः ॥ ९७ ॥

श्रीविक्रमीयषडशीतिनवेन्दुवर्षे
दर्शे तपस्यथ पुरे प्रमथाधिपस्य ।
विद्वत्सभा समजनि प्रथितप्रभावा
श्रीश्रेष्ठिराजरुगपायमहोपलक्षे ॥ ९८ ॥

यत्र श्रीमान् भुवनविदितो लक्ष्मणः शास्त्रिधीरो
मेधावर्माव्रततमतनूः शास्त्रशस्त्रोर्जिताङ्गः ।
आयातोऽसाववहितमनाः पण्डितेन्द्राभिवन्द्यः
किन्नेयं स्यात् समितिमृधभूर्गीष्पतेर्भीतिभूमिः ॥ ९९ ॥

श्रीमत्सम्राड्उपहृतमहोपाधिपूर्णाभिधानः
श्रीलो वामाचरणसुमनास्तर्कसर्वस्वसम्राट् ।
यस्यां नामाश्रयति पदवीं सभ्यतायाः सभायां
श्रीमान् शास्त्राप्रतिहतगतिर्यत्र हाराणचन्द्रः ॥ १०० ॥

यस्याध्यापनधाटपाटवकलां स्मृत्वैव चित्रङ्गता
धीराणां भजते गभीरधिषणा व्यामोहभावं द्रुतम् ।
शब्दाम्भोरुहभास्करो गुणगणप्राप्तप्रभूतादरो
यत्रासीद् बुधपुङ्गवश्च सुकुलः श्रीसूर्यनारायणः ॥ १०१ ॥

चिन्नस्वामी विदितविभवोऽशेषमीमांसकानां
लोकख्यातो महितचरणः पण्डितानां वरेण्यः ।
संख्यातीतागतबुधपदाम्भोजवापी भवन्ती
भव्या भूम्ना जयति भुवने भूसुराणां समज्या ॥१०२॥

तर्काम्बुजाततरुणारुणपूज्यभट्टा-
चार्यादयो हि ननु यत्र सदस्यरूपाः ।
तत्राधिपो भवतु भूतपतिर्गिरा वा
किंवाद्भुतं यदि सभा समभूदपूर्वा ॥ १०३ ॥

आमन्त्रिताः सविनयं महनीयपादा
याता द्रुतं गुरुवरा महतीं समज्याम् ।
एनान् वधीरितगुरून् समवाप्य मान्यान्
विद्वत्सभा गुरुमती गुरुतामवाप ॥ १०४ ॥

आम्नायलिङ्गादिबलाबलत्वविचारणाभूद् गुरुशास्त्रिणोश्च ।
विरोषदोषश्रुतिसारगर्भा विशुद्धशब्दार्थगभीरभावा ॥१०५॥

महोदयः श्रेष्ठिवरश्चिराय स्वान्तेन वादं परिपीय तृप्तः ।
तस्यावसानं न समीक्ष्य तस्माद्विरामकामः स गुरून् समाह्वत् ॥१०६॥

जानन्ति सर्वे भवतस्तदर्थं सभासमीहा न ममास्त किन्तु ।
एते ममैवेति निजप्रतिष्ठाकृते कृतार्थोस्मि तवाद्य सङ्गात् ॥१०७॥

अभूददभ्रं भवतां दुरध्वश्रमादिदुःखं तदहं समीहे ।
क्षमाप्रदानाय मनोरथो मे पूर्णस्तदेतत्समुवाच भूयः ॥१०८॥

ततस्तु नामार्थपरानुयोगे श्रीराजनारायणशर्मणोऽभूत् ।
विचारधाराऽप्रतिमोपलब्धेरथाजिहत्तत्र बुधान् स्वयं सः ॥१०९॥

लोकातिशायिपटुतां विबुधा विलोक्य
व्याधूतमूर्धशुभसाधुवचोवितानैः ।
साश्चर्यहर्षमनसः प्रशशंसुरेनान्
किं दुर्लभं जगति शक्तिमतां जनानाम् ॥ ११० ॥

मातः सरस्वति फलं गुरुसङ्गतेः किं
लोकातिशायिनि पदे पदमादधासि ।
स्वात्यास्तदेव सलिलं रजसः प्रसङ्गात्
पङ्कोऽथ शुक्तिपतितं वरमौक्तिकं तत् ॥ १११ ॥

तर्कस्वतन्त्रगतयो गुरवो मदीया-
श्चन्द्राद्रिनन्दविधुसम्मितविक्रमाब्दे ।
श्रीमद्विहारबुधसंसदवाप्त "तर्का-
लङ्कार" सत्पदमलङ्कृतवन्त एते ॥ ११२ ॥

बाणाद्रिनन्दविधुवत्सरके च "विद्या-
रत्नाकरे" ति पदवीं समवापुरेवम् ।
अङ्गाद्रिनन्दविधुसम्मितवैक्रमाब्दे
"विद्यानिधी" ति पदभूषणमीयिवांसः ॥ ११३ ॥

नागाद्रिनन्दविधुसम्मितवैक्रमाब्दे
श्रीमन्महामहिममानवमाननीयाः ।
एसोसियेशनसभोपहृत "प्रधाना-
चार्या" भिधं पदमलं विदधुर्यथार्थम् ॥ ११४ ॥

श्रीभारताधिपतिदत्त"महामहोपा-
ध्याया" भिधानपदभूषणभूषिताख्याः ।
नन्दाद्रिनन्दविधुविक्रमवत्सरान्ते
याता यतीन्द्रविबुधेन्द्रनरेन्द्रवन्द्याः ॥ ११५ ॥

काशीस्थभारतसनातनधर्मगोष्ठ्याऽ-
भूषीच्च "पण्डितविभूषण" भूषणेन ।

एकाष्टनन्दविधुविक्रमवत्सरे च
पूज्यान् गुरून् सकलधीरधुरीणधुर्यान् ॥ ११६ ॥

नन्दाष्टनन्देन्दुशकारिवर्षे काश्यां महामण्डलतो महान्तः ।
महामहाध्यापकपूजिताश्च "महामहाध्यापक" तामवापुः ॥ ११७ ॥

भारतवर्षीयविदां सम्मेलनतस्त्वलीगढे गुरवः ।
"विद्यासागर" पदवीं प्राप्ता नववसुनवेन्द्वब्दे ॥ ११८ ॥
सरयूपारीणविप्रमहासभायाः सभापतिस्थानम् ।
प्राप्ते कुम्भावसरे प्रयागे विभूषयाञ्चक्रुः ॥ ११९ ॥

सप्ताङ्कगोभूमितविक्रमाब्दे माघे सिते विश्वतिथौ गुरुभ्यः ।
यज्ञोपवीतोत्सवसंसदि स्वाम् धौतप्रतिष्ठां मिथिलेश्वरोऽदात् ॥ १२० ॥

एसोसियेशनसभा च "सदस्य" ताख्य-
पुष्पोपहारविधिना किल तान् समार्चत् ।
भूयोऽप्यसौ विबुध "लेखपरीक्षणा" ख्ये
मान्यास्पदे स्वमहिमोन्नतयेऽभ्यषिञ्चत् ॥ १२१ ॥

"सदस्यतां" संस्कृतकौंसिलाख्या सभा च धर्मोत्तर-सम्पदीया ।
विहारसञ्जीवनकः समाजो वितीर्य धन्यं सममंसत स्वम् ॥ १२२ ॥

श्रीमत्-सुधीमदनमोहनमालवीय-
विद्यालयस्य परिषच्च "सदस्यता"ख्ये ।
सर्वातिशायिनि पदे प्रतिभाविशेषान्
एनान् स्वयं वृतवती सुगृहीतनाम्नः ॥१२३॥

श्रीमन्महाराजाधिराजस्य सी. आई. ई. हिजहाइनेसेत्यादिविविधविरुदावलीविराजमानस्य धीरवीरपुङ्गवस्य नमन्नरपतिनिकायमौलिपालिघटितमुकुटमणिमयूखच्छटाशबलितनखमयूखस्य दरभङ्गाधीश्वरस्य श्रीमद्रमेश्वरसिंहशर्ममहानुभावस्य सदाचारसुविचारदयादाक्षिण्यशौर्यवीर्यनृपनयकलाकौशलप्रभृतिभिर्महनीयगुणैः प्रह्वीभूतहृदयैरेभिरेव

श्रीमद्भिस्तदीयगुणवर्णनात्मको "रमेश्वरकीर्तिकौमुदी" नामको ग्रन्थो ऽयलेखि। यत्र किल भावगाम्भीर्यं शब्दमाधुर्यं शब्दार्थोभयालङ्कारचमत्कारवर्णनीयसारं वेदं वेदं कस्य सहृदयस्य मुखे सशिरःकम्पः साधुवादो नोदयते ?।

श्रीमहामुनिजैमिनिप्रणीतस्य कर्मप्राधान्यवादात्मकस्य मीमांसाशास्त्रस्य गूढार्थतत्त्वावबोधनाय परमकारुणिकेन जगदुपकृतिकृतिना श्रीशबरस्वामिना प्रोक्तस्य तदाख्यया प्रसिद्धस्य भाष्यस्य महनीयमहानुभवानुभावावगम्यस्य दुःखबोध्यतान्धंतमोऽपनेतुकामैर्विदुषामुपकर्तुकामैः प्रकामं परिश्रम्य कल्पकलिकानाम्नी टीका निरमायि। या चेदानीं मुद्रिता कस्य सहृदयस्य विदुषो हृदयोद्यानं पुष्पायिता न सुरभयति ?॥

इति प्रशस्तिकाण्डं समाप्तम्।



## अथ सन्ततिकाण्डम्

जाग्रज्जडत्वतिमिरान्तसहस्ररश्मीन्
विद्वन्मिलिन्दपरिवन्द्यपदारविन्दान्।
सानन्दवन्दितमुकुन्दपदारविन्दान्
वन्दे गुरून् सकलशास्त्रसमुद्रसेतून्॥ १॥

चार्वाकबौद्धकुलकाननधूमकेतून् अद्वैतवादसुरपादपमूलहेतून्।
विप्रान्ववायकनकाञ्चितदण्डकेतून् वन्दे गुरून् सकलशास्त्रसमुद्रसेतून्॥ २॥

निर्व्याजया करुणया शिवमीहमाना
स्वाशीर्वचोभिरखिलान् भृशमुन्नयन्ती।
या गीयते गुरुजनैः करुणैकमूर्त्तिः
वन्दे दयैकजननीं जननीं सदाऽहम्॥ ३॥

खबाणनन्देन्दुमितेऽथ वैक्रमे कवौ दशम्यां शुभकार्तिकेऽसिते ।
पुरःप्रतिष्ठाद् उदयक्षमाभृतो यथा, तथा चन्द्रकलोदयं गता ॥ ४ ॥

अथ चन्द्रकलात उद्गतास्तनुजन्मान उदित्वरास्त्रयः ।
तनयाद्वयमेषु नामतो हरनारायण आदिमः सुतः ॥ ५ ॥

गुणरसनवचन्द्रे विक्रमाब्दे तुलार्के
सितदलविधितिथ्यां व्यञ्जयन् ब्रह्मभावम् ।
शुभगुणकविवारे ब्रह्मदत्ताभिधानः
शुचितममहसां वा राशिराविर्बभूव ॥ ६ ॥

अज्ञानघोरतिमिरावलिभौमभानु-
र्लोकोपकारकृतिना परमात्मनाऽसौ ।
ब्रह्मैव दत्त इह सर्वसुखाय मन्ये
यो ब्रह्मदत्त इति नाम बभार लोके ॥ ७ ॥

शब्दाचार्यपरीक्षणेऽग्रपदकं हैमं सुधीसंसदो
लब्धं तर्कसमुद्रमध्यनिहितं सारं च भूरिश्रमैः ।
भावान् साम्यगुणोपबृंहिततमान् लोकान् समुद्बोधयन्
न्यायाचार्यपदार्चितो गुरुसुतः श्रीब्रह्मदत्तः सुधीः ॥ ८ ॥

वेदान्तादिकदर्शनानि निपुणं स्वभ्यस्य पित्रन्तिके
छात्रान् मित्रनिभान् विधाय सकलान् संशिक्षयन् सर्वदा ।
किं ब्रूमोऽस्य बुधस्य पाठन–कलानैसर्गशक्तिं नवां
यत् पाषाणधियः कुशाग्रधिषणान् कुर्वन् सदा राजते ॥९॥

श्रीश्रीकान्तपदाङ्कितस्तनुजनुः श्रीरामकृष्णस्य सः
ज्येष्ठः श्रेष्ठगुणैर्द्वितीयतनयोऽसावद्वितीयोऽपि च ।
आविर्भूतमहोमहो भुवि रमाकान्तः समाख्याविमौ
बन्धुत्वैकनिबन्धनादधिगतौ भेदावसानं किमु ॥ १० ॥

श्रीरामकृष्णविबुधोदयपावनाद्रेः
पूर्वार्चिताज्जगति सूर्यकलोदियाय ।

विप्रान्ववायकमलानि विकाशयन्ती
धर्म्यैः करैर्धवलयन्त्यवनिं स्वकीयैः ॥ ११ ॥

काव्याचार्यपदाभिभूषितशुभं श्रीकान्तनामाश्रयन्
लोकं काव्यकलाकलाधरसुधासारांशुभिः पूरयन् ।
जिह्वाग्राङ्गणनर्तकीं नवनटीं वाणीं कलां शिक्षयन्
जातोऽयं गुरुदेवमानसमहामोदैकहेतुर्भुवि ॥ १२ ॥

श्रीकान्तोऽपि सरस्वतीप्रणयवान् गौरोऽपि कृष्णद्युतिः
एकोऽपि क्षितिमण्डले विजयते साहित्यसेवी महान् ।
गोपालोऽपि धरामरान्वयमहामालाग्रमेरूपमः
श्रीकान्तोऽजनि पालनाय यशसां विद्यावतां भूतले ॥ १३ ॥

बी० ए० पदालङ्कृतिमाददानः, साहित्यरत्नं रचनाप्रधानः ।
धर्मं रमाकान्तसुधीर्दधानः, एम्० ए० पदं प्राप्तुमपीहमानः ॥ १४ ॥

सुरेन्द्रो वीरेन्द्रः क्रमत इह राजेन्द्र इति च
कनीयान्नागेन्द्रो द्विजकुलमहाऽमूल्यमणयः ।
सुताः श्रीकान्तस्य प्रथमतनयाऽथापि च शकु-
न्तलोषाख्या लघ्वी लघुतनयतः पूर्वजनिभाक् ॥ १५ ॥

प्रथमा राजकुमारी कमलकुमारी तु मध्यमा तनया ।
माधुर्य्यसौ तृतीया पुत्र्यः श्रीरमाकान्तस्य ॥ १६ ॥

षण्णवाङ्कविधुविक्रमवर्षे मार्गकृष्णदशमीबुधवारे ।
नन्दनः समुदियाय रमाकान्तस्य तस्य विदुषः शशिनाथः ॥ १७ ॥

स्वागतावृत्तेन वर्णयति—

स्वागतामुपहरामि तदर्थं
स्वागतं भवतु येन जगत्याम् ।
स्वागतं स लभतां विबुधेषु
स्वागतं श्रयतु सोऽपि समेषाम् ॥ १८ ॥

अथैवं विविधजनपदेभ्यो दिग्दिगन्तरालेभ्योऽभ्युपगतान् धौरधुरन्धरान् प्रतिभाविशेषोपबृंहितपरमतत्त्वविज्ञानविजृम्भितं निगमसारमध्यापयतामापतत एवेयं विचारधारा श्रीगुरुवराणां हृदि पदमधत्त।

बाल्येऽधीता स्वविद्या तरुणिमनि तथाऽध्यापिताश्छात्रवर्गा
गार्हस्थ्यं सेवमानः परिणतवयसि प्राप्तवान् संस्थितिश्च।
आम्नायाम्नातशास्त्रानुमतगुरुजनोद्घुष्टजुष्टाध्वनाऽहं
तीर्थं कृत्वा सभार्यो हरपुरि निवसन् जीवनं यापयामि ॥ १९ ॥

वाराणसीमधिविवत्सुभिरेव धीरै-
र्लब्धोऽप्रतर्क्य इव पुत्रवधू-विषादः ।।
प्रत्यूह एव खलु पुण्यकृतां कथं वा
नूनं भवन्ति महतामपि भाविभावाः ॥ २० ॥

ततो व्यतीतेषु कियत्स्वेव मासेषु गुरुदेवचरणेषु विहिततादृशमहापकारदुरितपरिमार्जनायैव प्रेरणाप्रवणेन दैवेन, विहारेण वा तादृशानुपमबुधरत्नसञ्जिघृक्षुणाऽतिप्रेरिताऽन्तःकरणा इव महान्तः "विहार प्रान्तमेव" स्वसम्बन्धेन सनाथयाञ्चक्रुः।

आस्ते पाटलिपुत्रतो नवमिते क्रोशे प्रतीच्यां दिशि
विद्वत्सभ्यसमृद्धमिद्धनगरं नाम्ना "सदीशोपुरम्"।
तत्रास्ते श्रुतिधर्म्मपूतसरयूपारीणविप्राग्रणीः
शाण्डिल्यो धनिनां वरः शिवकुमाराख्यस्त्रिपाठी सुधीः ॥ २१ ॥

तस्यैका सुरसुन्दरीमददरी कन्या सुधामाधुरी
धर्म्याचारधुरी समस्तवनिताभूषामणिः सुन्दरी।
श्रीकृष्णेन व राधिकां स विदुषीं संयोजयिष्यन् बुधः
श्रीमद्ब्रह्मविदा, दिगन्तजयिनां पादान्तिकेऽभ्यागमत् ॥ २२ ॥

भूरिस्तवेन गुरुदेवपदान् प्रसाद्य
सम्पादित। वरवृतिः शुभदे मुहूर्त्ते।

व्रातप्रभावपरिवर्द्धनहेतवेऽथो
आमन्त्रिता भुवनभास्करपण्डितास्तैः ॥ २३ ॥

साक्ष्ये देवहविर्भुजोः श्रुतिमुखैः सच्छ्रोत्रियैर्व्याहृतैः
सन्मन्त्रैरनुमोदितः शिवकुमाराख्यः सुधीर्मण्डपे ।
कन्यायाः करपङ्कजं करतलेऽस्याप्यर्पयन् ब्रह्मणो
रेजे सिन्धुरिवेन्दिराकरतलं विष्णोः करे सञ्जयन् ॥ २४ ॥

सा च शिवकुमारशर्म्मणश्चिरञ्जीविनी परमसुलक्षणा "राधिका" नाम्नी कन्या "ब्रह्मदत्त" द्विवेदिना परिणीता ।

यथाविधिप्राप्तविवाहमङ्गला रती रतीशेन यथा तथा बभौ ।
अनेकजन्मार्जितसंस्कृतेर्बलादवापतुर्द्वैतभिदां हि दम्पती ॥ २५ ॥

प्रथमा कुसुमकुमारी शैलकुमारी कनीयसी तनया ।
प्रथमस्त्रीतो जाते कन्ये श्री–ब्रह्मदत्तस्य ॥ २६ ॥

द्वितीयभार्यातश्च यथासमयम्—

श्रीमद्ब्रह्ममहानुभावसहितो राधाम्बुधौ गोपितः
श्रीलब्रह्ममहाप्रभावसहितो यस्तेजसां सञ्चयः ।
वर्षे विक्रमभूपतेः स उदगाद् नेत्राङ्कनन्दावनौ
मार्गे कृष्णचतुर्दशीरविदिने सौम्ये मुहूर्तेऽवनौ ॥ २७ ॥

चन्द्रोऽयं शुभलक्षणः सुसरयूपारीणविप्राग्रणी-
रास्थाय द्विजराजतां किमुदगादाह्लादयन् स्वैर्गुणैः ।
यं वाचस्पतिमुद्गिरन्ति गुरवो वाचां पतिं भाविनं
जीव्यात् पूर्णकलः सुखेन स महाराजोपनामाश्रितः ॥ २८ ॥

वेदाङ्कनन्दावनिविक्रमाब्दे भाद्रे सिते तस्य रवौ नवम्याम् ।
मनोरमा नाम सुताद्वितीय–मनोरमायामुदिताद्वितीया ॥ २९ ॥

एवं यथाकालं श्रीतारादेवी श्रीसुधादेवी च द्वे कन्ये जाते चि० काशीपति चि० विद्यापतिनामकौ यथाकालं सुतौ जातौ ।

इति जन्मसन्ततिकाण्डं समाप्तम्



अथ श्रीहरिहर-चरित-चम्पूकाव्यस्य

## उत्तर-काण्डम्

वेदान्तचिन्तननितान्तकृतात्मबोधान्
बोधानुबोधनविबोधितधीरधुर्यान् ।
वर्यान् विदग्धपरिषत्सु बुधेन्द्रवन्द्यान्
वन्दे गुरून् सकलशास्त्रसमुद्रसेतून् ॥ १ ॥

अन्यान् स्वसन्ततिदृशा परिपालयन्ती
या पूज्यते परममातृगुणस्वरूपा ।
उद्दामदिव्यचरितामृतवल्लरीं तां
वन्दे दयैकजननीं जननीं सदाऽहम् ॥ २ ॥

श्रीमद्गुरुप्रवरपादसरोरुहे द्वे आधाय चेतसि समुल्लसितान्तरात्मा ।
तीर्थात्मनां विविधतीर्थमयं पवित्रं चित्रं चरित्रमतुलं मृदु चित्रयामि ॥ ३ ॥

गयासुरोरःस्थलपादपीठिकामधिष्ठिता श्रीपतिपादपादुका ।
गया पितॄणां भवसिन्धुतारिणी जयत्यसौ फल्गुतटे विहारिणी ॥४॥

श्रीमद्रामशिलामौलिर्विष्णोः पदमुरोदधत् ।
ब्रह्मयोनिपदाम्भोजो देशो विजयतेतराम् ॥ ५ ॥

अत्र च मातापितृमोक्षसाधनौपयिकं यथाशास्त्रं श्रद्धया श्राद्धं सम्पाद्य तीर्थपुरोहितान् दानसम्मानादिभिः सन्तोष्य श्रीमन्तो गुरुवराः स्वगेहमुपस्थाय ब्राह्मणान् बन्धुबान्धवांश्च भोजयित्वा मातापित्रोः ऋणादात्मानं मोचयामासुः ।

प्रतप्तजाम्बूनदवैजयन्तिकाविराजमानं बहुभाभिरूर्जितम् ।
विनीलनीलाचलखण्डमण्डितं विभासते विष्णुपदस्य मन्दिरम् ॥ ६ ॥

उपद्रवन्तं भुवनं गदासुरं निहत्य निर्माय गदां तदङ्गतः ।
दधार योऽयं कथितो विरिञ्चिना विराजतेऽत्रादिगदाधरो हरिः ॥७॥

वटोऽक्षयः कुण्डसरस्त्विषां पतेर्मतङ्गवाप्यादिकमुच्यतां कियत् ।
पितामहो यं समतिष्ठिपच्छिवं जयत्यसौ तत्र पितामहेश्वरः ॥ ८ ॥

धर्मव्रता धर्मसुता मरीचेः शापेन पत्युर्हि शिला भवन्ती ।
गदाधरेणैव धृतावदध्रे गयासुरं देवशिलेति याऽभूत् ॥ ९ ॥

गयानगरमिदं पाटलिपुत्रनगरादष्टाविंशतिक्रोशमिते दक्षिणे भागे वर्त्तते । पञ्चक्रोशात्मकमिदं हिन्दूनां पवित्रतमं तीर्थम् । एवं तु सर्वदैवात्र पितृउद्धारनिमित्तं पिण्डदानं भवति किन्तु विशेषत आश्विने पितृपक्षे । गया-नगरीतो नातिदूरे बुद्धगयानामकं रमणीयं स्थानमस्ति ।

अथैवं कालक्रमेण वर्द्धमानः आद्येऽधीतेत्यादिना पूर्वं प्रतिज्ञातो यथा-वसरमुपचितिं गतः सङ्कल्पः । येनैते सर्वैर्विद्वद्वृन्दैश्छात्रकदम्बैः स्थानीयैर्मान्य-वदान्यैः सभ्यसमुदायैः साधुसन्दोहैरिष्टमित्रबान्धवादिभिश्च परमादरामन्दानु-रागाभ्यां कथं कथमपि तीर्थायानुमतिदानेन सम्मानिताः । शास्त्रोक्तविधानेन शुभे मुहूर्त्तेऽशनवसनद्रव्यादिभिर्विप्रान् सन्तोष्य कृतसङ्कल्पाः २९-१०-१९३४ तमे ईस्वीयवर्षे तदनुसारेण १९९१ मिते श्रीविक्रमसंवत्सरे कार्त्ति-ककृष्णसप्तम्यां सोमवासरे काशीं प्रतस्थिरे । इयञ्चोत्तरप्रदेशस्य पुण्यतमा नगरी प्रधानसंस्कृतविद्यापीठत्वेन व्यपदिश्यमाना गङ्गातीरविहारिणी विश्व-नाथसनाथा वरुणाऽसीनद्योर्मध्यस्था विजयते । सप्तपुरीणामन्यतमस्या अस्या महत्त्वं नाविदितम् । सन्ति चात्र परस्सहस्राणि मन्दिराणि तेषान्तु भगवतः श्रीविश्वनाथस्य स्वर्णमन्दिरम् , अन्नपूर्णायाः, दुर्गायाः, भैरवना-थस्य, श्रीढुंढिराजमहागणेशस्य मन्दिराण्यतिप्रसिद्धानि । गङ्गायास्तटे घट्टाश्च बहवः । सन्ति तेषु—पञ्चतीर्थः, अस्सीसङ्गमः, वरुणासङ्गमः, दशाश्व-मेधः, पञ्चगङ्गाख्यः, लालमिश्राभिधेयः, तुलसीत्यादयो मुख्यतमाः सन्ति । दृश्यानि चात्र काश्या दक्षिणे भागेऽनतिदूरे 'नगवा' ग्रामे श्रीमदनमोहन-

मालवीयेन संस्थापितो हिन्दूविश्वविद्यालयो विद्यापीठः, कालकूपः, माधव-दासस्याभ्रंलिहः कौतुकस्तम्भः ( धरहरा ), ज्ञानवाप्यमृतकुण्डं नागकुण्डम् , काशीकरवट, मोतीझील, नन्देश्वरकोठी, इत्यादीनि च लौकिकभाषया प्र-सिद्धानि स्थानानि दर्शनीयानि सन्ति ।

सारनाथः—

काशीतः पादोनक्रोशद्वयमिते दूरे बी० एन० डब्लू नामकधूमयानमार्गे वर्त्तते । भगवता बुद्धेन प्रथममत्रैव स्वमतस्य प्रचारो व्यधायि ।

रामनगरम्—

काशीतः पूर्वं पारेगङ्गं रामनगरनाम्नी काशीनरेशस्य राजधानी विरा-जते । अत्र व्यासस्य महर्षेर्मूर्त्तिः । अत्र च प्रतिवर्षमाश्विने मासे महता समारोहेण रामलीला भवति ।

गुरुवरचरणानवाप्य पूज्यानधिकं गौरवमाप काशिका सा ।
हरिहरविहिताधिवासधन्या हरनगरी न गरीयसी कथं स्यात् ॥१०॥

अथ वाराणसीतीर्थमुपगम्य शङ्करजटाविहारिणीं त्रिविधतापसंहारिणीं ब्रह्मकमण्डलुवासिनीं हरिनखदीप्तिविभासिनीं तुङ्गोत्तालतरङ्गां मणिकर्णिकादौ गङ्गामवगाह्य श्रीविश्वनाथमन्नपूर्णां कालभैरवं ढण्ढिराजप्रभृतींश्च सुरगणान् प्रणम्य परिक्रामन्तः हरनगरीं प्रदक्षिणीकृत्य शास्त्रीयविधिना तीर्थकृत्यं सम्पाद्य अयोध्यां १-११-३४ ई० वि० सं १९९१ का० कृ० दशम्यां गुरावुपतस्थुः ।

नो शक्या योद्‌धुमन्यैः प्रबलपरबलैर्योद्‌धृभिर्यास्त्ययोध्या,
सूर्यादीक्ष्वाकुमध्याऽजरघुदशरथाद्यन्तवीर्योपगूढा ।
पूर्णब्रह्मावतारप्रविहितपृथुकानेकलीलाललामा,
श्रीरामाधिष्ठिता सा त्रिभुवनजयिनी पूरयेत् सर्वकामान् ॥ ११ ॥

यस्याः स्वच्छाम्बुपूर्णा प्रवहति सरयूरुत्तराशां पुनाना
पानस्नानेक्षणाद्यैर्भवविभवभवां भीमभीतिं धुनाना ।

वज्राङ्गो यामुदग्रां समवति सततं सेव्यमानैकरामः
श्रीरामाधिष्ठिता सा त्रिभुवनजयिनी पूरयेत् सर्वकामान् ॥ १२ ॥

यस्यामद्यापि वीरा विहरति विपुला वाहिनी वानराणा-
मादर्शं दर्शयन्तो कपिकटकजुषो राघवेन्द्रस्य साक्षात् ।
अश्रान्तस्तोत्रपाठप्रकटितविभवश्रौतधामाभिरामा
श्रीरामाधिष्ठिता सा त्रिभुवनजयिनी पूरयेत् सर्वकामान् ॥ १३ ॥

इयञ्च सप्तपुरीषु मुख्या । अत्र शतं देवमन्दिराणि, तेषु ६३ मन्दिराणि विष्णोः, ३० मन्दिराणि शिवस्य च प्रायेण तथाऽन्येषामन्यान्यपि कियन्ति सन्ति । अत्र च श्रीरामं सह जगदम्बिकया सीतया विराजमानमनुजेन विभूषितदक्षिणपार्श्वमभिवाद्य एवं नागेश्वरनाथं दर्शनसिंहजीवं तथा हनुमन्मदिरादीन् ( हनुमान गढी ) गत्वा देवगणान् प्रणमन्तोऽन्यत्रापि प्रमोदवनादौ विद्वत्साधुसमुदायैः सङ्गत्य सत्सङ्गजन्यभक्त्युद्रेकसुधासाररसमुल्वणमानन्दभरमनुभवन्तो लक्ष्मणपत्तन-( लखनऊ) दर्शनाय मनो व्यापारयामासुः । ततः का० कृ० एकादश्यां शुक्रवासरे–वि० १९९१ मिते वर्षे ता० २–११–३४ ई० वर्षे—

तत्र गत्वा भव्यं सभाभवनं, नूतनं धूमयान–स्थानं, पाश्चात्यचिकित्साशिक्षणालयं, जीवागारम् , आश्चर्य्यागारं, कैसरबाग, अमीनावादपार्क, मालरोड, मारटीनेयर कालेज, छतरमञ्जिलेत्यादीनि लोकभाषया प्रसिद्धानि स्थानानि दर्शं-दर्शं परमानन्दमनुभवन्तोऽनुपदमेव तीर्थराजाय प्रयागाय प्रस्थानं चक्रुः । का० कृ० ११ शनौ—

छत्रं दधानं वटमक्षयाख्यं शक्तित्रयं संदधतं त्रिवेणीम् ।
महामहादुर्गनिगूढगात्रं श्रीतीर्थराजं तत ईयिवांसः ॥ १४ ॥

तत्र त्रिविधतापापहारिण्या त्रिभुवनकल्याणकारिण्या त्रिवेण्या त्रिविधकर्मोद्भूताः जन्म-जन्मान्तरेभ्य आवर्तमाना दुःखातिशयविधायनीर्वासना निश्शेषयन्तं तीर्थराजमभिवन्द्य त्रिवेण्यां कृतस्नानाः कल्पान्तेऽपि रूपान्तरप्राप्तिशून्यं तत्र महादुर्गस्य महानिधिमिव भूगर्भगृहे गोपितमक्षयवटं प्रणम्य

कृतार्थमिवात्मानममन्यन्त तीर्थङ्कराः श्रीगुरवः। तीर्थराजोऽपि तादृशालौकिकसुधा–सरस–विमलसलिलावगाहनपानादिभिर्दिव्यधरोत्सङ्गविद्योतमानकमनीयकुटीरक्रोडाधिवाससम्पादनेन च महतामुचितमातिथ्यं सम्पादयन् स्वीयं तीर्थराजत्वं सफलममंस्त।

दर्शनीयानि चात्र–अलोपिमन्दिरभरद्वाजाश्रमवेणीमाधवमन्दिरादीनि तथा विश्वविद्यालयानन्दभवनप्रधानन्यायालयाः सन्ति।

ततः का० कृ० १२ रवौ ( ता० ४-११-३४ )

मातुर्गर्हितकर्ममर्मविहितः साकं स्वकैर्बान्धवै-
रानेतुं ह्यभिषिच्य भूपभरतो रामं ययौ यत्र वै।
नानातीर्थमयाभिषेकसलिलैः कूपं परं निर्ममौ
शैले यत्र च तत्र पूज्यगुरवः श्रीचित्रकूटे ययुः॥ १५॥

तत्र कामदनाथपर्वतस्य परिक्रमणं पयस्विन्यां नद्यां स्नानं रामवातायन, हनुमद्धारा, गुप्तगोदावरी, जानकीकुण्डानुसूयादेवाङ्गना, तीर्थस्फटिकशिला, भरतकूपादीनां दर्शनं महापुण्यकरम्। चित्रकूटस्य परिक्रमा पञ्चक्रोशीनाम्ना प्रसिद्धा। अस्यां त्रयस्त्रिंशत् ३३ मन्दिराणि सन्ति।

ततो ग्वालियराभिधानां

( ता० ६–११–३४ ई. वर्षे का० कृ० १४ कुजे )

महाराजसिन्धियाराजधानीं जैनानां तीर्थस्थानीयां नगरीमगच्छन्। अत्र सुन्दरमेकं महादुर्गम् आश्चर्य्यागारं ( जादूघर ) मानमन्दिरं, सङ्गीत विद्यालयः मृन्मयपात्रनिर्मितिस्थानं राजकार्यालयः ( राजाकारखाना, ) इत्यादीन्यतिरम्याणि दर्शनीयानि सन्ति।

ततोऽग्रपुरं ( आगरा )—

कार्तिककृष्णामावस्यायां बुधे ता० ७–११–३४ ई. वर्षे प्रयाताः।

यत्र वृत्रत्रासादिव धरातले पतितं साक्षान्महेन्द्रमन्दिरमिव विराजमानं ताजमहलाभिधानं गोविन्दमन्दिरमाश्चर्य्यागारं रामबाग, इति लोकनाम्ना प्रसिद्धमन्यानि च बहूनि दृश्यानि सन्ति।

आगरानगरस्य समीप एव दयालबाग इति नाम्ना विदितं राधास्वामि-सम्प्रदायस्य शिल्पकलायाश्च प्रधानं केन्द्रं वर्त्तते।

आगरातः सप्तपुरीणामन्यतमां भगवतः श्रीकृष्णस्य जन्मभूमिं कलिन्द-नन्दिनीकूले विलसन्तीं मथुरां—कार्त्तिककृष्णामायां ता० ७-११-३४ ई० समुपतस्थुः।

अत्र यमद्वितीयायां स्नानाय महती मेला भवति। अत्र श्रीद्वारकाधीश, देवकी, किशोरीरमण, श्रीनाथजी, मथुरेश, गोवर्द्धन, केशव, गोपीनाथादीनां मन्दिराण्यतिप्रसिद्धानि सन्ति।

अत्र पान्थानामधिवासाय रम्या बहुशो धर्मशाला विलसन्ति। अतः क्रोशत्रयान्तर्वर्तिनि प्राचीनतमे महावनग्रामे विन्ध्याचलवासिन्या यशोदाग-र्भसम्भूतया सममानन्दकन्दस्य भगवतः श्रीकृष्णचन्द्रस्य जातमात्रस्यैव विनिमयो जातः।

गोकुलम्—महावनस्य सविधे नगरं वर्तते।

वृन्दावनम्—

श्रीकृष्णचन्द्रबलरामललामलीलारङ्गस्थलं रविसुतापुलिनाभिरामम्।
वृन्दावनं सुकृतिनो वव्रजुस्ततस्ते गोचारणाङ्गणविहारिविहारहारि॥ १६॥

नगरमिदञ्च "मथुरातः" सार्द्धद्विक्रोशपरिमिते उत्तरदिग्भागे वर्तते। अत्रैव च श्रेष्ठिरामनिरञ्जनदासमुरारकामहोदयेन भगवतो नाममात्रमुच्चा-रयतां दरिद्राणां साधूनाञ्च भोजनप्रबन्धो विहितो विद्यते। सन्ति चात्राने-कानि मन्दिराणि। तेषु (१५९०) ई. वर्षे स्थापितं गोविन्ददेवस्य मन्दिरम् (१५८०) ई. वर्षे स्थापितं "गोपीनाथ"स्य मन्दिरम्, एवं (१५५१) ई. वर्षे षड्लक्षमुद्राव्ययेन निर्मितं रङ्गनाथमन्दिरं सुप्रसिद्धम्।

ततः कार्त्तिकशुक्लतृतीयायां शनौ—

मेरठमहामण्डलस्य (मेरठ) केन्द्रं "मेरठनाम" नगरं जग्मुः।

यत्र सदा सैनिकानां शिविरं राजते।

ततः कार्तिकशुक्लपञ्चम्यां रवौ—

'हरद्वार' मुपेयुः।

पर्वतादापतन्ती 'गङ्गा' यत्र भूमौ प्रवहति। प्रतिद्वादशवर्ष कुम्भावसरे महती मेला सम्पद्यते। ब्रह्मकुण्डं (हरकी पेड़ी) ब्रह्मकुण्डस्योपरि 'गङ्गाद्वाराख्यं' मन्दिरं, मायादेवीमन्दिरं चात्रातिदर्शनीयानि। अनतिदूरे च 'कनखला' ख्यं तीर्थम्। यत्र बहूनि देवमन्दिराणि। अस्मादेव स्थानात् 'गङ्गातो जलकुल्या ( नहर ) निःसृता। 'हरद्वारतः' सार्द्धैकादशक्रोशमिते दूरे उपत्यकायां गङ्गातटे सप्तपुरीणामन्यतमा 'मायापुरी-ऋषिकेशे'त्यपरनाम्नी पुण्यनगरी वर्तते। अत्र भरतस्य मन्दिरमतिदर्शनीयमस्ति। ऋषिकेशात्किञ्चिद् दूरे 'लक्ष्मणझूला' नामकं स्थानं विद्यते। अत्र गङ्गायां दोलायमानो दृढः सेतुर्निर्मितः। यमारुह्य केदारनाथं बदरीनाथञ्च यात्रिणो गच्छन्ति।

ततः का० शु० ६ सोमे-

सहारनपुरं गतवन्तः। नगरमिदमपि युक्तप्रान्तस्य प्रधानम्।

ततः का० शु० ७ कुजे-

मुजफ्फरनगरं गतवन्तः।

ततः कार्तिकशुक्लाष्टम्यां बुधवासरेः —

परश्शतानां पृथिवीपतीनां या राजधानीत्वपदेऽभिषिक्ता।
दिल्लीतिनाम्ना नगरीं प्रसिद्धां प्रपेदिरे भारतराजधानीम्॥ १७॥

अत्र च कानिचिन्मन्दिराणि प्रधानभारतशासकस्य भव्यं विशालं भवनं ( बड़े लाट की कोठी ) भारतीयव्यवस्थापकसभामन्दिरम् ( एसेम्बलीहौल ) कौतुकस्तम्भः ( कुतुबमीनार ) मानमन्दिरमित्यादीनि रमणीयानि दृश्यानि सन्ति। कौन्सिल आफ स्टेट, सेक्रेटियटभवन इत्यादिलौकिकभाषया प्रसिद्धञ्च विशेषतो दर्शनीयम्।

ततः कार्तिकशुक्लदशम्यां शुक्रवासरेः—

अलवरनगरं प्रतस्थिरेऽतो जयपुरपत्तनमुत्तमं ततस्ते ।
अथ पुनरजमेरनामधेयं नगरमतः किल मारवाडमीयुः ।। १८ ।।

अजमेरतः सार्द्धक्रोशत्रयमिते दूरे पुष्करनामाऽकृत्रिमो निर्झरः (झील) आस्ते । यत्र ब्रह्मणः, वरजीवस्य, रङ्गजीवस्य, वद्रीनाथस्य, आत्मेश्वरमहादेवस्य, सावित्र्यादीनाञ्च मन्दिराणि दर्शनीयानि सन्ति ।

मार्ग० कृ० १ गुरौः—

आबूरोडं ह्यर्बुदं पर्वतञ्च गत्वाम्बाजीं वाढवानं प्रयाताः ।
ग्रावप्राकारैश्चतुर्दिक्षु गुप्तं दृष्ट्वाश्चर्यात् राजकोटं समाद्गुः ।। १९ ।।

ततः परं मार्गशीर्षकृष्णषष्ठ्यां कुजे—

क्षीराम्भोनिधिवासवासितमना युध्यन् जरासन्धतो
भूयो भूय उपद्रुतो वलभरैर्देशक्षतिं चिन्तयन् ।
यामब्धावकुतोभयां मयकलामास्थापयद् यत्नतो
रौक्मीं हाटकमेखलावलयितां तां द्वारकां ते ययुः ।। २० ।।

आहोस्विन्नगरी महानिधिरयं वारान्निधौ गोपितः
सम्राज्ञी नगरीषु च त्रिभुवने वश्यत्रिलोकीश्वरा ।
लक्ष्मीर्वा भुवनत्रयस्य परमा रत्नाकराङ्कोद्गता ।
किं वैषाऽस्त्यमरावती गुरुमती वज्रायुधप्रोज्जिता ।। २१ ।।

मोहमयी (बम्बई) प्रान्ते काठियावाडप्रायोद्वीपस्य पश्चिमोत्तरकोणे द्वारकाभिधानेयं पुरी प्रसिद्धं तीर्थस्थानम् । गोमती-द्वारका, मूलद्वारका, चेति कथ्यते, सप्तपुरीणामेका पुरी चतुर्धाम्नामेकं धाम च । अस्याः दक्षिणे भागे गोमतीनामकोऽरबसमुद्रोर्मिसलिलपूर्णो महान् खातो येनेयं गोमती-द्वारकाऽपि कथ्यते ।

पश्चिमेऽरबसमुद्रः, उत्तरे सङ्गमघट्टः, नारायणघट्टः, वासुदेवघट्टः, पार्वतीघट्टः, पाण्डवघट्टः, ब्रह्मघट्टः, सुरधामघट्टः, राजकीयघट्टः, गोघट्ट, इति नव घट्टाः सन्ति ।

अस्य खातस्य दक्षिणे भागे "पञ्चकुआं" नाम्ना प्रसिद्धाः पञ्च कूपाः सन्ति। यात्रिणस्तेभ्यो जलमादायात्मानं पुनन्ति।

द्वारकायाः कियद्दूरे रणत्यागिनो रणछोडदासस्य मन्दिरम्। द्वारकातो दशभ्यः क्रोशेभ्यः परं भेटद्वारिका यत्र श्रीकृष्णस्याष्टानां पाटमहिषीणां रम्याणि हर्म्याणि सन्ति। द्वारकयोर्मध्ये शङ्खोद्धारतीर्थं शङ्खसरः गोपीसरः कियद्दूरे द्वादशानां ज्योतिर्लिङ्गानामन्यतमस्य नागेश्वरनाथस्य च सुन्दरं मन्दिरं विभ्राजते। भेटद्वारकातः क्रोशत्रयमिते दूरे रामडाग्रामे साधवो गृहस्थाश्च प्रायेण शङ्खचक्राङ्किताः भवन्ति।

ततो मार्ग० कृ० ७ बुधे :—

"जामनगरं" प्रयाताः।

तत्र च सूर्यरश्मिचिकित्सालयः ( सोलेरियम ) सर्वदा सूर्यकिरणाननुसरन् विराजते।

ततो मार्ग० कृ० ८ गुरौ—

"वीरग्रामं" ( विरमगाम ) गत्वा दृष्ट्वा चः—

मार्ग कृ० ९ शुक्रे "अहमदावादं" गतवन्तः।

नगरमिदञ्च अहमदाख्येन यवनाधीशेन चतुर्दशशततमे ख्रिस्ताब्दे सावरमत्या नद्यास्तटे स्थापितम्। तत्र च स्वामिनारायणस्यातिविशालं मन्दिरम्। १२५ मितेषु जैनमन्दिरेषु हस्तिसिंहस्य जैनमन्दिरमतिप्रसिद्धमास्ते। १८४८ ई. वर्षे दशलक्षमुद्राव्ययेन निर्मितमिदम्।

नगराद् दक्षिणस्यां दिशि राजपुरगोपुरादनतिदूरे अहमदावादाधिपेन कुतुबुद्दीननाम्ना १४५१ तमे ई० वर्षे निर्मितं चतुस्त्रिंशत्कोणात्मकं "मकरिया झील" इति नाम्ना प्रसिद्धं विराजते। अत्र च नगरे बहुविधानां पटानां निर्माणायानेकानि यन्त्रागाराणि विद्योतन्ते।

ततो मार्ग कृ० १० शनौ ता० १-१२-३४ ई० वर्षे—

गुर्जर-देशस्थ खेडामण्डलान्तर्गतं

डाकोरग्राममुपतस्थुः। बुढानभक्तस्यातुलभक्त्याऽभिभूतो भगवान् द्वारिकाधीशः द्वारिकां विहाय निवसन्नात्मानं डाकोरजीवाख्यया ख्यापयन्नद्यापि वर्त्तते। तत्र च तन्मन्दिरं त्रिविक्रममन्दिरञ्चातिदर्शनीये।

अनन्तरं—मार्ग कृ० ११ रवौ:—

वटोदर-नाम्नीं ( बड़ौदा )

गायकवाडस्य राजधानीं देशीयराजधानीनां प्रधानतमानामन्यतमां महाराष्ट्रीयशासनकाले स्थापितां विविधयन्त्रागारजीवागाराश्चर्यागारप्राचीन-नवीनराजभवनपुस्तकालयादिभिर्विभूषितां विलोकयन्त उपनर्मदातटिनीतटं शोभमानं भृगुमुनिमन्दिरसुन्दरं

भृगुपुरं ( भडौंच )

मार्ग-कृष्ण १२ सोमेः—

पश्यन्तः पञ्चक्रोशमिते दूरे पूर्वस्यां दिशि वर्त्तमानं शुक्लतीर्थं भ्रातृवध-जन्यपापापनोदाय सम्राजा चन्द्रगुप्तेन कृतस्नानम् ओंकारेश्वर, कवि, शुक्लेति पवित्रकुण्डत्रयेणानेकैर्देवमन्दिरैर्मण्डितं साक्षादपश्यन्। शुक्लतीर्थस्य सविधे नर्मदानदीमध्ये कवरिदन्तधावनकाष्ठफालत उत्पद्यमानो विशालवटवृक्षो विजयते।

ततो मार्ग-कृ० १३ कुजे—

सूरतम्—

ताप्तीनद्या उपकण्ठं कण्ठमणिमिव विभ्राजमानं व्यापारस्य केन्द्रम् ( १५४० ) ई० वर्षे स्थापितेन महादुर्गेण विभूषितमध्यभागं सूरतनगरं विलोकयामासुः।

अत्र मन्दिरेषु स्वामिनारायणस्य पवनात्मजस्य च मन्दिरे अतिप्रसिद्धे। इन्द्रप्रस्थ ( दिल्ली ) पत्तनाभिमुखं गच्छतो राजमार्गस्य सविधे ( १८७१ ) ई० वर्षे निर्मितश्चतुष्पञ्चाशद्धस्तोच्छ्रितो घटिकास्तम्भो वर्त्तते।

ततः—मार्ग-कृ० १४ बुधे—

बम्बईः—

लक्ष्मीर्मोहमयी विलोक्य नगरीमाश्रित्य यां स्वं सदा
मन्वाना बहु दुग्धसिन्धुवसतिं त्यक्त्वा वसत्यन्वहम् ।
किंवा मोहमयी मही यदुदरे न्यस्येव रत्नाकरं
शेतेऽतोऽखिलमोहिनी विजयते किं मोहमय्याख्यया ॥ २२ ॥

पोताऽऽयाताभियातैरनुपलमभितो धूमयानप्रयाणै-
र्व्यापारस्य प्रधानं स्वविदितमवनौ केन्द्रमाश्रित्य सिन्धुम् ।
वासा "द्वालेश्वरस्य" स्वरभिभवति या द्वारकाधीश्वरस्य
श्रीमन्तः पर्यटन्तो गुरुवरचरणा मोहमय्यां प्रयाताः ॥ २३ ॥

तत्र च जीवागारा-( चिडियाखाना ) श्चर्यागार-( अजायबघर ) राजप्रासाद ( गवर्मेण्ट हाउस ) प्रधानन्यायालया ( हाइकोर्ट ) दिकमतिदर्शनीयमस्ति ।

मोहमयीमहानगरीतः क्रोशत्रयमिते दूरे ( एलिफेन्टे ) इत्याख्यं द्वीपमस्ति । यत्र पाषाणं भित्त्वा निर्मितानि ब्रह्मविष्णुरुद्राणां गुहामन्दिराणि विराजन्ते । शिवरात्रिदिवसेऽत्र महती मेला लगति । "अपोलोनाम्नः" पोतस्थानात् पोतमारुह्य यात्रिणोऽत्रागच्छन्ति ।

मार्ग शु० २ शनौ—

ततो नासिकमण्डलमण्डनायमाननासिकरोडाख्याद् धूमयानस्थानाद् गव्यूतिमिते दूरे गोदावरीतीरे विराजमानं दक्षिणभारतस्य काशीस्थानीयं—

नासिकनगरं निरीक्ष्य—

ततः—मार्ग-शु० ३ रवौ—

कैकेय्याभिहितेन तेन विपिने तातेन निर्वासितो
नद्येकत्र परिभ्रमन् रघुपतिः सार्धानुजो यत्र वै ।
आसीद् द्वादश वत्सरान् मुनिगणैः पत्रोटजे सौधयन्
धर्मैकान्तहृदो मदीयगुरवस्तत्पञ्चवट्यां ययुः ॥ २४ ॥

गोदावर्य्या वामे तटे पादक्रोशमिते दूरे पुराणो महानेको वटवृक्षः। येनेयं पञ्चवटीति कथ्यते। वटस्य समीपे सीतागुहाख्यायां भूगर्भगुहायां श्रीरामलक्ष्मणसीतानां मूर्त्तयः। द्वितीयायां गुहायां पञ्चरत्नेश्वरो महादेवो राजते।

कालाराममन्दिरम्—

सीतागुहातोऽनतिदूरं दशलक्षमुद्राव्ययेन निर्मितं सुन्दरमिदं विराजते।

कपालेश्वरमन्दिरम्—

कालाराममन्दिरस्य पश्चिमे प्राचीनतममिदं मन्दिरम्।

सुन्दरनारायणमन्दिरम्—

गोदावर्य्या दक्षिपार्श्वे राजराजेश्वरीसेतुसविधे (१७५६) तमे वर्षे 'इन्दौर' नरेन्द्रैः संस्थापितमिदम्। अत्र रामकुण्डं, धनुःकुण्डञ्च स्तः। श्रीरामः पितरमुद्दिश्य गोदावर्य्यां सुस्नाय यत्र निवापाञ्जलिप्रभृतिविधेयं सविधि सम्पादयामास, असौ रामगया, रामकुण्डं, वा, पिण्डदानक्षेत्रं वाऽभिधीयते।

तपोवनम्—

नासिकनगरात् क्रोशमिते दूरे गोदावरीतीरे गौतमस्य' महर्षेस्स्थानमिदम्। मोहमयीराजमार्गस्योपरि नासिकनगरात्सार्द्धक्रोशद्वयात्मके दूरे 'पाण्डव गुफा' नामकं स्थानमास्ते। यत्रातिप्राचीनाः त्रयोविंशतिगुहा बहवो बौद्धानां मूर्त्तयश्च सन्ति।

त्र्यम्बकेश्वरस्थानम्—

नासिकनगराद् दशक्रोशमिते दूरे स्थानमिदं वर्त्तते।

ब्रह्मगिरिः—

अस्य गिरेः सविधे गोमुखीतः प्रसिद्धा गोदावरी नदी निःसरति। सप्तशतीं सोपानपरम्परामतीत्य लभ्यते गोमुखीस्थानम् अनतिदूरे च त्र्यम्बकशिवस्य मन्दिरम्।

कुशावर्तकुण्डम्—

त्र्यम्बकग्रामस्य सविधे महाकुण्डमिदम् । गोमुखीत उत्पद्यमाना गोदावरी इहैव निपत्य अन्तर्भुवो वहन्ती क्रोशत्रयमतीत्य चक्रतीर्थात्प्रादुर्भवति ।

ततः—मार्ग-शु० ४ सोमे १०-१२-१९३४ ई०

पुण्यपत्तनं ( पूना नगरं ) जग्मुः—

यत्किल महाराष्ट्रदेशस्य भूषणं, 'श्रीशिवाजी' महाराजस्य लीलाभूमिः, मोटा-मूला-नदीभ्यामभितो गोपितं, पेशवावंशीयानां राजधानी, चित्रकलाव्यापारयोः प्रधानं केन्द्रमैतिहासिकं सुन्दरं नगरमास्ते । यत्र च बहव आङ्गलविद्यालया, महाविद्यालया, यन्त्रागाराणि ( मील ), चित्रपटनिर्माणनिलयः ( फिल्महाउस ), स्वर्णरजतगजदन्तनिर्मितवस्तूनां व्यवसायकार्यालयश्च विद्यन्ते । नगरस्य सविधे पर्वतमाला विराजते । पूर्वोक्तसरितोः सङ्गमे देवायतनानि चानेकानि विराजन्ते । अनतिदूरे तुलसीवाटिकायां श्रीरामलक्ष्मणजानकीमन्दिरं, ( बिल्वारामे ) ( बेल बाग में ) श्रीलक्ष्मीनाराणमन्दिरश्चास्ते । पूनातः सार्द्ध षड्भ्यः क्रोशेभ्यः परम् 'अलन्दी' विद्यते । यत्र श्रीजैनेश्वरस्य सुन्दरं मन्दिरम् 'इन्द्राणी' नदी च स्तः ।

पुण्यपत्तनतः पञ्चानां क्रोशानां दूरे 'शेलारवाडी' धूमयानस्थान (स्टेशन)तो गव्यूतिमिते 'श्रीतुकाराम' महात्मनो मोक्षभूमिः 'देहु' नामकं स्थानमास्ते । यत्र 'विट्ठोवा' महामन्दिरं, तुकाराममन्दिरं, भाण्डारा, भामगिरिनामकं गिरियुगलं 'श्रीतुकाराम' स्य तपोभूमिभूतं विद्यते ।

शोलापुरम्—

ततो मार्ग शु० ५ कुजे गतवन्तः ।

नगरमिदं शोलापुरमण्डलस्य चित्रकलायाः कौशेयकार्पासपटनिर्माणस्य, सेनाशिविरस्य च महाकेन्द्रम् । नगरादर्धक्रोशात्परं शोलापुरस्य प्राचीनं राजदुर्गं वर्तते । यदेकतः सिद्धेश्वरीनामकमहाह्रदतोऽन्यतश्च महागम्भीरखातेन वलयितं त्रयोविंशत्या शिखरैरुदञ्चितं पारस्यक्षरवलितशिलालेखोत्तंसितमुखद्वारं विराजते ।

पण्ढरपुरम्—शोलापुरतः ऊनविंशतेः क्रोशेभ्यः परं पश्चिमे प्रसिद्धं तीर्थस्थानमिदम् ।

ततो मार्ग० शु० ६ बुधे—

गु वर्गानगरं गतवन्तः—

हैदराबादराज्ये गुलवर्गामण्डलस्येदं केन्द्रम् । निजामराज्यकर्मचारिणां तत्र भवनानि, प्राचीनं महादुर्गश्चास्ते । दृष्ट्वै तत्—

मार्ग० शु० ७ गुरौ—

राजधानीषु विदितां निजामराजस्य राजधानीं ते ।
वनगिरिगोपुरदुर्गा - मद्राक्षुर्हैदराबादम् ॥ २५ ॥

तत्र चातिरमणीय आपणो, राजदुर्गं, यवनानां प्रधानं प्रार्थनामन्दिरं ( जामा मस्जिद ), महाविद्यालयो जीवागारं, सीतारामपादपावल्यां ( बाग में ) सीताराम, वरदराज, श्रीरामानुजानां प्रसिद्धानि मन्दिराणि च सन्ति ।

सिकन्दराबादम्—

नगरमिदं हैदराबादात् क्रोशत्रयात्मके दूर उत्तरस्यां वर्तते । तत्र निजामराज्यस्य न्यायालयाः, सेनाशिविराणि, घण्टापथात् पश्चिमे हुसेनसागरसरोऽस्ति ।

गोलकुण्डानगरम्—

नगरमिदं हैदराबादात् सार्द्धक्रोशत्रयमिते दूरे प्रतीच्यां विराजते । तत्र वारङ्गताधीश्वरेण संस्थापितं राजदुर्गमस्ति यत् परितः प्रस्तरमयः प्राकारः सार्द्धैकक्रोशविस्तीर्णोऽस्ति । तच्च दुर्गं प्रोत्तुङ्गैः ८७ शृङ्गैरभ्रङ्कषं कुतुबशाहीसंज्ञकाभिः शतघ्नीभिरद्यापि दुर्धर्षं विलसति ।

ततो मार्ग० शु० ९ शुक्रे प्रस्थिताः—

रायचूरनगरम्—

इदं धूमयानस्थानतोऽर्धक्रोशमिते दूरे रायचूरमण्डलस्य, मृन्मयपात्रनिर्माणस्य च केन्द्रमस्ति । रायचूरनगरात् पश्चिमे धूमयानतः पादोनक्रोशात्परं महादुर्गं विद्योतते । यस्योत्तरमहाद्वारपार्श्वे बहवः कौतुकस्तम्भाः ( टावर ) तथा तत्रैव महाशैल इव शिलामयो गजराजो विराजते । सुरङ्ग-

द्वारेण दुर्गप्रवेशो महाश्चर्यकरः। दुर्गस्य पश्चिमे भागे सिकन्दरियाभिधान-महाद्वारपार्श्वे महत् कारागारम्।

ततो मार्ग शु० १० शनौ—

रेनीगुण्टा नगरम्—

धूमयानस्थानस्य विरामकेन्द्रं जग्मुः। ततो योजनत्रयात्मके दूरे काल-हस्तीश्वरं नाम स्थानं विभाति। यत्र कालहस्तीश्वरं नाम वायुतत्त्वमयं शिव-लिङ्गं दर्शनीयमास्ते द्रविडदेशे पञ्चतत्वलिङ्गानि तत्तस्थानेषु प्रसिद्धानि।

तथाहि—

श्रीरङ्गान्ते त्रिचनापल्यां किल जबुकेशजललिङ्गम्।
एकाम्रेश्वरनामकपृथ्वीलिङ्गन्तु शिवकाञ्च्याम्॥ २६॥
अरुणाचलेऽग्निलिङ्गं वायुमयं तच्च कालहस्तीशम्।
चिदम्बरेऽम्बरमयमथ पञ्चकमिति तत्त्वलिङ्गानाम्॥ २७॥

कालहस्तीश्वरसम्बन्धे प्रसिद्धेयं किम्बदन्ती—

उभाभ्यां कालहस्तिभ्यां तपस्तप्त्वा प्रसादितः।
गिरीशो गिरिजेशोऽसौ कालहस्तीश्वरोऽभवत्॥ २८॥
फणया कालसर्पस्य दन्ताभ्यां हस्तिनश्च सः।
कालहस्तीश्वरः शम्भुश्चिह्नितोऽद्यापि दृश्यते॥ २९॥

दक्षिणपर्वतमालापादमूले शिलाखण्डमण्डिते कालहस्तीश्वरस्य महा-मन्दिरं राजते। तस्य पूर्वोत्तरपार्श्वे महति प्राङ्गणे परितो विचित्रैश्चतुर्भिर्वि-शालगोपुरैर्गोपितं पार्वत्याः सुन्दरं मन्दिरमस्ति। तत्कुडचे तैलङ्गाक्षरमयः शिलालेखो वर्तते।

तिरुपदी स्थानम्—

ततो मार्ग शु० ११ श्यां जग्मुः।

रेनीगुण्टाख्याद् धूमयानकेन्द्रात् क्रोशत्रयात्परं पश्चिमायां दिशि तिरू-पद्यां धूमयानस्थानं विद्यते। ततो दक्षिणस्यामर्धक्रोशात्परं सुवर्णमुखी नदी प्रवहति। तिरूमलोपत्यकायामधस्तिरुपदीपर्वताधित्यकायां वर्त्तमानोर्ध्व-

तिरूपदी कथ्यते । यत्र बालाजीवस्य प्रसिद्धं मन्दिरं विराजते । अधस्तिरूपद्यां बालाजीदर्शनार्थिनां महान् सङ्कटः । तत्तद्धर्मशालासु कृतनिवासा यात्रिणस्तिष्ठन्ति । अधस्तिरूपद्यां च बहूनां देवानां मन्दिराणि सन्ति । येषु गोविन्दराजस्य प्रधानं मन्दिरं भवति । श्रीवैष्णवसम्प्रदायस्य प्रपन्नामृतस्य ग्रन्थस्य ५१ तमेऽध्याये लिखितं यच्छ्रीरामानुजाचार्यो वेङ्कटाचलस्य सविधे भुजङ्गपर्यङ्कमधिशयानं श्रीगोविन्दराजमास्थापयत् । गोविन्दराजोपकण्ठं कन्याया गोदाम्बाया रामानुजस्वामिना स्थापितं मन्दिरमास्ते ।

बालाजी—

तिरूमलाख्यपर्वतमालायाः सप्तानां सानूनामन्यतमः सानुः 'शेषाचलः' 'वेङ्कटाचलः' वेङ्कटरमणा च लोकैः कथ्यते । अयञ्च शेषाचलः समुद्रसलिलात् २५०० सहस्रफीटपरिमाणमुच्छ्रितः काननरहितश्च वर्तते । तिरुपदी धूमयानस्थानात् ( स्टेशन से ) क्रोशत्रयस्य दूरे बालाजीवस्य दक्षिणभारतमन्दिराणां महोच्चमुत्तममतिप्राचीनं मन्दिरमस्ति । मार्गस्य पर्वतीयत्वेन तत्रारोहणमतिदुष्करम् । समृद्धाः शिविकया मध्या मानवपृष्ठेन तदितरे च पादाभ्यामेवारोहन्ति । उपानहौ पिनह्याधित्यकायामारोहणं निषिद्धम् । अस्याऽधस्तात्तिरुपद्या धर्मशालादिष्वेवोपानहावनावश्यकीं सामग्रीञ्च संस्थाप्य पर्वतारोहणमातन्वते । मन्दिराऽधिष्ठितपर्वतीये भागे विधर्मिणामारोहणं निषिद्धम् । बहिर्गोपुरात् कथञ्चित् स्थातुं विधर्मिणोऽपि शक्नुवन्ति । आरोहणमार्ग अन्तरा क्वचित् क्वचित् अन्नफलसलिलादीनां प्रबन्धः । बहिर्गोपुरात् परम् १२००० परसहस्राः सोपानपरम्परा अतीत्य त्रिभिः पाषाणमयैः प्राकारैरुभयतः प्रचुरैर्गोपुरैश्च गोपितं मध्ये विराजमानं यात्रिभिरवाप्यं भवति । तन्मन्दिरमध्यमध्यासीनः पञ्चहस्तपरिमाणमुच्छ्रायं दधत् पाषाणविग्रहः शङ्खचक्रगदापद्मधारी चतुर्भुजो बालाजीवः प्राङ्मुखो विराजते । अयन्दाक्षिणात्यैर्वेङ्कटेशो वेङ्कटरचलपतीतिवाऽभिधीयते । उत्तरभारतीयैर्बालाजीति व्यवह्रियते । बालाजीवस्य भोगो राजकीयः । यत्र लेखातिभूमो व्ययः तत्र स्वर्णरजतच्छुरितं द्वारशाखा ( चौकठ ) कपाटादिकमतिरमणीयम् । प्रतिवर्षं नवरात्रसमये महान् रथयात्रामहोत्सवो भवति । मन्दिरस्य समीपे

चतुःशतहस्तविस्तीर्णं तावद्धस्तदीर्घञ्चैकं सरः पुष्करन्नाम, परितः शिलासोपान-सङ्घटितमास्ते । यदवगाह्य यात्रिणो बालाजीवस्य दर्शनं कुर्वन्ति । सरसः समीपे च सदस्यस्तम्भमण्डपं श्रीवाराहस्वामी च पूर्वाभिमुखो विराजते । अत्रापि स्पर्शदोषो न गण्यते । अत्र यात्रिभिर्महाप्रसादा(अटका)र्थं यथे-च्छं द्रव्यमपि समर्प्यते । कियन्तः पुमांसः स्त्रियो वा पुत्रादिकामनया पूजा-विशेषं प्रतिजानते । जगन्मोहनसविधे बहवो नापिता अपि तिष्ठन्ति । यैः शिशूनां मुण्डनं सम्पाद्यते । मन्दिरस्य निकटे हुण्डीति नाम्ना प्रसिद्धा महा-मञ्जूषा विहितमुखी वर्त्तते । यस्यां दर्शकाः श्रद्धया मुद्राकर्षसुवर्णरजतभूष-णधान्यकश्मीरज ( केशर ) फलानि निक्षिप्यन्ते । व्यापारिणो गृहस्था अन्ये वा स्वाऽऽयतो बालाजीवार्थं धर्म्यं करमपि निष्कासयन्ति । एतदन्यच्च सर्वं मिलित्वा द्विलक्षमुद्रावधिको वार्षिक आयोऽत्र भवति व्ययश्चापि तादृश एव ।

बालाजीस्थानात् सार्द्धैकक्रोशमितं दूरं पापनाशिनी गङ्गा विलसति । पर्वतमालां विदारयन्ती दूरादागच्छन्ती पर्वतादधः पतति । तस्यां यात्रिणः सुस्नाय बालाजीवमभ्यागच्छन्तो मार्गे आकाशगङ्गां पश्यन्ति ।

चिदम्बरम्—

ततो मार्ग शु० १२ सोमे ययुः--

धूमयानस्थानात्क्रोशार्धपरिमिते दूरे चिदम्बरमितिनामधेया ग्रामहट्टा-ऽस्ति । यत्र राजकीयन्यायालयो यन्त्रालय आपणिकानां विपणयो धर्मशाला च सन्ति । नातिदूरे एका लघ्वी नदी प्रवहति । कौशेयसूत्रनिर्मितवस्त्राणा-मत्र व्यवसाय आधिक्येन प्रचलति । अत्र चैका महती मेला लगति, यस्यां लक्षाधिका यात्रिणो व्यापारिणश्च समवयन्ति । चिदम्बरंग्रामस्योत्तरत एको-ननवतिविग्रहां ( बीघा ) भूमीमतीत्याकाशतत्त्वमयस्य मणिनिर्मितनटराज-शिवलिङ्गस्य मन्दिरमस्ति । विंशतिहस्तोच्छ्रितप्राकारद्वयेन भगवतो नटेशस्य मन्दिरमण्डलं पार्वतीमन्दिरं शिवगङ्गसरोऽन्यानि च मन्दिराणि परिमण्डलि-तानि सन्ति । बहिःप्राकारमण्डलाभ्यन्तर्गतायाः भूमेरुत्तरतो दक्षिणं यावदा-

यामो द्वादशशतहस्तपरिमितः, तथा पूर्वतः पश्चिमपर्यन्तं तस्य दैर्घ्यं सहस्र-हस्तपरिमितम्। परितः प्रतिदिशं प्रकारमेकं गोपुरं विराजते। अन्तःप्राकारस्य मध्यमायाः भूमेः अष्टशतहस्तपरिमितो विस्तारस्तथा पञ्चशतहस्तपरिणाहश्चास्ति। अन्तःप्राकारस्य चतुष्कोणे ७३ हस्तविस्तीर्णः ५० हस्तदीर्घः ८५ हस्तोत्सेधेनामूलमौलिशिल्पकलाकलितेनागणितदेवप्रतिमाभिः संवलितेन नवभूमेनैकैकगोपुरेण विभूषितमास्ते।

प्रत्येकस्य गोपुरस्याधस्तात्ताम्रपत्रजटितातिस्थूलसप्तहस्तविंशतिहस्तोच्छ्रितद्वारशाखाधिष्ठितं प्रत्येकं द्वारं वर्त्तते।

'तञ्जोर' नगरं—

ततो मार्गशीर्ष शु० १२ कुजे—

मद्रासप्रान्ते कावेरीनद्याः दक्षिणे भागे वर्तमानं सुषमापुञ्जमञ्जुलमानञ्जुः। यत्र च कौशेयवस्त्रं, कालीनं, भूषणं, ताम्रपात्रञ्च, सुरुचिराणि निर्मीयन्ते। अत्र च द्वे राजदुर्गे परिखावलयिते स्तः। तयोरेकं महीयो दुर्गम् अन्यच्च लघुदुर्गमिति गीयते। न्यायाधीशस्य मण्डलेश्वरस्य च न्यायालयाः सन्ति। तन्जोरराजस्य राजसदनं धूमयानस्थानान्नातिदूरे महादुर्गाभ्यन्तरे राजते।

यस्य प्रथमो भागः १५०० तमे वर्षे निर्मितः। ततोऽनतिदूरे नैर्ऋत्यकोणे भगवतः शिवस्य विशालं मन्दिरं विद्यते। मन्दिराभ्यन्तरे त्रयोदशविग्रहा ( वीघा ) भूमिर्भाति।

रामेश्वरम्—

ततः मार्ग० कृ० १४ बुधे—

लङ्केशध्वंसकामो रघुकुलतिलको रक्षसां धूमकेतुः
पाषाणैर्यत्कपीन्द्रैरधिजलधिमहासेतुबन्धं बबन्ध।
लिङ्गं माहेश्वराख्यं रणविजयकरं स्थापितं यत्र तेन
तत्तीर्थं जग्मिवांसस्त्रिभुवनविदितं सेतुबन्धाभिधानम्॥ ३०॥

मद्रासप्रान्ते मनारस्य खाते ( मनार की खाड़ी में ) रामेश्वरो नामैको द्वीपो, यस्य 'सेतुबन्धखण्डे' गन्धमादनपर्वत इति नामधेयं लिखितम्। द्वीपश्चायमुत्तरतो दक्षिणं यावत्सार्द्धपञ्चक्रोशविस्तीर्णः, पूर्वतः पश्चिमपर्यन्तं दीर्घः सिकतामयस्तालवर्बुरनारिकेलप्रभृतीनां वृक्षाणामायतनीभूतो वर्त्तते। एतद्द्वीपवासिनो ब्राह्मणा रामेश्वरमन्दिरस्याऽऽयेनैव स्वां जीविकां निर्वाहयन्ति। मन्दिरञ्चेदं रामेश्वरग्रामात्पूर्वमधिसमुद्रतटं षट्शतहस्तपरिमिते विस्तीर्णे चतुश्शतहस्तपरिमिते दीर्घे च भूभागे परितः पञ्चदशहस्तोच्छ्रित-प्राचीरेण वलयितमास्ते। प्राचीरञ्चेदं पूर्वतो गोपुरयुगेन परतश्चैकशो गोपुरेण चित्रकलादेवप्रतिमाभ्यां विचित्रितम्। पाश्चात्यं गोपुरं ( ६६ ) हस्तपरिमाणोच्छ्रितं सप्तभूमो वर्तते, यदन्तर्भागे श्रीरामेश्वरस्य चित्रपटा रुद्राक्षमालाश्च विक्रीयन्ते। मन्दिरस्यान्तःपरिसरे पृथ्वीतो विंशतिहस्तोच्छ्रितः सार्द्धषड्-विंशतिहस्तविस्तीर्णः विंशतिहस्तदीर्घः दृषन्मयो राजमार्गो रामेश्वरस्य वैभवं संसूचयति।

रामेश्वरस्य मुख्यं मन्दिरमशीतिहस्तोत्तुङ्गमस्ति। तिसृभिः कक्षाभि-र्गोपितो भगवान् 'रामेश्वरनाथो' भुजगफणातपत्रेणप्रसाधितो विराजते। तथापि जगन्मोहनत एव तं वाढं परिपश्यन्ति। रात्रावपि बहुदीपप्रकाशाद-रात्तिकाचाकचिक्यात्सुखं दूराद् दर्शनं सम्पद्यते। गङ्गाजलबिल्वदलमालादि-भिर्भगवान् भूतभावनस्तत्रत्यार्चकद्वारा यात्रिप्रतिनिधित्वेन समभ्यर्च्यते न तु साक्षाद् यात्रिभिः।

लक्ष्मणतीर्थम्—

अस्ति च रामेश्वरमन्दिरस्य नातिदूरे पश्चिमे परितः पाषाणसोपानवद्ध-मभितो द्वारमुखमेकं लक्ष्मणकुण्डं नाम सरः। यस्योत्तरत एकं मण्डपम्, ईशानकोणे मन्दिरे लक्ष्मणेश्वरः शिवो विराजते। सरसि सुस्नाय लक्ष्मणेश्वर-तीर्थे यात्रिण उपहरन्ति ( भेंट देते हैं )। मृतपितृकास्तत्र पिण्डान्निर्वपन्ति। जीवत्पितृका मुण्डिताः स्नात्वा च दर्शनं कुर्वन्ति।

**रामतीर्थम्—**

लक्ष्मणकुण्डस्य पुरस्तात् राजमार्गं दक्षिणेन रामतीर्थे 'रामकुण्डनामकः' सरोवर आस्ते। तत्र यात्रिणः स्नान्ति परिमार्जन्ति वा।

**रामझरोखा—**

रामेश्वरमन्दिरस्योत्तरतः क्रोशार्द्धमिते दूरे 'रामझरोखेत्याख्यमति-सुन्दरं स्थानं वर्त्तते। यत्र श्रीरामचन्द्रस्य भगवतश्चरणचिह्नं समर्च्यते।

**सुग्रीवतीर्थम्—**

रामेश्वरमन्दिरझरोखेत्यनयोर्मध्ये 'सुग्रीवकुण्ड' नामकं सरश्चास्ति। यस्य तटे लघीयो मन्दिरमध्ये एका सुग्रीवस्य प्रतिमा वर्त्तते।

**ब्रह्मकुण्डम्—**

श्रीरामेश्वरपुर्याः सार्द्धद्विक्रोशात्मकं परिक्रमणं विद्यते। तत्र 'हनुमत्कुण्डं' ततः समुद्रसिकतासु 'ब्रह्मकुण्ड'मपि वर्त्तते। तत्रैवोत्पद्यमानं प्राकृतिकं भस्म यात्रिभिर्नीयते। ब्रह्मकुण्डसमीते महिषमर्दिन्या भवान्या मन्दिरं वर्तते। विजयदशम्यां रामेश्वरमन्दिरात् श्रीगणेशरामेश्वरस्कन्दानां धातुमय्य उत्सवमूर्तयो विमोनेर्ब्रह्मकुण्डं नीयन्ते, तत्र 'शमी' वृक्षस्य पूजनं भवति।

**सीताकोटितीर्थम्—**

रामेश्वरपुरीतो गव्यूतिमिते दूरे समुद्रतटे 'सीताकोटिनामकं तीर्थं वर्त्तते। यत्रैकोऽतिस्वादुसलिलपूर्णोऽस्ति कूपः।

**धनुष्कोटितीर्थम्—**

ततः पौष कृ० २ शनौ जग्मुः।

रामेश्वरपुरीतः षट्क्रोशमिते दक्षिणदिग्भागे धनुष्कोटितीर्थमास्ते। कियन्तो यात्रिणो नौकया कियन्तो हि स्थलवर्त्मना च तत्र गच्छन्ति। स्थलेन गच्छद्भिः सार्द्धक्रोशत्रयादूर्ध्वमेका श्रेष्ठिनो धर्मशाला प्राप्यते। ततः परं ततोऽपि महती धर्मशाला वर्तते, यत्र सदा 'सदावर्तः' प्राप्यते। पण्यवीयिकाऽपि तत्र वर्तते। तदग्रे सार्द्धैकक्रोशस्य दूरे 'धनुष्कोटि' तीर्थं विलसति। तत्रस्था भूरग्रेऽग्रे क्रमेण ह्रासमागच्छन्ती सूचीमुखेन समुद्रे प्रविशन्ती अन्त-

रीषतामुपयाति। इदश्च राजमहालयधूमयानस्थानात्क्रोशाभ्यन्तर उत्तरदिग्भागे राजमार्गात्पश्चिमे वर्तते। अस्य प्रथमो दिग्भागः १५५० तमे ई० वर्षे निर्मितो जातः। कियन्तो गृहा वाराणसेयभव्यभवनानुकारेण विनिर्मिताः। महालयस्याग्र उत्तरदिग्भागे परितो गृहराशिविभूषितमतिविस्तीर्णं प्राङ्गणं विद्यते। तत्र बहवो गजा व्याघ्राश्च पालिता विलसन्ति। महाप्राङ्गणस्य पूर्वमुत्तरञ्चैकैकं महाद्वारमास्ते।

उत्तरद्वाराद्बहिः प्रत्यहं मेला लगति। राजमहालयान्नैऋत्यकोणे क्रोशपादपरिमिते दूरे लघीयसि राजदुर्गे, दक्षिणस्यां दिशि 'तञ्जोर' नगरस्य प्रधानं महाशिवमन्दिरं त्रिपुरदिक्षु दुर्गप्राकारपरिखाभ्यां सुरक्षितमुत्तरस्यां परिसरेणातिरमणीयं विराजते। १३ विग्रहां भूमिं विस्तीर्णोऽस्य मध्यमो भागः। मन्दिरादुत्तरस्यां दिशि चैको महान् सरोवरः। यस्य समीपे गौरण्डानां देवालयः (गिरिजा) १७७७ ई० इतिलेखोत्तंसितो वर्त्तते।

ततः पौषकृष्ण ३ रवौ—

मदुरानगरीमुपतस्थुः—

मदुरामण्डलमण्डनायमानं मदुरानगरं वैगानाम्न्या नद्या दक्षिणे तटे विराजते। नदी चेयं मदुरातो दक्षिणपूर्वकोणे रामेश्वरद्वीपसमीपे समुद्रे मिलिता। मदुरायां राजमार्गमुभयतो विपणयः, महामन्दिरं, कारागारम्, राजकीयन्यायालय, औषधालय, आङ्गलविद्यालयो गोरण्डानां देवालयो, राजते।

मीनाक्षीदेवी—

ततो धूमयानस्थानात्क्रोशार्धे पश्चिमे ८४५ (फीट) परिमितायामां ७२५ फीट मानेन दीर्घामनुमानतो द्वाविंशतिविग्रहां दीर्घविस्तारसंयुतां भूमिमभिव्याप्य वर्तमानमेकादशभूमेनैकादशकलशशालिनैकैकेन गोपुरेण प्रतिमाशतसङ्कुलचित्रकलाकलितकलेवरेण परितो विरोचमानमभ्रंलिहमतिसुन्दरं मन्दिरं तस्याः वर्तते। मन्दिरस्य दक्षिणार्द्धभागे मीनाक्षी देवी, तदुत्तरार्द्धभागे च सुन्दरेश्वरः शिवो राजते।

ततः पौषः कृ० ४ सोमे--

त्रिचनापल्लीं गताः।

इयं नगरी मद्रासनगरात् १२५ क्रोशमिते दूरे कावेरीनदीतटेऽस्ति। 'साउथ इण्डियन रेलवे, इत्यस्य प्रधानं केन्द्रञ्चेयं (हेड क्वार्टर्स) वर्तते। अस्यां राजदुर्गमर्द्धक्रोशविस्तीर्णं पादक्रोशदीर्घं समकोणं विराजते। पूर्वं प्राकारपरिखाभ्यां परितो वलयितमासीत् किन्त्वधुनाऽस्याः परिखा विनष्टा जाता। अस्या अभ्यन्तर एका शिला वर्तते या त्रिचनापल्ल्याः शिला गीयते। यस्यां शिवस्य गणेशस्य च मन्दिरे राजते।

तच्छिलातः किञ्चिद्दूरं दक्षिणस्यां दिशि १७०० तमे ई० वर्षे चौक्कानायकनिर्मित एक यवनराजप्रासादो विलसति। शिलाराजदुर्गीयप्रधानद्वारयोरन्तरा 'तेप्पकुलम्' इति प्रसिद्धं नौकाया एकं सर आस्ते। यस्मिन् देवानां चलमूर्तयो जले परिभ्रम्यन्ते। अस्यां नगर्यामेकम् 'अवजरवेटरी'ति प्रसिद्धमतिस्वास्थ्यप्रदं स्थानमाङ्गलविद्यालया, औषधालयाश्च, बहवः सन्ति।

ततः पौ० कृ० ४ कुजे—

श्रीरङ्गं समगुः।

गव्यूतियुग्मे त्रिचनाख्यपल्ल्या गोदावरीमध्यगमन्दिरेऽसौ।
विराजमानं हरिरङ्गनाथो जगत्त्रयीपापमपाकरोति॥ ३१॥

मन्दिरमिदं भगवतः श्रीरङ्गस्य ईस्वीवर्षारम्भाद् वर्षाणां नवशत्यां पूर्वं स्थापितमिति श्रूयते। यथास्थानस्थितलघुबृहद्भिरष्टादशभिर्गोपुरैरूर्जितं प्राकारवलयितं बहुभिर्मन्दिरैरूपासितञ्च विभाति।

ततः पौ० कृ० ५ बुधे—

'चिंगलपेट' नगरम्—

मद्रासप्रान्ते समुद्रतटस्योपकण्ठं विराजमानमुपागमन्। दाक्षिणात्याः चेंगलपट इति कथयन्ति। चिंगलपेटस्थराजदुर्गस्यैकतो भागात् घूमशकटमार्गो निःसृतः। दुर्गस्याभ्यन्तर एव न्यायालयो निगृहीतबालकानाञ्चरित्रसुधाराय बन्धनगृहं 'धर्मशाला' आरामागारमौ-(बंगला) औषधालयादिकञ्च विराजन्ते।

राजदुर्गस्यैकतः प्राकारद्वयमन्यतश्चाकृत्रिमो महाजलाशयः ( झील ) पङ्किला प्राकृता भूश्च विलसति ।

पक्षितीर्थम्०—

ततः प्रतस्थिरे

पिङ्गलपट्टधूमयानस्थानात्सार्द्धचतुःक्रोशस्य दूरं पर्वतस्योपरिष्टात् पक्षितीर्थमस्ति । धूमयानस्थानात् पादपर्यन्तं राजमार्गः, उपत्यकायां धर्मशाला च विद्यते । यत्र पक्षितीर्थेऽद्यापि किल मध्याह्ने एव प्रतिदिनं श्वेतपक्षियुगलं व्योममार्गादुपगत्य तीर्थब्राह्मणेन दीयमानं हविरुपभुङ्क्ते । एतद् गिरिजागिरीशयोर्लक्ष्मीनारायणयोर्वा युगलमित्यैतिह्यम् ।

महाबलिपुरम्—

शङ्करस्यात्र मन्दिरमन्यान्यपि बहूनि मन्दिराणि विराजन्ते । यात्रिणो दर्शनार्थमत्राप्यागच्छन्ति ।

ततः पौ० कृ० ६ गुरौ १९९१ वि० वर्षे दि० २७-१२-१९३६ ई०

काञ्चीपुरम् ( काञ्ची ) आनञ्जुः—

सप्तपुरीणामन्यतमेयं काञ्ची धूमयानमार्गात्पश्चिमायां दिशि विराजते । इयञ्च 'विष्णुकाञ्ची' 'शिवकाञ्ची' चेति द्विधा धूमयानस्थानादनतिदूरे महाकाञ्चीवरम् अर्थात्—शिवकाञ्ची वर्तते ।

अथ च शिवकाञ्चीतः क्रोशमिते दूरे दक्षिणपूर्वकोणे धूमयानस्थानादपि क्रोशात्परं लघुकाञ्ची ( विष्णुकाञ्ची ) वर्त्तते । न्यायालयः, कारा विद्यालयश्चिकित्सालयश्चात्र वर्त्तन्ते । यत्र तैलङ्गतामिलनामिके च द्वे भाषे प्रचरतः। शिवकाञ्च्यां शैवा विष्णुकाञ्च्याञ्च वैष्णवा वसन्ति प्रायेण ।

शिवकाञ्ची०—

शिवकाञ्च्यामेकाम्रेश्वरशिवस्योच्छ्रितं मन्दिरमस्ति । यत्र बहूनां प्राकाराणां मण्डलानि सन्ति । तेषां पश्चिमप्राकारमण्डलस्य मध्ये शिवस्य मन्दिरम् । तत्र तिस्रः कक्षा अतीत्याम्रेश्वरस्य लिङ्गं विराजते । द्राविड़देशस्य पञ्च-

तत्त्वलिङ्गानामिदं पृथ्वीतत्त्वलिङ्गम् । तत्रत्याः पूजका दक्षिणया यात्रिप्रतिनिधिभूताः पुष्पाणि बिल्वदलानि च समर्पयन्ति । यात्रिणो बहिर्द्वारं शिवं साक्षात्कुर्वन्ति । नियतसमये मन्दिरस्याग्रे बालिका नृत्यन्ति । मन्दिरस्य पश्चादेक आम्रतरुरतिपुराण आस्ते । यस्याधस्तान्मृन्मयचतुरस्रपीठस्योपरिष्टात् पाषाणखण्डे कामाक्षीदेव्याः प्रतिमा प्रोट्टङ्किता विभ्राजते । तत्पार्श्ववर्तिनि मन्दिरे कामाक्ष्यास्ताम्रमयी उत्सवमूर्तिरस्ति । तत्सविधे च सप्तविंशतिक्रमेण विंशतेः पङ्क्तीनां ५४० स्तम्भैर्गुम्फितमतिविशालं सदस्यस्तम्भमण्डपं विराजते ।

प्रधानमन्दिरान्नैर्ऋत्यकोणे लघुमन्दिरे धातुविग्रहा उत्सवमूर्त्तिः शिवस्य वर्त्तते । यात्रामहोत्सवे कनकवर्णाभासैश्छत्रमुकुटसिंहासनादिभिः शिवस्य मूर्त्तिमलंकृत्य तद्यात्रामहोत्सवः सम्पाद्यते । जगन्मोहने चतुःषष्टिः योगिन्यो जयन्ति । ततोऽनतिदूरे च अनर्घवस्त्राभरणादिभिर्भूषिता सुसज्जिता मन्दिरे पार्वतीमूर्त्तिर्वर्त्तते । पश्चिमगोपुरसमीपे पङ्क्तिशोऽष्टोत्तरशतं शिवलिङ्गानाम् अस्ति । पश्चिममण्डलस्थपूर्वस्थगोपुरसविधे चिदम्बरनामकः शिवः स्वर्णवर्णा नन्दिवृषभस्य विशाला मूर्त्तिः, नवग्रहादिकञ्च देवमण्डलं विराजन्ते । तन्मण्डलात्पूर्वमन्यमण्डलं वर्त्तते । यस्य वायुकोणे स्पप्यकुलं नाम सरो नौकयाधिष्ठितमास्ते । ज्येष्ठे मासे प्रधानोत्सवावसरे उत्सवमूर्त्ती शिवपार्वत्यौ नावमधिरुह्य जलक्रीडामातन्वाते । तत्समये यात्रिणः पञ्चाशत्सहस्रमुपतिष्ठन्ति । मण्डलस्य दक्षिणे भागे दशभूमं १८८ फीट परिमितोच्छ्रायं गोपुरं विद्यते १०० फीटपरिमाणविस्तारं ८० फीटपरिमाणदैर्घ्यमेकादशकलशशालिना शिखरेणान्वितञ्च। तस्याधस्ताच्च परितः सुरप्रतिमाशतमण्डितं सुन्दरमेकं महाद्वारमस्ति । मण्डलाद्बहिर्महागोपुरस्य पुरस्ताद्दक्षिणे ३५ फीटविस्तीर्णं दीर्घश्चातिरमणीयं परितो द्वादशस्तम्भैर्मध्ये च चतुर्भिर्महास्तम्भैश्चारुचित्रकलानिमितं सुरप्रतिमासमसुषमैरुपष्टब्धं मण्डपं विद्योतते । मण्डपस्य सविधे चित्रैर्विचित्रितो नारिकेलपत्रैराच्छादितो दारुमयो रथस्तिष्ठति । रथयात्रामहोत्सवावसरेऽचलदेवताप्रतिनिधित्वेन चलमूर्त्तयो यमधिष्ठाप्य परितो भ्राम्यन्ते। शिवकाञ्च्यां सर्वतीर्थं परितः सोपानबद्धं मध्ये लघुमन्दिरेणातिसुन्दरमभितः

शिवलिङ्गैरालिङ्गितमेकं सरोऽस्ति। अत्रैव स्नात्वा यात्रिणः शिवं साक्षात्कुर्वते। बहवश्च सरसस्तटे पिण्डदाननिवापाभ्यां स्वपितॄंस्तर्पयन्ति। ग्रामस्य पुरस्तात् ग्रामदेव्या मन्दिरम् दक्षिणतः सपादैकक्रोशमिते दूरे परारनाम्नी नदी वरदराजस्य च मन्दिरमस्ति—यस्य मण्डलमेकादशशतफीटविस्तीर्णं सप्तशतफीटदीर्घमष्टाविंशतिविग्रहां भूमिमभिव्याप्नोति। मण्डलस्य बहिर्मूर्त्तिः विंशतिफीटपरिमितोच्छ्रिता। मण्डलस्य पूर्वस्थितं गोपुरमेकादशभूमं पश्चिमस्थञ्च नवभूममामूलमौलि देवप्रतिमाधिवासरम्यमतिदैर्घ्यपरिणाहि वर्त्तते। बहिः—पश्चिमगोपुरं सुन्दरो रथः सुरक्षितोऽस्ति। यमारुह्य वैशाखमासीयमहोत्सवे भगवत्प्रतिनिधिश्चलमूर्त्तिरभिभ्रम्यते।

विष्णुकाञ्ची—

शिवकाञ्चीतः क्रोशमिते दक्षिणपूर्वदिग्भागे धूमयानस्थानात् क्रोशाभ्यन्तरे वर्त्तते। अत्र वरदराजस्य विष्णोः पाषाणमयं विशालं मन्दिरं विराजते। अत्रैव रामानुजसम्प्रदायीयप्रतिवादिभयङ्करस्य पीठं वर्त्तते। वैष्णवा एवार्चकादयः सर्वे सन्ति। श्रीरामानुजस्वामी कियन्तं कालमत्राप्युवास। अत्र मन्दिरस्य कोषे बहूनि देवालङ्करणानि सन्ति। येषु मणिहीरकजटितानि पञ्चमुकुटानि किरीटानि च प्रत्येकं ५००० सहस्राद्दशसहस्रपर्य्यन्तमूल्यवन्ति सन्ति। लक्ष्म्याः केशपाशबन्धाय रत्नजटितो नागसेनो नाम शिरोबन्धः ( शिरोबन्द ) तथा ताम्रमुक्ता प्रवालरचिता मनोहरा हारा विचित्राणि कण्ठसूत्राणि येषां मूल्यं परस्सहस्रम्। आचारिभक्तेन दत्तमेकं निष्कं सप्तसहस्रमूल्यमर्हति। एवं मकराख्यं कण्ठभूषणं तथा रत्नजटितं स्वर्णघटितं 'पायातावम्' इति लोके प्रसिद्धं भूषणं ८६०० रूप्यकात्मकमूल्यार्हम्। अत्रेयं किंवदन्ती यत् लार्डक्लाइबमहोदयेन दत्तमिदं भूषणम्। एतदतिरिक्तमन्यच्चापि महार्घ्यं बहुभूषणमस्ति।

कारोकोनम्—

ततः पौ० कृ० ७ शुक्रे ययुः—

इदं धूमयानस्थानानां महत्केन्द्रं ( जङ्क्शन ) वर्तते।

तिरुवेल्लूरम्—

ततः पौ० क्रू० ८ शनौ जग्मुः

अत्र वरदराजस्य मन्दिरं त्रिभिः प्राकारैरभिगोपितं विराजते। प्रथमप्राकारस्य परिणाहः १९० फीटात्मक आयामश्च १५५ फीटात्मकः। द्वितीयस्य विस्तारः ४७० फीटात्मकः दैर्घ्यञ्च तावदेव परिमाणात्मकम्। एवं तृतीयस्य ९४० फीटात्मको विस्तारो दैर्घ्यं ७०० फीटात्मकम्। प्रथममण्डलस्य चतुःपार्श्वेषु बहिर्गृह (दालान) मध्ये वरदराजस्य (श्रीवीर बघवा स्वामिनः) मन्दिरमस्ति। वह्वीः कक्षा अतीत्य भुजङ्गशयना वरदराजस्य विशाला मूर्त्तिर्जागर्ति। तन्मन्दिरस्य पार्श्वे शिवमन्दिरमास्ते। तन्मन्दिरेऽत्रापि बहुकक्षाऽभ्यन्तरे शिवः संराजते। द्वयोर्मन्दिरयोरग्रे जगन्मोहनमस्ति। मण्डलस्याग्रिमे कुडचे गोपुरमेकमस्ति। पश्चान्निर्मितस्य द्वितीयस्य मण्डलस्याभ्यन्तरे बहूनि लघुस्थानानि, बहिर्गृहं, तथा पार्श्वयोः प्रथमगोपुरादप्यत्युच्चे द्वे गोपुरे विलसतः। एवमेव पश्चाद्रचितस्य तृतीस्य मण्डलस्य ६६८ स्तम्भैरुत्तम्भितमेकं मण्डपं तथा कियन्ति मन्दिराणि, स्थानानि, पार्श्वेषु पञ्च गोपुराणि च सन्ति। तेषु पूर्वपरे महोच्छ्रिते। मन्दिरस्य यन्मण्डलं (घेरा) तस्य यन्मुखस्थानीयं महाद्वारं (फाटक) तस्योपरितनं गृहमेव गोपुरपदेन व्यवह्रियते। द्राविडमन्दिरेषु गोपुराणां प्राचुर्य्यम्। औन्नत्ये महोन्नतानां मन्दिरणामपि गर्वं खर्वयन्ति गोपुराणि। मन्दिरस्य समीपे एकं सरो यत्र महोत्सवावसरे देवानामुत्सवमूर्त्तिभिर्जलकेलिः कार्यते। प्रत्यमावास्यं देवदर्शनार्थं तिरुवेल्लूराभ्यर्णवासिनस्तत्रागच्छन्ति।

भूतपुरी—

तिरुवेल्लूरधूमयानात् षट्क्रशोमिते दक्षिणे श्रीरामानुजस्वामिनो जन्मभूमिर्वर्तते। तत्रानन्तसरोवरस्य सविधे श्रीरामानुजाचार्यस्वामिनो महामन्दिरमास्ते। अयञ्च स्वामी तत्र दक्षिणाभिमुखो विराजते। तत्र केशवभगवतो मन्दिरम्, एवं बहूनि स्थानानि, महास्तम्भैर्मण्डितानि कियन्ति मण्डपानि च शोभन्तेतराम्। उत्सवावसरे बहवो यात्रिणो, विशेषेण रामानुजीया आचारिणो भूतपुर्य्यामुपगच्छन्ति।

ततः पौ० कृ० ९ रवौ—

तिरूत्तानीस्थानम् —

'रेनीगुण्टाऽथारकोनम्' इत्यनयोर्धूमयानस्थानकेन्द्रयोरन्तरा मद्रासनगरात् पञ्चविंशतिक्रोशात्मके दूरेऽवस्थितमावसथमुपतस्थुः। अत्र स्कन्दस्य मन्दिरमास्ते। श्रीसुब्रह्मण्यस्वामिनो विख्यातं पर्वतशिखराधिष्ठितं कमनीयं मन्दिरं राजते। पुरा बहवः स्वां जिह्वां छित्त्वा देवायोपनयन्ति। महामहिमवन्ति बहूनि चात्र कुण्डानि सन्ति।

ततः पौ० कृ० १० सोमे दि० ३१-१२-३४-

यस्य स्थानं तृतीयं सुविदितनगरेषु व्यवास्थायि सर्वै-
र्व्यापारस्थानमेकं जलनिधिपुलिने पोतविश्रान्तिभूमिः।
मत्स्यागारं यदङ्के विलसति निलयः पार्थसार्थस्य यस्मिन्
तद्दिव्यं पत्तनानामनुपमसुषमावासमद्रासमीयुः॥ ३२॥

मद्रप्रान्तस्येयं राजधानी श्रूयते यत् १६३९ तमे ख्रीष्टाब्दे विजयानगराधीश्वरात् कियतीं भूमिमवाप्य 'फ्रासीसडे' इत्याख्यो महाशयो मद्रासमवासयत्। बहूनि चात्र देवमन्दिराणि। तेषु ट्रीप्लीकेन,स्थाने प्रसिद्धं वैष्णवानां मन्दिरं पार्थसारथ्यधिष्ठितं वर्त्तते। ततोऽर्धक्रोशमिते दूरे मैलापुर्य्यां कपिलेश्वरजीवस्य मन्दिरं, त्रिवेल्लूरजीवस्य मन्दिरञ्चातिदर्शनीये।

दृश्यानि चात्र-प्रधानन्यायालयः प्रान्तीयशासकस्य भवनम्, आश्चर्यागारं, दुर्गम्, अनाथालयः, राज्ञीपादपावली ( रानीबाग ), पोतविश्रान्तिकेन्द्रम, अबजरवेटरीत्येतत्प्रभृतीनि सन्ति।

बेजवाड़म् —

पौ० कृ० १३ गुरौ उपेयिवांसः।

इदं व्यापारस्य केन्द्रमास्ते। केचन विजयेश्वरमन्ये चेदं दक्षिणकाशीं व्याहरन्ति। अत्र १७६० ईस्वीयवर्षे स्थापितं भग्नावशेषं राजदुर्गं पाषाणं भित्त्वा निर्मितानि हिन्दूनां बौद्धानाञ्च बहूनि मन्दिराणि सन्ति।

राजमहेन्द्री नगरम्—

ततः पौ० कृ० १४ शुक्रे गताः ।

समुद्रात्पञ्चदशक्रोशात्मके पश्चिमोत्तरभागे गोदावरीनद्या वामे तटे उपनगरमिदम् । तत्र अद्भुतागारो महाविद्यालयो राजकीयौषधालयः (अस्पताल) विनोदवाटिका ( पार्क ) ख्रीष्टमतावलम्बिनां प्रार्थनागृहम् (गिर्जाघर) अतिदर्शनीयानि सन्ति । गोदावर्य्याः सप्तानां पवित्रतमानां धाराणां वशिष्ठ-नाम्नी चरमा धारा नरसपुरसमीपेऽन्तर्वेदीस्थानेऽधिसमुद्रं लीयते । सप्तस्वेव धारासु यात्रिणः स्नान्ति ।

वाल्टेयरनगरम्—

ततः पौ० कृ० ३० शनावगुः ।

नगरमिदमतिस्वास्थ्यकरं ( सेनीटोरियम ) समुद्रतटमलङ्करोति । वायुपरिवर्त्तनार्थमत्र शतशो मानवा आगत्य निवसन्ति ।

नृसिंहाचलम्—

वाल्टेयरतः सार्द्धक्रोशद्वयात्मके दूरे एकादशशतं सोपानान्यतिक्रम्य लभ्यं पर्वतस्योपरिस्थितं स्थानमिदम् । श्रूयते यदत्रैव प्रह्लादो भगवन्तं नृसिंहं साक्षादकृत ।

विजगापट्टम्—

पौष शुक्ल १ रवौ जग्मिवांसः ।

विपणिषु प्रधानं स्थानमिदं समुद्रस्योपकूलं विलसति । इदं विशाखपट्टं कार्त्तिकेयस्य नगरं वाऽभिधीयते । अत्र बहवो राजकीयकार्यालया, विद्या-लया राजकीयचिकित्सालयाः ( अस्पताल ) अनाथालयाः, कुष्ठालयाः, ख्रिस्तमतावलम्बिनां प्रार्थनागृहाः ( गिर्जाघर ) इत्यादीनि सन्ति ।

ततः पौ० शु० २ सोमे ययुः—

विजयानगरम्—

अत्रातिरमणीया पण्यवीथिः दुर्गं राजसदनं विद्यालयाः शिबिरञ्च सन्ति ।

जगन्नाथधाम—

ततः पौष शु० ४ कुजे –

अम्भोधिर्यत्र भङ्गैः कलिमलमखिलं क्षालयन्मानवानां
यत्राध्युष्यामरौघा अमरपुरकथाः स्वप्नतो न स्मरन्ति ।
त्यक्त्वा दुग्धाब्धिवासं निवसति विभवैर्यत्र साक्षात्परेशो
जग्मुस्तत्रामलान्ता गुरुवरचरणाः श्रीजगन्नाथधाम्नि ॥ ३३ ॥

उत्कलप्रान्तस्थां पुरीमिमां श्रीक्षेत्रं, नीलाचलं, पुरुषोत्तमक्षेत्रं वा समामनन्ति । कालिकातातः १५५ क्रोशमिते दूरे दक्षिणस्यां दिशि वर्त्तते । हिन्दूनां प्राचीनतममिदं महातीर्थं चतुर्णामेकं धाम ।

श्रीजगन्नाथस्य मन्दिरम्—

धूमयानस्थानात् क्रोशस्य दूरे भारतीयप्रधानमन्दिराणामन्यतमं विशालं मन्दिरमस्ति । श्रूयते यत्–पूर्वं बौद्धैरेवाधिकृतमिदमासीत् किन्तु जगद्गुरुणा श्रीस्वामिशङ्कराचार्येण भगवता स्वावसरे गोबर्द्धनमठं संस्थाप्य स्थानमिदं हिन्दुसादकारि । अयञ्च पूर्वं दक्षिणदेशे तुङ्गभद्रानदीतटे शृङ्गगिरिसविधे शृङ्गेरीतिनामानं मठं संस्थाप्य तत्र पराजितं मण्डनमिश्रं श्रीसुरेश्वराचार्य्यपदेन पश्चादभिधीयमानं मठाधीशं नियुज्य, श्रीजगन्नाथधाम्नि गोवर्धनमठ पद्मपादाचार्य्याधिष्ठितं, द्वारकायां हस्तामलकाचार्य्याधिष्ठितं द्वारकामठं तथा बदरिकाश्रमे तोटकाचार्य्यभास्वरं ज्योतिर्मठं संस्थाप्य सनातनधर्ममुददीधरत् । श्रीजगन्नाथमन्दिरान्नातिदूरे कुष्ठरोगार्तानां ससुखं निवासाय पाटलिपुत्रस्थमहाविद्यालयसंस्थापकेन श्रेष्ठिराममनिरञ्जनदासमुरारकामहोदयेन स्थापितः कुष्ठाश्रमो विद्यते । श्रीजगन्नाथमन्दिरान्तिके विशाला धर्मशालाद्वयी शालते । यत्र यात्रिणः सुखेनावासमासादयन्ति । धर्मशालायां सर्वविधो रुचिरः प्रबन्धो विद्यते । श्रीजगन्नाथमन्दिरं परितोऽन्यान्यपि बहूनि मन्दिराणि सन्ति । येषु विमलादेव्या मन्दिरं स्वर्गद्वारं श्रीगोवर्द्धनमठः, श्वेतमाधवः, श्वेतगङ्गा चातीवोल्लेखनीया । अन्यानि च बहूनि चन्दनतडाग, रोहिणीसरा, इन्द्रद्युम्नतडाग, मार्कण्डेयतडागादीनि, क्रोशार्धमिते दूरे जनकपुरे

विविधानि मन्दिराणि चातिदर्शनीयानि सन्ति। प्रतिवर्षमाषाढशुक्लद्वितीयायां रथयात्रामहोत्सवावसरे दर्शकानां लक्षाधिकानामुपस्थित्या महती मेला सम्पद्यते। अत्र च यात्रिणो दक्षिणां दत्त्वा भगवदर्चकैरर्पितं तीर्थपुरोहितद्वारा ( पण्डा ) सम्प्राप्तं महाप्रसादं भक्तद्विदलादिकं ( भात-दाल आदि ) भुञ्जते। प्रायेण चात्र जातिपङ्क्तिभेदं विहाय सर्वे सहभोजिनो भवन्ति। न चात्र स्पर्शदोषो लेशतोऽपि गण्यते। मलूरदासस्य रोटिकाखण्डः प्रसादत्वेन सर्वैर्गृह्यते। यात्रिणश्छत्रं वेत्रं जगन्नाथबलभद्रसुभद्रामूर्त्यङ्कितं चित्रपटञ्च समानयन्ति।

ततः पौ० शु० ६ गुरौ—

साक्षिगोपालम्—

साक्षिगोपालनामधेयधूमयानस्थानात् क्रोशद्वयमिते दूरे वर्तमानं श्रीजगन्नाथसाक्षात्कारसाक्षिभूतं भगवन्तं साक्षात्कृत्य समभ्यर्च्य च प्रतस्थिरे।

श्रीभुवनेश्वरम्—

ततः पौ० शु० ६ गुरावुपतस्थुः।

शङ्के शिल्पकलाकलापपरमाचार्येण सन्निर्मितं
स्थानं चारुचमत्कृतेरिति जगन्नाथस्य वासाय यत्।
तत्प्राग् द्रष्टुमुपागतस्त्रिनयनो नाद्यावधि प्रत्यगात्
सोऽयं श्रीभुवनेश्वरो विजयते सर्वोच्छ्रिते मन्दिरे॥ ३४॥

स्थानमिदं भुवनेश्वराभिधानधूमयानस्थानात् क्रोशद्वयमिते दूरेऽवतिष्ठमानं एकस्य महतः सरोवरस्य सविधे विराजते। तत्र च म्लेच्छोच्छिन्नप्रतिमानि भग्नावशिष्टानि परसहस्राणि मन्दिराणि विशालाः धर्मशालाश्च सन्ति। काननमध्यमार्गेण यात्रिणः प्रायेण गोरथेन गच्छन्ति।

कटकम्—

ततः पौ० शु० ७ शुक्रे—

उत्कलप्रान्तस्य ( कलिङ्गस्य ) राजधानीं प्रतस्थिरे। अत्र रजतपात्राणि रुचिराणि सम्पद्यन्ते।

ततः पौ० शु० ८ शनौ प्रस्थिताः—

कलकत्ता-महानगरम्—

एकत्र द्रष्टुकामा त्रिभुवननगरीसारमेकत्र कृत्वा
यावच्छिल्पात्मशक्त्या व्यवहितमनसा ब्रह्मणा निर्मिता या।
रक्षार्थं स्थापिता च त्रिभुवनजयिनी कालिका तेन यस्यां
गङ्गाभङ्गोत्तराङ्गा विलसति नगरी कालिकात्ता नु सा किम् ॥ ३५ ॥

भारते प्रसिद्धतमं व्यापारस्य महाकेन्द्रं ब्रिटिशराज्यनगरेषु द्वितीयं नन्दनमिव बङ्गप्रान्तस्य राजधानी जगज्जननिवासभूमिः कालिकात्तामहानगरं जयतितराम् । दृश्यानि चात्र–गङ्गा, गङ्गायामिच्छासेतुः ( पीपे का पुल ) राजराजेश्वरीभवन, ( विक्टोरियाहाउस, ) जीवागारम्, ( चिडिया खाना ) आश्चर्यागारं, ( जादूघर ) राजकीयपुस्तकालयः, ( इम्पीरियललाइब्रेरी ) प्रान्तीयशासकस्य भवनं ( लाटसाहब की कोठी ) प्रधानन्यायालयः, बोटानिकलगार्डेन, रडनगार्डेन, खिदिरपुरडक, जकरियाभील, मल्लिकसाहबस्योद्यानं, चौरङ्गीत्यादिलौकिकभाषया प्रसिद्धानि सन्ति ।

कालीघट्टे महाकाल्याः सविधे चादिगङ्गास्थाने नकुलेशस्य सर्कुलरेतिनामधेयराजपथे परेशनाथस्य च रमणीयानि मन्दिराणि सन्ति ।

कालिकात्तातः क्रोशत्रयात्मके दूरे दक्षिणेश्वरस्यातिरमणीया पादपावली। यत्र गङ्गातटे द्वादश शिवमन्दिराणि सन्ति । श्रीरामकृष्णपरमहंसमहोदयोऽत्रैव भगवन्तं साक्षादकरोत् ।

गङ्गासागरम्—

ततः पौ० शु० १० सोमे मकरसंक्रान्तौ पोतमारुह्य प्रयाताः ।

श्रीमद्भूपभगीरथामिततपःप्राग्भारलब्धोदया
ब्रह्माङ्गुष्ठनखाग्रनर्त्तननटी गङ्गेति या गीयते ।
तस्याः षष्टिसहस्रसागरसुतोद्धाराम्बुधौ सङ्गता
गङ्गासागरसङ्गमो विजयते धारा धरोद्धारिणी ॥ ३६ ॥

एवम्भूतेऽस्मिन्सङ्गमे सुस्नाय भगवन्तं कपिलमुनिञ्चाभिवन्द्य समुद्रमार्गेण पुनः कालिकात्तां निववृतिरे। मकरसंक्रान्तावेव केवलमेकं दिनं यावत् यात्रिणस्तत्र निवसन्ति ।

वैद्यनाथधाम०--

तदनु पौ० शु० १३ गुरौ वि० सं० १९९१ दि० १६-१-३५
ई० वर्षे जग्मुः । योऽयं—

कैलाशादाशुतोषं स्तवनपरवशं रावणो राक्षसेन्द्रो
लङ्कायामानयन् यं प्रकटितविभवं न्यस्तवान्मध्यमार्गे ।
वीर्यादाहर्त्तुकामः पुनरतुलबलो भग्नदर्पो निवृत्तः
कृत्वाङ्गुष्ठाङ्कितं स त्रिभुवनविदितो वैद्यनाथो महेशः ॥ ३७ ॥

अत्र भगवतः शिवस्य विंशतिर्मन्दिराणि सन्ति। तत्र रावणसरोवरादिकं दर्शनीयमास्ते । स्थानमिदञ्चातिस्वास्थ्यकरम् ।

ततः पौ० शु० १४ शुक्रे वि० सं० १९९१ ता० १८-१-३५ ई०-

आसेतोः शङ्कराद्रेः कपिलमुनिपदादाप्रतीचीसमुद्रात्,
यावन्तः सन्ति तीर्थाश्रमनगरनगास्तान् परिक्रम्य कामम् ।
तीर्थात्तीर्थं भ्रमन्तो विविधजनपदान् वीक्षमाणाः समन्तात्,
शान्तस्वान्ता नितान्तं गुरुवरचरणाः पाटलीपुत्रमीयुः ॥ ३८ ॥

अत्र च सम्पादिततीर्थभ्रमणोत्तरकृत्याः कृतकृत्याः तीर्थोपतीर्थकथाकथनोपकथनैरिहस्थान् उपस्थितान् कृतार्थयन्तः कथं कथमपि पञ्चषाणि दिनान्यतिवाह्य—

कृत्वा सर्वाणि तीर्थान्यखिलसुरगणान् पूजयित्वाऽतिभक्त्या,
कृत्यं शास्त्रोक्तमन्यत्सविधि तदनु सम्पादयन्तो महान्तः ।
वृत्तं तीर्थप्रजानां गदितुमिव पुनस्तीर्थराजान्तिकं ते
काशीवासाय किंवा तदनुमतिमहो लब्धुकामाः समीयुः ॥ ३९ ॥

तत्र तीर्थराजे प्रयागे—

भवानुरागा अभवानुरागा विभूतिरागा अविभूतिरागाः ।
सिताऽसितासङ्गमवालुकायां मासं न्यवात्सुस्तृणपर्णकुट्याम् ॥ ४० ॥

श्रीमत्यः पाविताेर्व्यो जनकपुरमयुर्जानकीजन्मभूमिं
वर्षे पीयूषवर्षे नयननवनवैकान्विते ( १९९२ ) विक्रमस्य ।
मार्गे शुक्लेषुतिथ्यां रघुपतिमिथिलाधीशजोद्वाहकाले
हिन्दूनां चारुमेला लगति च महती यत्र लक्षाधिकानाम् ॥ ४१ ॥

चण्डांशून्वयमण्डनः स भगवान् कोदण्डमाखण्डयन्
भूम्याखण्डलमण्डलीमदमदात् भूमण्डलं मण्डयन् ।
खण्डं यत्र चकास्ति तद्धरधनुर्दण्डस्य पिण्डीभवत्
तत्स्थानं धनुषेति लोकवचसाऽप्यन्वर्थमुद्घुष्यते ॥ ४२ ॥

## अथ काशीखण्डम्

हरिहरचरितमपारं पारावारं करिष्णुरिव पारम् ।
हरिहरचरणमुदारं स्मारं स्मारं श्रयामि तरणिमहम् ॥ ४३ ॥

शास्त्राब्धौ दिवि प्रस्थिते शिवकुमाराख्ये बुधे शङ्करः
काशीं को ननु काशयिष्यति सुधीर्धीरो विचिन्तन् ध्रुवम् ।
माध्यस्थ्यात् गुरुनाम्नि मान्यवचनः क्षिप्रं गुरून् प्रैरिरत्
येनैते विरहय्य सर्वविषयान् काश्यै समुत्कण्ठिताः ॥ ४४ ॥

अथ वाराणसीमधिवस्तुं व्यवसितान्तःकरणाः श्रितश्रुतिकरणा गुरुवरचरणा विद्यालयाधीश्वरं श्रेष्ठिसमुदायाधीश्वरं शुभोदयं श्रीमन्तं हीरालालमुरारकामहोदयं सानुजमभिलक्ष्य भवविभवसम्भूतबाधाविनाशाय वाराणसीवासाय स्वीयाभिप्रायं प्रकटयाञ्चक्रुः ।

श्रीलबाबूहीरालालमुरारकामहोदयप्रभृतयो नव भ्रातरो धन्याः ।

हीरालालमुरारकाः समुदितो ज्येष्ठो गुणैरुत्तमः
एवं श्रीयुतनन्दलालविदितो गोविप्रदेवाश्रयः ।
राधेलालमुरारका विजयते गोविन्दवन्दारुको
लल्लूलालमुरारकेतिगदितः कारुण्यवारां निधिः ॥ ४५ ॥

मोतीलालमुरारकाः सुगदितः सद्वंशभूषामणिः
मिश्रीलालामुरारकेतिकथितः कल्याणकल्पद्रुमः ।
चुन्नीलालमुरारका अभिहितः सत्कर्मपूताश्रयः
छोटेलालमुरारका मतिमतामग्रेसरो दीप्तिमान् ॥ ४६ ॥

धर्म्मोद्धारककृष्णलाल उदितो लोकाभिरामो जयी
दाने कर्णसमा दयासु शिविवत् सत्ये हरिश्चन्द्रवत् ।
वृत्त्या यैर्हि विबोधिताश्च विबुधाः सम्मानिताः सज्जनाः
श्रीमद्रामनिरञ्जनस्य तनया एते नवाभ्यर्हिताः ॥ ४७ ॥

यैश्चायं निरपायसंस्कृतमहाविद्यालयो रक्ष्यते
'ब्रह्मा' शास्त्रसमुद्रमन्दरगिरिर्विद्यालये गोपितः ।
'श्रीकान्तः' कविमानमर्दनपटु 'र्गङ्गाधर' इशाब्दिको
मर्य्यादापरिपालनाय निहितः 'श्रीरामरूपः' सुधीः ॥ ४८ ॥

ततः परमाचार्य्याणाम्प्रतिषेधितसांसारिकप्रवृत्तिं संसाधितनिरतिशय-सुखसाधनपरमनिवृत्तिं पुरा सङ्कल्पितां तादृशपावनप्रवृत्तिमवगम्य सानुजः श्रीमान् बाबू हीरालालमुरारकामहोदयः श्रीगुरुवरगतकृपालुतामवलम्ब्य निर्म्मलगुणनिकुरम्बया काशीवासप्रतिषेधयित्र्या परमकृपालुगुरुचरणे स्वात्मनोऽनन्यभक्त्या तथाऽपरशक्तिद्वयसमासादिताभिव्यक्त्या विबुधेन्द्रनरेन्द्रादिवृन्देष्वव्याहतगत्या ब्रह्मणः शक्त्येवामोघशक्त्या श्रीहरिहरगुरुषु तादृशस्वातन्त्र्यशक्त्या चैकान्तवाससंसाधयित्र्या परस्परविरुद्धधर्म्मद्वयदोलायातायातमनुसरन् 'ओम्' 'ने'ति वा विचारसाधने किङ्कर्तव्यताविमूढमात्मान-

मनुभवन् क्षणादेव विद्याचणेऽलौकिकस्वातन्त्र्यमप्रतिहतगति निर्द्धार्य्य सामन्तचक्रशिरोधार्य्यं सार्व्वभौमशासनमिव शिरोधार्य्यं कृत्वा—

'अस्माकम्पूर्व्वजा भक्त्या यत्सदा पर्य्यपालयन् ।
स्वातन्त्र्यन्न विरोत्स्यामि श्रीमतान्तदभीप्सितम्' ॥ ४९ ॥

इत्यभिधाय सततदर्शितसौभ्रात्रैः स्वभ्रातृवर्ग्गैः सादरमनुमोदितः पश्चाशन्मुद्रामितङ्काशीवासनिनिमित्तम्मासिकं साहाय्यं प्रतिज्ञाय हर्षविषादाभ्यामान्दोल्यमानमानसः स्वीयानुमतिदानेन गुरून् सममंस्त ।

इत्थं विद्यालयाधीश्वरेण श्रेष्ठीश्वरेणानुमतिसाहाय्याभ्यां सम्मानितास्तत्र भवन्तो वाराणसीं गन्तुमुपक्रममाणाः सानुजं श्रीहीरालालं समुपहतमालम्—

विख्यातैः स्थापितो यो नृपकुलतिलकैर्विक्रमाशोकभोजै-
रन्यैर्भूपाधिभूपैः श्रितविबुधगणै रक्षितो वर्द्धितश्च ।
अद्यापि त्वत्कुलस्थैरतुलितविभवैः श्रद्धया वर्द्धयमान
आदर्शः शारदाया अवहितमनसा स त्वया पालनीयः ॥ ५० ॥

धर्मस्थितिं तव सदाऽवतु रामचन्द्रः श्रीशङ्करः परममङ्गलमातनोतु ।
पद्मालया वसतु सद्मनि साभिलाषा जीवानुजैस्सह सुतैः शरदां शतं त्वम् ॥ ५१ ॥

इति शुभाशिषा कृतार्थयाञ्चक्रुः ॥

एवं स्ववंशावतंसं मर्यादापुरुषोत्तममिव मर्यादां परिपालयन्तं स्वतनयं ब्रह्मदत्ताभिधानमात्मतुल्यगुणराशिविभूषितमपि गुरुजनोचितं कर्तव्यमनुतिष्ठन्तो गुरुवराः—

वाल्मीकिव्यासमुख्यैर्बुधकुलगुरुभिः पालितो ब्रह्मविद्भिः
काले काले क्रियद्भिर्द्विजकुलपरमाचार्यवर्य्यैरमानि ।
अद्यापि स्थास्नुकीर्त्या धवलितभुवनैर्मार्ज्जितो मालवीयै-
रादर्शः शारदायाः श्रुतमुपदिशता स त्वया सेवनीयः ॥ ५२ ॥

अयं विद्यालयाधीश्वरो धर्म्ये कर्मणि प्रवर्तयितव्यः, दृष्टादृष्टदुरितापहारिमन्त्रदेवताद्यनुष्ठानेन समये संरक्षितव्यः, देवतीर्थाश्रमेषु विश्वासयितव्यश्च ।

विद्यालयोऽयं यथानियमं त्वया सञ्चाल्यः, सञ्चालने न प्रमदितव्यम्, यथावसरं यथापाठं शास्त्रं पाठयितव्यं सावधानतया च च्छात्रेभ्यो यथापठितं श्रोतव्यं, स्खलने च पुनः पुनः साध्ववबोधयितव्यम् ।

इमे चाध्यापकाः सौभ्रात्रगुणेन गणनीयाः, पाठशालीयनियममनुरुन्धानाः साधयितव्याः, कदाचिदपि नावमन्तव्याः ।

इमे चान्तेवासिनः सुतनिर्विशेषं शिक्षणानुग्रहाभ्यां सत्पथे लम्भयितव्याः, पाल्या विबोध्याश्च, अपराध्यन्तोऽपि शिक्षयितव्याः नावमान्याः, जुगुप्सितादौ निर्दयं दण्डयितव्याश्चेत्युपदिश्य ।

चिन्ता शास्त्रे न वित्ते, व्यसनमपि तथा पुस्तके नाक्षबन्धे
सङ्गः सद्धर्मगोष्ठ्यां, न दुरितसदसि, प्रेम सत्येऽनृते नो ।
तर्कः पाखण्डवादे, नतु हरिचरिते धर्ममार्गे प्रवृत्तिः
पूज्ये भक्तिस्तवास्तां सविबुधबटुकः पुत्र ! सिद्धिं लभस्व ॥ ५३ ॥

इत्याशिषा सनाथीकृत्य धूमयानेन वाराणसीं प्रातिष्ठन्त ।

उक्तमर्थं पुनः सोत्प्रेक्षं भङ्गयन्तरेणाह—

ब्रह्माणं ब्रह्मतत्त्वं परममुपदिशद् ब्रह्म यद्वद्विरेजे
ब्रह्माणं बोधयन्तो गुरुवरचरणास्तद्वदेते तदानीम् ।
एकान्ते क्षीरसिन्धौ निवसनमपि किं स्वस्य चित्ते स्मरन्तः
काशीवासाय शीघ्रं जननुतचरणा धूमयानेन याताः ॥ ५४ ॥

गङ्गोत्सङ्गनिषङ्गिलोललहरीलास्योरुरङ्गस्थली
भ्राम्यद्भैरवदण्डमण्डितमही श्रीविश्वनाथाधिपा ॥
प्रेक्षावद्भिरभीक्ष्णमीक्षितमुखी शिक्षासु दक्षैरलं
काशी शुद्धविशुद्धसिद्धनगरी जागर्ति निःश्रेयसे ॥ ५५ ॥

रामे स्वर्गगते शिवे स्वरुदरे दामोदरेऽस्तं गते
तात्याशास्त्रिणि दिव्यलोकशिखरे गङ्गाधरे स्वर्धरे ।
अन्येषामपि सर्वशास्त्रविदुषां वर्गे गते द्यां, नता
काशी पण्डितकेसरिप्रणयिनी तूर्णं गुरूनाश्रयत् ॥ ५६ ॥

गङ्गोपकण्ठे श्रुतनीलकण्ठे सोत्कण्ठितैरर्चितनीलकण्ठैः।
सन्मन्दिरे सुन्दर एव राधाकृष्णस्य लब्धोऽधिनिवास एतैः॥ ५७॥

द्विशक्तिरोदर्यौ च सुरद्रुयी न किं कृपालुतायाः अवरोधनेऽक्षमा।
यतो हि साऽद्यावधि नैकसंस्थितिः सदाऽर्थिभिः सर्वगता विलोक्यते॥ ५८॥

गुरुभिर्विहिताश्रङ्गा गङ्गा पीयूषवाहिनी।
पण्डिता मण्डितास्सर्वे शङ्करः शङ्करोऽभवत्॥ ५९॥

पूर्णविद्यालया काशी पूर्णविद्यालयाऽभवत्।
गुरूणां सन्निधानेऽसौ सर्वविद्यालया पुनः॥ ६०॥

अथापरिच्छिन्नाचिन्त्यापरिमेयनिरञ्जनविज्ञानघने निरुपमनिरतिशयानिर्वचनीयानन्दैकरसे परे ब्रह्मणि सञ्चितप्रारब्धादिनिखिलकर्मजातजननीं गमागमविधायिनीं वासनामत्यूह्य निगमनिष्ठ्यूतोपनिषन्निर्ष्कर्षसर्वस्वं स्वानुभवोपोद्बलितं समाहितमनसा आत्मन्येव तादृशमलौकिकं परं ज्योतिर्ध्यायन्तो निरस्तनिखिलकुहकदुर्विलासा निर्ममनिरहङ्कारा निर्द्वन्द्वाः निर्मत्सरास्तप आरेभिरे।

कर्मविलोपशङ्कया चावश्यं नित्यकर्तव्यमितरान् बुबोधयिषन्तो ब्राह्म एव मुहूर्त्ते प्रबुध्य कृतनित्यक्रियाः प्रतीक्षमाणामिव गम्भीरधारया धीरगामिनीममरकल्लोलिनीं विमलमवगाह्याञ्जलिनाऽरुणकिरणमुपस्थाय गाङ्गं जलमादाय तेन स्नापयित्वा विश्वनाथं पूजोपहारेण विधिनाभ्यर्च्य सूक्त्या संस्तुत्याभिवन्द्य ततः प्रतिनिवृत्य स्वावासदेशं बद्धासना अहरहरनुष्ठीयमानं स्वावश्यं कर्तव्यजपादिकमनुतिष्ठन्तो ललाटन्तपे सप्तसप्ताववसितनित्यकर्तव्या भव्याविसृज्य क्षणं विश्रम्य पुनर्वेदान्तचिन्तनपरा आगतान् त्रिगुणातीतान् साधून् अद्वैतसंन्यासिनोऽनेकांश्च विबुधच्छात्रान् सम्यगवबोधयन्तः सानन्दं समयं नयन्त आसते।

अथ श्रुतपूर्वामप्येतेषां सर्वतन्त्रस्वतन्त्रतामध्यापनकलाञ्च तदानीमधीयमानानामनेकशास्त्रवित्तानां बहुविद्वद्बटूनां मुखादलौकिकशास्त्रीयज्ञानमद्भुतपाठनपाटवञ्च भूयो भूयः श्रुत्वा प्रमोदपाथोधौ प्लवमानमानसैस्तत्रस्थगौरी-

शङ्करमहाविद्यालयाध्यक्षैस्तत्प्रबन्धकर्तृभिः, पं० चण्डीप्रसादसुकुलमहोदयेन चाध्यापकपदाङ्गीकारेण महाविद्यालयं सनाथयितुं भूयोऽभ्यर्थिता विद्यालङ्काराः 'मया हि शान्तिमयं जीवनं यापयितुमत्र कामारिपुर्यामागतम्—अध्यापनादिसेवावृत्तिस्तु पारतन्त्र्यसाधनेन स्वातन्त्र्यबाधनेन च शान्तेरेकान्तबाधिका। स्वतन्त्रतैव हि शान्तिजननी। मम हृदयञ्च स्वतन्त्रताया एकान्तपक्षपाति, तदानीमपि तत्र ( पाटलिपुत्रस्थिते ) महाविद्यालयेऽध्यापयतो मम नाणुरपि स्वातन्त्र्यविघातोऽभूत्।

'एवं मध्याह्नमार्तण्डेनैव मत्कर्तृकपूजनस्य नीराजनं सम्पाद्यते। साचायमपरो हेतुः' इति कथङ्कारमहमिष्टपरिपन्थिनं पन्थानमाश्रित्य युष्मान् प्रसादयेयमित्यभिधाय विरताः विद्याचार्याः सर्वैरेकस्वरेण 'अत्रापि स्वतन्त्रा एव भवन्तः' इति सादरमभ्यर्थिताः कथं कथमपि तत्पदमलङ्कृतवन्तः। अथ गतेषु कियत्स्वेव मासेषु तस्य महाविद्यालयस्यैते प्रधानाध्यक्षाः सञ्जाताः।

योऽयं विद्यालयः—

साङ्गोपाङ्गरहस्य, दर्शनकला, वेदाः, स्मृतीनां ततिः,
काव्यं, कल्पयुगेतिहासनिकरस्तन्त्रं पुराणादिकम्।
साहित्यं किल संस्कृतस्य निखिलं यत्रानिशं पाठ्यते,
गौरीशङ्करनामतो विजयते काश्यां स विद्यालयः॥ ६१॥

अत्र च महाविद्यालये महान् पुस्तकालयो विलसति यः खलु स्वोदरस्थैरन्तर्विद्योतयद्भिरसंख्यैः सद्ग्रन्थरत्नैः प्रत्नैर्वैदूर्येन्द्रनीलादिभी रत्नै रत्नाकरो भुवनतलस्येवास्यासमां सुषमां वर्द्धयन् सर्वोच्चतां सूचयति। वृत्त्यावासादीनां पूर्णतया साहाय्यं प्राप्य सानन्दं साध्वधीयानाश्चतुश्शत्याः परे छात्राः सुसन्नद्धाः सैनिकाः सार्वभौमस्येवास्य प्रभावातिशयं दर्शयन्तो जयन्ति। अध्यापकाश्च पञ्चविंशतिः।

स्वयशोराशिभिरेवोन्नतैरभ्रंकषैः सौधशिखरैः समुन्नतस्य सुरतरङ्गिणीतरलतरङ्गपरिमार्जितपदस्य किमन्यत् साक्षाद्गौरीशंङ्कररक्षितस्यास्य वक्तव्यम्।

विद्यादानादजस्रं गुरुवरचरणा देशमुत्थापयन्तो
नित्यानुष्ठीयमानेर्व्रतजपनियमैर्धर्ममुद्धारयन्तः ।
संवासादेव मुक्तिं त्रिपुरहरपुरे बोधयन्तो वसन्तो
विश्वेशं सेवमाना जनमनसि सुरान् भावयन्तो जयन्ति ॥६२॥

भूदेवा अपि देवसेवनपरा एकेऽप्यनेकाश्रयाः
स्वातन्त्र्याश्रयिणोऽपि धर्मवशगाः सौम्याश्च रुद्राशयाः ।
वेदान्तस्य नितान्तचिन्तनपराः सद्वेदमार्गानुगा
लब्ध्वा लौमशमायुरद्भुततमा एते चिरादिन्धताम् ॥ ६३ ॥

सन्तः सन्तु दुरन्तरन्तकरणाः सुस्वान्तसन्तानकाः
पाषाणोरुधियः कुशाग्रधिषणान् कुर्वन्तु विद्वज्जनाः ।
वाचा धर्मसुधामुचा भुवि शिवं वर्षन्तु सद्वाग्मिनो
भूपालाः कलयन्तु नीतिसरणिं कल्याणमालालयाम् ॥ ६४ ॥

मूका यान्तु च वावदूकपदवीं सर्वज्ञतां बालिशा
आस्तिक्यं दृढनास्तिका ध्रुवमरं ब्रह्मज्ञतां साधवः ।
प्रीयन्तां लघुना दयालुगुरवो बन्धेन शुद्धाशया
देशोऽयं श्रयतां कृपालुगुरुतो विद्यागुरुत्वश्चिरम् ॥ ६५ ॥

आस्तां सत्कृतिलम्भिताऽवनिभुजां लक्ष्मीरमन्दादरा
भूयात् सर्वविदां दिगन्तजयिनी विद्या विवेकोद्धुरा ।
साध्वास्ताममृतप्रसूरसवती पूता कवीनां गिरा
जीयान्मत्कृतिरप्यसौ गुरुकृपापीयूषवृष्ट्याऽजरा ॥ ६६ ॥

यावद् विरिञ्चेर्जयति प्रपञ्चो यावद्धरा शेषफणाऽवलम्बा ।
यावद् रवेर्भा भुवने विभाति तावन्मुदं सन्तनुतां प्रबन्धः ॥ ६७ ॥

काव्यं श्रीरघुनन्दनस्य सरलं विज्ञायतामर्थतः
शब्दाडम्बरशून्यमेतदिति नो विद्वद्वरैस्त्यज्यताम् ।

क्षन्तव्यं कृपया कृपालुगुरुभिः स्वाज्ञानतो यन्मया
मालिन्योपहतप्रभे कुपिटके रत्नोच्चयः सञ्चितः ॥ ६८ ॥

काव्यं काव्यकलाधुरीणविदुषां सन्तर्पणायास्तु तत्
सङ्क्षेपाद् गुरुदेवजीवनचरित्राख्यं कृतं यन्मया ।
दुःशक्यं गुरुदेववृत्तरचनाचातुर्य्यपारम्परी-
पारावारतटोपकण्ठगमनं का नाम पारक्रिया ॥ ६९ ॥

वेदानां वचसां हृदामविषयो ब्रह्माभिधीयेत चेत्
सर्वैराप्तवचोभिरेव कृतिभिस्तद्वत् प्रवृत्तिर्मम ।
ब्रह्माख्यानविधिर्मुदे सुमनसां जायेत लोके यदि
तर्ह्येषोऽपि भविष्यति ध्रुवमहो बन्धः सतां प्रीतये ॥ ७० ॥

श्रेयोऽर्थी रघुनन्दनो गुरुकृपाकल्याणकल्पद्रुम-
च्छायाभ्यस्ततपःप्रभावपयसा सङ्क्षालितान्तर्मलः ।
पूज्यश्रीगुरुदेवपावनकथामादर्शभूतां सतां
स्तोकैः कोमलगद्यपद्यकुसुमैर्भक्त्या समभ्यार्चिषम् ॥ ७१ ॥

घनस्कन्धं माद्यद्भुजगपतिभीमोरुभुजभृत्
कपाटीयद्वक्षःस्थलमतुलवीर्योर्ज्जिततमम् ।
पयःसान्द्रप्रोद्यन्नवजलधरध्वानमभयं
घनश्यामं ध्याये निखिलगुणधामार्चितवपुः ॥ ७२ ॥

अष्टाङ्कनन्दविधुविक्रमवत्सरीये
मासे त्विषे शुभतिथौ विजया-दशम्याम् ।
एषा सुपूर्तिमगमद् रघुनन्दनस्य
स्वल्पाकृतिर्गुरुचरित्रमयी पवित्रा ॥ ७३ ॥

विहार - प्रान्ते पितृतीर्थपत्तनात्
समीरकोणे गुणयोजनान्तरे ।

पुनः पुनातीरपुरःप्रतिष्ठितं
पुरं हि कल्याणपुरं द्विजन्मनाम् ॥

श्रीमद्रामफलस्य तत्र विदुषो
वात्सल्यविश्रान्तिभूः ।
कारुण्यार्णवधर्ममूर्तिजननी
स्नेहैकतन्तुस्तथा ॥

दिष्ट्याऽपुर्णगुणोऽप्यहो गुरुकृपा
पीयूषपानाग्रणी-
र्नाम्नाऽहं रघुनन्दनो मम कृति-
र्भूयात् समेषां मुदे ॥

इति गयामण्डलान्तर्गतकल्याणपुरवास्तव्येन सरयूपारीणब्राह्मणवंशावतंसेन
व्याकरण-साहित्याचार्येण पं० श्रीरघुनन्दनत्रिपाठिना
विरचिते 'हरिहरचरिते' उत्तरकाण्डं सम्पूर्णम् ।

*समाप्तं चेदं हरिहरचरितं*
*चम्पूकाव्यम्*



# द्वितीयो भागः

## प्राभाकरमीमांसक-सम्मतपदार्थसंग्रहः

श्रीसुब्रह्मण्यशास्त्री

( प्राध्यापकः, काशीहिन्दूबिश्वविद्यालय, वाराणसी )

प्राभाकरमते अष्टौ पदार्थाः प्रसिद्धाः । यथा—द्रव्यम्, गुणः, कर्म, सामान्यम्, समवायः, शक्तिः, संख्या, सादृश्यञ्चेति ।

प्राचीनपद्यमेकं मानमेयोदयकारेण नारायणभट्टेन प्रमेयनिरूपणावसर उद्धृतमस्ति—

द्रव्यं गुणः कर्म च जातिशक्ती सादृश्यसंख्ये समवाय एते ।

अष्टौ पदार्था इह तान् विभज्य संक्षिप्य वक्ष्यामि गुरोर्मतेन ॥ इति ।

प्रकरणपञ्चिकायाममृतकलानामकस्य पञ्चमप्रकरणस्य व्याख्यानरूपं प्रमाणपारायणाख्यं षष्ठं प्रकरणं दृश्यते । एवं प्रमेयपरायणेनापि शालिकनाथकृतेन भाव्यम् । परन्तु नोपलभ्यते । उपर्युद्धृतं पद्यं तत्रत्यं वेत्यूहितुमस्त्यवकाशः । न तु निश्चये ।

### द्रव्यनिरूपणम्

समवायिकारणं द्रव्यमिति द्रव्यलक्षणम् । तानि पृथिव्यापस्तेजोवायुराकाशः कालो दिगात्मा मन इति नव द्रव्याणि । तत्र गन्धवती पृथिवी । शीतस्पर्शवत्यआपः । उष्णस्पर्शवत्तेजः । अपाकजानुष्णशीतस्पर्शवान्वायुः । तानि चतुर्विधानि द्रव्याणि । नित्यानित्यरूपेण द्विविधानि । परमाणुलक्षणानि नित्यानि । द्व्यणुकत्र्यसरेण्वादयोऽनित्याः । परमाणुद्व्यणुकयोरनुमानमेव प्रमाणम् । तत्रास्माकं पृथिव्यादिकं चतुर्विधं द्रव्यं गुणकर्मणां समस्तानां कारणम् । तत्र पृथिव्यादीना चतुर्णा नित्यानित्यरूपेण द्वैविध्यमस्ति । परमाणुलक्षणं नित्यम् । कार्यलक्षणं त्वनित्यम । तेन वायुपर्यन्तानां पृथिव्यादीनां चतुर्णामेवारभ्यारम्भकत्वम्, नाकाशादीनां तेषामारम्भशक्त्यभावात् । शक्त्यभावोऽपि निष्क्रियत्वादमूर्तत्वादस्पर्शत्वाच्च । तेनाकाशादीनां नित्यत्वमेव, नानित्यत्वम् ।

### परमाणुसद्भावे प्रमाणोपन्यासः

परमाणुसद्भावे चानुमानमेव प्रमाणम् । प्रयोगस्तु लोष्टादिष्ववयेष्वणुत्वातिशयोऽवधिमान् परिमाणानिशयत्वात् महत्त्वातिशयवत् । ततोऽल्पपरिमाणतारतम्यस्या-

वधिभूमिः परमाणुरित्युच्यते। स च नित्यः निरवयवत्वात् आकाशवत्। सच निरवयवः अल्पपरिमाणतारतम्यस्यावधित्वात्। यत्सावयवम् तत् अल्पपरिमाणावधि भूतं न भवति यथा तन्त्वादयः। यद्वा स च निरवयवः परिमाणातिशयस्यावधित्वात् महत्परिमाणावधिभूताकाशवत्। अतो नित्या निरवयवाः परमाणवः। यत्त्वणूनां नित्यत्वं सावयवत्वं चानुमानादुक्तं तत् धर्मिग्राहकप्रमाणबाधितम्।

## परमाणुद्वयसंयोगस्य क्रियाजन्यत्वं तत्रादृष्टकारणमिति साधनम्।

तत्र परमाण्वोः संयोगः क्रियाजः संयोगाजन्यत्वे सति संयोगत्वात् तन्तुतुरीसंयोगवत्। संयोगाजन्यत्वमसिद्धमिति चेत्। मैवम्। निरवयवद्वयस्य संयोगज संयोगानुपपत्तेः। सर्वत्रावयवसंयोगपूर्वकत्वात् संयोगस्य। तच्च परमाण्वोराद्यं कर्म पुरुषविशेषगुणकारितं नोदनाभिघातसंस्काराजन्यत्वे सति कर्मत्वात् पाणिकर्मवत्। तत्राप्यदृष्टाख्यविशेषगुणकारितमेव परमाणूनामाद्यं कर्म। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारेभ्यो व्यतिरिक्तपुरुषविशेषगुणकारितम् प्रयत्नादीनामभावे सति पुरुषविशेषगुणकारित्वात्। यदभावे यदुत्पद्यते, तत् ततोऽव्यतिरिक्तकारणम्, यथा तन्त्वाद्यभावे घटः तद्व्यतिरिक्तजन्यः। ततश्च प्रयत्नाद्यभावे कर्मकारणमदृष्टमेव।

तच्चादृष्टं स्वाश्रयसंयोगापेक्षमाश्रयान्तरे कर्मारभते, एकद्रव्यत्वे सति क्रियाहेतुत्वात् गुरुत्ववत्। यथा गुरुत्वं तोमरस्य आद्यतिर्यग्गतिकारणभूतं स्वाश्रयस्य तोमरसंयोगमपेक्ष्यैव कर्मारभते, तद्वदिहाप्याद्यस्याद्यकर्मकारणत्वम्, अदृष्टवदात्मसंयोगादेव। ततश्च परमाणूनां सुखदुःखप्रापणसमर्थाददृष्टवदात्मसंयोगादाद्यं कर्म जायते। ततश्च परस्परसंयोगः परमाण्वोर्जायते। ततश्च संयुक्ताभ्यां द्वाभ्यां परमाणूभ्यां द्व्यणुकसिद्धिः। प्रयोगस्तु द्व्यणुकावयवी एकद्रव्यारब्धो न भवति कार्यद्रव्यत्वात् घटवत्।

## तत्र शङ्कासमाधाने

नन्वतीन्द्रियेषु अपेक्षाबुद्ध्यभावात् द्वित्वोत्पत्त्यभावेन द्वाभ्यामुत्पत्तिरिति नोपपद्यते। मैवम्। द्वित्वोत्पत्तियोग्यस्य सद्वितीयस्यारम्भकत्वाभ्युपगमात्।

ननु त्रयाणामणूनामारम्भकत्वं किमिति न भवति। उच्यते। तथात्वे तदारब्धेन द्रव्येणावयवबहुत्वात् महता भवितव्यम्। अतो नित्यैस्त्रिभिः परमाणुभिः आद्यमहदुत्पत्ति-

१ न्यायसिद्धिकारमतं स्वग्रे वक्ष्यामि।

रिति भवदभिप्रेतं न स्यात् । तथाहि—महत्कार्यभूतघटाद्युत्पत्तौ तत्परिमाणापेक्षया अल्पपरिमाणस्य कार्यद्रव्यस्यैव कारणत्वं लोके दृष्टमिति त्रिभिरारब्धं महत्कार्यं कार्येणैव जन्यते । महत्त्वे सति कार्यद्रव्यत्वात् घटवदिति प्रसज्यते । अतो द्वाभ्यामेवाद्य-कार्यस्योत्पत्तिः न त्रिभिरिति युक्तम् ।

ननु यथा कार्यद्रव्यात् कार्यद्रव्यं महत् घटादिकं दृष्टम् । तथा महत्त्वोपेतादेव कार्यद्रव्यात् कार्यमहदुत्पत्तिर्दृष्टैव । अतः कारणभूतस्यापि महतः उत्पत्तिरन्यस्मान्महतः, तस्याप्यन्यस्मादिति दर्शनबलादाश्रयणीयम् । मैवम् । तथात्वे सर्वेषां तुल्यकारणत्वाविशे-षेण प्रकर्षाप्रकर्षहेत्वोः कारणसंख्याभूयस्त्वाभूयस्त्वयोरसम्भवात् कार्यकारणयोरपि तुल्यपरिमाणत्वापत्तिः । सा चानिष्टा । अस्ति च कार्यकारणयोः अनन्तावयवत्वेन तुल्यपरिमाणपरिहारार्थं कारणस्य कार्यादल्पपरिमाणत्वमास्थेयमिति, महत्कार्योत्पत्तौ तत्परिमाणापेक्षयाऽल्पपरिमाणकार्यद्रव्यस्यैव कारणत्वमास्थेयम् । सति चैवं प्रत्यक्षद्रव्याणां यदल्पपरिमाणम् तत त्रसरेणुः त्र्यणुकमिति चोच्यते । तत्त्रिभिर्द्व्यणुकैरारभ्यते न द्वाभ्याम् । अवयवमहत्त्वाभावे अवयवबहुत्वेनैव महत्त्वोत्पत्तेः । तत्रापि त्रिकेणैवोपपत्तेर्नाति-बहुकल्पना न्याय्या ।

## तत्रैव हेत्वन्तरस्योपन्यासः

किञ्च द्व्यणुकचयेनैव महावयवव्युत्पत्तौ तद्विनाशे नियमेनाल्पतरतमादिभावे नान्व-यदर्शनानुपपत्तिः स्यात् । तस्मात् त्रिभिरेव द्व्यणुकैस्त्रसरेणुरुत्पद्यते । स च महान् अवयवी बहुत्वात् । द्व्यणुकाख्यं कार्यं महत्त्वरहितं आरम्भकद्रव्ये सति अस्मदादीनामप्रत्य-क्षत्वात् परमाणुवत् । ततश्चकार्यपरिमाणारम्भकादल्पपरिमाणं कारणस्येति द्व्यणुक-स्याणुपरिमाणम् । अनेनैव न्यायेनाणुत्वपरिमाणापेक्षयाऽल्पपरिमाणं परमाणुत्व-मिति द्व्यणुककारणयोः परमाणुत्वसिद्धिः । तत्र द्व्यणुकं अधिकावयवव्यपेक्षया ह्रस्वा-न्तराभावात् ह्रस्वापेक्षणाच्च दीर्घस्य ।

परमाणुः न ह्रस्वः किन्तु परिमण्डलं निरतिशयास्पदिकावच्छिन्नत्वात् । तस्या-वच्छेदकस्य वैषम्ये च प्रमाणाभावात् सर्वतः समत्वात् द्व्यणुकस्य । तत्र न तत्परमाण्वा-रब्धस्य परमाण्वोर्द्विगुणदिक्परिच्छिन्नस्य परिच्छेदकवैषम्यानुमानात् ह्रस्वसिद्धिः । प्रत्यक्षावयविषु क्रमिकावयवारब्धेषु वैषम्यदर्शनाभावात् । ततश्च परमाण्वोः संयोगभाजो-

रपिक्रमः एकमूर्त्तद्रव्यावरुद्धदेशे तदैवान्यस्य स्थित्ययोगात् । अत एव सर्वतस्संश्लिष्टत्वेनानेकपरिमाणानुपपत्तिरिति यदुक्तं तदपि परिहृतमेव । स्पर्शद्रव्यस्यान्योन्यमन्तःसंश्लेषाभावाद् । तत्र द्व्यणुकेषु संयोगभूतकर्मदिगनुसारेण क्रमभेदात् समविषमचतुरस्रदीर्घावयव्यारम्भ उन्नेयः ।

तदेवमारम्भकचतुर्विधद्रव्यं गुणकर्मणां समस्तानां कारणम् । आकाशदिगात्मानो गुणानामेव कारणम् । मनो ह्यवयविद्रव्यञ्च गुणकर्मणामिति विशेषः । तत्र चावयविनः एकैकावयवगुरुत्वसमवाय एव न गुरुत्वान्तरम् येन फलद्वैगुण्यं स्यात् । अन्त्यावयविन्यपि द्व्यणुकादिक्रमेण परमाणगुरुत्वमेव । एवञ्च तेन तस्याद्दष्टवशादुत्पन्नोऽवयवी त्रिविधः शरीरेन्द्रियभेदात् । भोगायतनं शरीरम्, भोगसाधनानीन्द्रियाणि । सर्वं वस्त्ववभासमानं विषयशब्देनोच्यते ।

## पृथिवीनिरूपणम्

तत्र गन्धवत्त्वं पृथिव्या लक्षणम् । सा च पृथिवी गन्ध-रस-रूप-स्पर्श-परिमाण-गुरुत्वनैमित्तिकद्रवत्वसंस्कारसंयोगविभागपरत्वापरत्ववती । एवंविधायाः कार्यं ( त्रिविधं ) शरीरेन्द्रियविषयसंज्ञकम्, प्राणापानादिचेष्टाश्रयं, भोगसाधनेन्द्रियाश्रयं शरीरम् । इन्द्रियं गन्धव्यञ्जकं घ्राणं, विषयस्तु मृदादिः ।

## जलनिरूपणम्

अपाकजरसवत्त्वं शीतस्पर्शवत्त्वं वा जललक्षणम् । सांसिद्धिकद्रवत्वरसरूपस्पर्शसंख्यापरिमाणसंयोगविभागपरत्वापरत्वसांसिद्धिकद्रवत्ववेगस्नेहवत्य आपः । कार्यमपि तासां द्विविधमेव विषयेन्द्रियभेदात् । विषयस्सरित्समुद्रकरकादीनि इन्द्रियं रसोपलम्भकं रसनम् ।

## तेजोनिरूपणम्

उष्णस्पर्शवत्तेजः । रूपस्पर्शपरिमाण संयोगविभागपरत्वापरत्वलघुत्ववेगवत्त्वान्नवगुणं तेजः । कार्यविषयेन्द्रियविभागेन द्विविधमेव । विषयस्तु धूमध्वजादिः । इन्द्रियं रूपव्यञ्जकं चक्षुश्शब्दाभिधेयम् ।

## वायुनिरूपणम्

अपाकजानुष्णाशीतस्पर्शवान् वायुः । तत्र कार्यं त्रिविधम् इन्द्रियविषयप्राणसंज्ञकम् । इन्द्रियंविभागस्पर्शोपलम्भकं स्पर्शनम् । सर्वशरीरव्यापि । विषयस्तु तिर्यग्गमन-

स्वभावो वायुः प्राणः अन्तश्शरीरे रसमलधातूनां प्रेरणादिहेतुः एकस्सन् क्रियाभेदाद-पानादिसंज्ञां लभते । एवं पृथिव्यादीनि चतुर्विधानि द्रव्याणि नित्यानित्यस्वरूपेण द्विविधानि । तत्र परमाण्ववस्थानि द्रव्याणि नित्यानि सकारणकत्वात् द्व्यणुकादीन्य-नित्यानि कादाचित्कत्वात् । त्रसरेण्वादीनां महतां प्रत्यक्षं प्रमाणम् । तत्रापि स्पर्शवन्महत् स्पार्शनम् रूपवन्महत् चाक्षुषम् । ततश्चपृथिव्यप्तेजसां त्रयाणां महत्त्वात् रूपवत्त्वात् स्पर्शवत्त्वात् चक्षुःस्पर्शनाभ्यां ग्रहणम् । वायोस्तु महतः स्पर्शेन्द्रियग्राह्यत्वमेव । परमाणु-द्व्यणुकयोस्त्रसरेण्वादिकार्यद्रव्यलिङ्गकानुमानमेव प्रमाणमिति ।

## आकाशादिनिरूपणम्

तत्र शब्दपरिमाणसंयोगविभागवान् आकाशः । शब्दगुणानुमेयमाकाशद्रव्यमिति तत्त्वालोकनामकेऽष्टमे प्रकरणे शब्दलक्षणगुणानुमेयत्वादित्यादिग्रन्थेन वक्ष्यते । दिक्काला-वनुमेयावेव । तथाहि—विभुभ्यो नित्येभ्यश्च व्यतिरिक्तेषु सर्वेषु वस्तुषु इदमच्छेद्यं दृश्यते । "इतः प्रागितश्च प्रत्यक्" इत्येकम् । "अद्येदं न ह्यः न श्वः" इत्यपरम् । तत्र हेतुद्वयेन भवितव्यम् । तत्र प्रागित्यादिकावच्छेदहेतुर्दिगित्युच्यते । अवच्छेदान्तर-हेतुः काल इति । परिमाणसंयोगविभागवन्तौ दिक्कालौ । तत्र चतुर्णां आकाशात्मकाल-दिशां नित्यत्वं निरवयवत्वं अस्पर्शत्वं सर्वगतत्वं परममहत्त्वं विद्यते । अगत्वा सर्वमूर्ति-मद्भिः युगपत्संयुज्यमानत्वं सर्वगतत्वमित्युच्यते । सर्वसंयोगिसमानदेशत्वं परममहत्त्व-मित्युच्यते । मनसोऽपि नित्यत्वं निरवयवत्वं अस्पर्शत्वं विद्यते । नवैव द्रव्याणि तत्रैव वृद्धव्यवहारे द्रव्यशब्दप्रयोगात् । तेषामनुगतं लक्षणं स्वात्मनि कार्यारम्भकत्वमित्युक्तमेव ।

तत्र रूप-रस-गन्ध-स्पर्श-परिमाण-पृथक्त्व-संयोग-विभाग परत्वा परत्व-गुरुत्व-द्रवत्व संस्कारवती पृथिवी, रूप-रस स्पर्श-द्रवत्व-स्नेह परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-परत्व-गुरुत्व-संस्कारवत्य आपः, रूप-स्पर्श-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-परत्व-लघुत्व-संस्कारवान्वायुरित्येवं चतुर्विधं द्रव्यमैन्द्रियकमिति । तथाविधद्रव्योदये कारणम् तत्र प्रमाणञ्च जातिनिर्णये निर्णीतमित्याह—स्पर्शवन्महत्त्वयुक्तमिति ।

तथा शब्दगुणानुमेयमाकाशमित्यात्मवादे प्रतिपादयिष्यते । तच्च नित्यं निरवयव-त्वात्, तच्च निरवयवं अस्पर्शद्रव्यत्वात् तच्चास्पर्शं विभुत्वात्, तच्च विभुकारण-गुणपूर्वकविशेषगुणाश्रयत्वे सति महत्त्वात् आत्मवदिति सर्वत्र दृष्टान्तः । तच्च महत प्रत्यक्षविशेषगुणाश्रयत्वात् घटादिवत् । तच्चैकमेव, एकस्यैव नानाश्रयत्वसम्भवात् कल्पना-लाघवाच्च, तस्य गुणाः । क्रमशः

# वेदरक्षणे शिक्षायाः स्थानम्

श्रीपट्टाभिरामशास्त्री विद्यासागरः
( प्राध्यापकः, वाराणसेयसंस्कृतविश्वविद्यालय, वाराणसी )

भारतस्य प्राणा वेदाः । प्राणिमात्रस्य स्वस्वप्राणाः प्रियतमा भवन्ति । अतस्तद्रक्षणे सर्वो भवति जागरूकः । न केवलं स्वप्राणानेव रक्षितुं यतन्ते मानवाः, किन्तु स्वसम्बन्धिनामपि तान् । मानवमात्रस्य भारतेन जन्यजनकभावस्स्पष्टः । जनकस्य मातुर्वा प्राणाः सुतै रक्षणीया इत्यत्र भारतीयेषु न कोऽपि विप्रतिपद्येत । विश्वस्य जगतो महानिधिरयं वेदो नाम । उच्चावचं पूर्वजैः प्रवर्तितानां विद्यास्थानानां धर्मस्थानानाञ्चोद्गमस्थानं वेदः । अक्षय्यमुक्तावाप्तये परमं साधनं वेदः । सच्चारित्र्यस्य संस्कृतेश्चायं गुरुरिव ग्राहको वेदः । कुमार्गगामिणां मानवानामुपदेशक इव सन्मार्गप्रदर्शको वेदः । वेदसम्बन्धेनैव भारतं वर्षं सकललोकस्पृहणीयमनितरसाधारणं गौरवमाबिभर्ति । अत एतादृशस्य महाफलस्य वेदस्य रक्षणं भारतीयानां मुख्यं कर्तव्यम् । तदस्य वेदस्य रक्षणमध्ययनाध्यापनैकसाध्यम् । ग्रन्थानां प्रकाशनमात्रेण वेदो न रक्षितो भवेत् । यन्त्रद्वारा वेदमन्त्रान् परिगृह्य निक्षेपणमात्रेण न जायेत वेदरक्षा । अध्ययनञ्च छात्राधीनम्, अध्यापकाधीनञ्चाध्यापनम् । छात्राभावप्रयुक्तोऽध्यापकलोपः, अध्यापकाभावप्रयुक्तश्च छात्रलोपः । उभयोर्मिथस्सापेक्षता । अत एव मीमांसका अध्ययनमिति पदस्य गुरुमुखोच्चारणानूच्चारणमर्थं इत्यवधृतवन्तः । तदिदमध्ययनं ग्रहण-धारण-जपभेदेन त्रिविधम् । प्रत्यध्ययनं सन्त्युच्चावचभङ्गानि, यानि च शिक्षाग्रन्थैरुपदिश्यन्ते ।

तत्र शाखाभेदेन तदङ्गानामपि भिन्नत्वात प्रतिशाखं शिक्षाग्रन्थोऽपि व्यास-नारद-पाणिनि-याज्ञवल्क्य-भरद्वाजप्रभृतिभिर्महर्षिभिर्भेदेन प्रवर्तितः । एतेषु शिक्षाग्रन्थेषु कानिचन साधारणानि, असाधारणानि च कानिचनाङ्गानि प्रतिपादितान्युपलभ्यन्ते । असाधारणयश्च शाखाभेदावद्योतकमिति नैषां मिथो विरोधावसरः । वेदाङ्गेषु षट्सु त्रीणि वेदार्थप्रतिपादनौपयिकानि त्रीणि च शब्दस्वरूपप्रतिपादनौपयिकानि । तेषु शिक्षाग्रन्थाः 'वर्णः स्वरः मात्रा बलं साम सन्तानः इत्युक्तश्शीक्षाध्यायः' इति तैत्तिरीयश्रुत्यनुसारं प्रवृत्ताः । शिक्षाग्रन्थेषु प्रतिपादिता नियमा अध्ययनव्यापारावसरे छात्रैरध्यापकैश्चानु-

सर्तव्या भवन्तीत्यध्ययनाङ्गं शिक्षा, तद्द्वारा वेदस्याप्यङ्गं भवति। शब्दादर्थावबोधं प्रति प्रथमं शब्दज्ञानमावश्यकमिति सर्व एव शास्त्रकारास्स्वीकुर्वन्ति। तत्र 'स्वाध्यायोऽध्येतव्यः' इति विहितस्य स्वाध्यायाध्ययनस्य फलं विचारयन्तो मीमांसकाः पूर्वपक्षेऽक्षरावाप्तिं फलं निरूपयन्ति, सिद्धान्तेचार्थज्ञानम्। अर्थज्ञानार्थत्वमध्ययनविधेर्यदि न स्यात् शास्त्रस्यारम्भणीयत्वं नहि न स्यादिति सिद्धान्ताभिप्रायः। किन्तु, येन केनचन प्रकारेणार्थज्ञानसम्पादनं न पुरुषार्थाय कल्पेत इत्यध्ययनविधेर्नियमविधित्वमङ्गीकृत्याध्ययनविधिलब्धाक्षरावाप्तिद्वारैव तत्सम्पादनमिति स्वीकुर्वन्ति। एतेन तादृशाक्षरावाप्तेरप्यावश्यकता सिद्धान्तेऽपि सिध्यति। अत एव सायणवासुदेवदीक्षितप्रभृतयो मीमांसकास्तादृशाक्षरावाप्तौ प्राधान्यमभिप्रयन्ति। अन्यथा शब्दस्वरूपव्यवस्थायै प्रवृत्तानां वेदाङ्गानां विशेषतश्च शिक्षाया आनर्थक्यं प्रसज्येत। तत्र—

'सुव्यक्तस्सुस्वरो धैर्यं तच्चित्तत्वं चतुर्गुणाः।
एतद्युक्तः पठेद्वेदं स वेदफलमश्नुते'॥

इति प्रमाणेन स्थानकरणादिनियमेन वर्णानां सम्यगुच्चारणम्, नासादिदोषराहित्यपुरस्सरमुदात्तादीनां स्वराणामुच्चारणम्, धैर्यमित्यनेनाव्यग्रता, तच्चित्तत्वमित्यनेनाध्ययनव्यापारे लीनत्वञ्चेति चत्वारोऽध्येतृगुणाः। एवमध्यापकस्यापि गुणाः कतिपये प्रतिपादिताः—

'पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः।
स्वरमात्राविभागज्ञो गच्छेदाचार्यसम्पदम्'॥ इति।

अध्यापकानां पञ्चविधेषु क्रमेषु वैचक्षण्यमावश्यकमिति पद्येनानेन प्रतिपाद्यते। ते च—शुद्धवर्णक्रमः, स्वरवर्णक्रमः, मात्रावर्णक्रमः, अङ्गवर्णक्रमः, वर्णसारक्रमश्चेति। अ इ उ ऋ ऌ ए ओ ऐ औ इति स्वरेष्वाद्यानां त्रयाणां ह्रस्वदीर्घप्लुतभेदेन प्रत्येकं त्रैविध्यम, ऋवर्णस्य ह्रस्वदीर्घौ, ऌकारो ह्रस्वः, एकारादीनां चतुर्णां दीर्घ एव, ओकारौकारयोः दीर्घरङ्गः प्लुतरङ्गश्चेति प्रत्येकं द्वौ भेदौ, ओमिति प्रणव ओकारः पृथक् इति स्वराः। स्वयं राजन्ते नान्येन व्यज्यन्त इति भवन्ति स्वराः। कादयो मान्ताः स्पर्शाः, यादिवोत्तरा अन्तःस्थाः, जिह्वामूलीयोपध्मानीयसहिता हकारान्ता ऊष्माणः, डकारानुस्वारणकारसंयुतानुस्वारविसर्गाः, स्वरभक्तयः, यमाश्चेति व्यञ्जनानि। व्यज्यन्ते

प्रकाश्यन्ते परेण स्वरेणेति व्यञ्जनपदव्युत्पत्तिः । इमे वर्णाः स्वभावतस्सिद्धाः । इतोऽन्ये केचन नैमित्तिका वर्णाः स्वीकृताः शिक्षाकारैः ।

'कालतः स्थानतश्चैव करणान्नामतस्तथा ।
यदुच्चारणविद्भिस्तु वर्णत्वं क्रियते पृथक्' ॥ इति ।

यथा—'यः क्कामयेत' 'यः प्पाप्मना' इत्यादौ यो विशेषस्तद्युक्तस्य वर्णस्य वर्णान्तरत्वमभ्युपगच्छन्ति । अत एव कालनिर्णयशिक्षायां कालं प्रधानीकृत्य, आरण्यशिक्षायां करणं प्रधानीकृत्य, लक्ष्मीकान्तशिक्षायां कालं स्थानं करणं नाम च प्रधानीकृत्य वर्णविभागो न्यूनाधिकभेदेन प्रतिपादितो दृश्यते । एतेषां वर्णानां सन्ति पञ्च राशयः । तत्र अ आ ए क च ट त प य श इति वायुदेवताकाः । इ ई ऐ ख छ ठ थ फ र स इत्यग्निदेवताकाः । उ ऊ ओ ग ज ड द ब ल र इति पृथ्वीदेवताकाः ऋ ॠ औ घ झ ढ ध भ व ल इति चन्द्रदेवताकाः । ऌ ङ ञ ण न म क्ष ष इत्यर्कदेवताकाः । तदिदं व्यासशिक्षायामुक्तम्—

'अदादेग्प्रयमयशा लृनासिक्याश्चळ्ढोपेताः ।
अनिलाग्निमहीन्द्वर्काः पञ्चानान्त्वधिदेवताः' ॥ इति ।

( व्या० शि० ४८९. )

एवमेतेषां वर्णानां जातयोऽपि शिक्षायामभिहिताः । स्वराणां वर्गप्रथमद्वितीयानां ब्रह्मजातिः, वर्गतृतीयचतुर्थानां क्षत्रजातिः, वर्गोत्तमानामन्तःस्थानाञ्च वैश्यजातिः अनुस्वारविसर्गोष्मणां शूद्रजातिरिति । इमा जातयो मूलाक्षराणामेव ।

'स्वराश्च प्रथमाश्चैव द्वितीया ब्रह्मजातयः ।
तृतीयाश्च चतुर्थाश्च क्षत्रजातय ईरिताः ॥
उत्तमाश्चैवमन्तःस्था वैश्या हि परिकीर्तिताः ।
अनुस्वारो विसर्गश्चोष्माणोऽवरजास्स्मृताः' ॥ इति ।

( व्या० शि० ४९७, ९८ )

एवं वर्णानां जातिदेवताप्रतिपादन इदं तात्पर्यं शिक्षाकारस्य प्रतिभाति—यदनिलाग्निमहीन्द्वर्कानां देवतानां ब्राह्मणादीनाञ्च जातीनां वेदे वर्णैस्सम्बन्धान्नित्यसिद्धत्वम् ,

उच्चनीचभावाभावेन तासां स्वस्वकार्यनिरतत्वं, तथा व्यवहारदशायामपि मानवैर्वर्तितव्यमिति। इममाशयं वेदा यथा अर्थत उपदिशन्ति—

'सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे सञ्जानाना उपासते॥

समानो मन्त्रः समितिस्समानी समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि॥

समानी व आकूतिस्समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति'॥

(क्रमशः)



# मुक्तकप्रबन्धगतरसचर्वणयोरन्तरमस्ति वा न वा?

## पं० राममूर्तित्रिपाठी

मुक्तकप्रबंधगतरसव्यञ्जकोपकरणान्तर्वर्तिप्रातिस्विकवैशिष्ट्यापरपर्यायभेदमभिलक्ष्योभयविधकाव्यतो निष्पन्नयोः रसप्रतीत्योरन्तरमामनन्ति केचन साम्प्रतिकाः साहित्यशास्त्रिणः—तन्न, युक्तिविरोधात् परम्परासमादृतत्वाच्च। युक्तिविरोधस्तावदित्थम्—अन्तरं हि द्विविधमेव सम्भवति-गुणात्मकं मात्रात्मकञ्च। तदुभयविधभेदकतत्त्वमव्यवस्थाजनकम्। यतो हि गुणभेदाङ्गीकारादेकप्रकृतिकत्वाभावादुक्तप्रतीत्योरेक - (रस) संज्ञाप्रयोगानर्थक्यम्, मात्राभेदस्वीकारतो हि रसस्य निरतिशयत्वनिरसनप्रसङ्गः। न च यथाऽऽस्वादमात्रसाम्यात् मात्राभेदेऽपि च भावेषु रसप्रयोगः, एवमेव प्रबंधगतरससप्रतीतेः मुक्तकगतरसप्रतीतेर्गुणमात्रात्मकभेदाङ्गीकारेऽपि एक(रस)-संज्ञाप्रयोगसार्थक्यान्न कापि क्षतिरिति वाच्यम्, परम्पराविरोधात्। उक्तं हि ध्वन्यालोके—

'अमरुककवेरेकैकं पद्यं प्रबंधशतायते' इति। न चायमर्थवादः—इति नास्ति परम्पराविरोध इति वाच्यम् 'रससम्बन्धाभिनिवेशिनः कवयो मुक्तके-

ष्वपि दृश्यन्ते'—इति भूतार्थवादस्य तत्र जागरूकत्वात् । तस्मादयमेव निष्कृष्टोऽर्थः यन्न तथाविधयोः प्रतीत्योः किञ्चिदन्तरम् ।

वस्तुतस्तु न केवलं मुक्तकप्रबंधगतरसप्रतीत्योर्भेदाभावः, अपितु भावस्य या प्रतीतिः सापि तथाविधप्रतीतेर्न भिन्ना । न चोक्तभावरसप्रतीतीनां भेदाभावात् तदवान्तर—( भावरसात्मकप्रतीतिरूप )विभागानुपपत्तिरिति वाच्यम् , प्रतीतित्वेन प्रतीतिषु भेदाभावेऽपि भावविशिष्टयो रसप्रतीत्योरभेदानापत्तेः, तथाहि भावः रसश्च विशेषणे, तयोः प्रतीतिरनुभूतिर्वा विशेष्यम् , इत्थञ्च भावानुभूतिः रसानुभूतिश्च विशेष्यांशे अभिन्ने अपि विशेषणांशे भिन्ने । भावो हि न रस (स्थायी) प्रकृतिकः, भावान्तरेण भावान्तरस्य युगपदनुभूतेर्विच्छेदाच्च । एवञ्च भावस्यानुभूतिः मुक्तकप्रबंधगतरसस्यानुभूतिः—इत्येवंविधप्रयोगेषु अनुभूत्यंशे भेदाभावः, भावरसांशे च भेदः ततश्च सर्वं सम्यङ्‌ निरवद्यम् ।

अत्रापि केचन प्रत्यवतिष्ठन्ते—पृच्छा हि तेषामियं यद्भावः रसाश्चानुभूतितो भिन्नावभिन्नौ वा । नाद्यः, तयोरननुभूत्यात्मकतापत्तेः, न चेष्टापत्तिः—तर्कासहत्वात्परम्पराविरोधाच्च । नान्त्यः, विशेषणविशेष्यभावानुपपत्तेः—तस्मात् सर्वमुक्तमवद्यमिति, तदपि न । वस्तुतस्तु भावः ( स्थायी च) रसश्चानुभूतितो भिन्नावपि, अभिन्नावपि । तथाहि—यथा पातञ्जलयोगदर्शने सवितर्कसमापत्तावपि ध्यानं निर्वितर्कसमापत्तावपि ध्यानम्, परन्तूभे ध्याने अंशतो भिन्ने अपि ध्यानत्वेनाभिन्ने— पूर्वत्र स्वरूपप्रतीतेरपरत्र स्वरूपशून्य इव स्थितेश्च, तथैवात्रापि अनुभूतित्वेन द्वयोरभेदेऽपि अविगलितवेद्यान्तरकत्वाद् विगलितवेद्यान्तरकत्वाच्चोभे भिन्ने अपि । एवञ्च पुनरप्युक्तसिद्धान्तस्य निरवद्यता संपन्ना ।

अथाप्येवमुच्येत—यत्पार्यन्तिकविगलितवेद्यान्तरकानुभूतौ नास्ति चेत्सातिशयता गुणभिन्नता वा किं वात्र कारणं शृंगारादिविभिन्नरूपात्मकव्यवहारेषु? तत्रापीदं निवेद्यते—श्रूयतां सावधानम्—दर्शनराजाद्वैतमङ्गीकृत्य रसात्मकपार्यन्तिकप्रतीतिर्हि स्वस्वरूपानन्दाकारा, ततश्च यावन्तो भेदा अत्र भासन्ते, तावन्तः सर्व औपाधिकाः, विभावादिबाह्योपकरणगतभेदनिमि-

त्तकाः, न त्वन्यथा। ततश्च पुनरपि विचार्यमाणे निरवद्यता समापन्ना न काचिदवद्यतेति दिक्। दिगर्थो ह्ययम्—यदागमिकदृष्ट्याऽपीदं समाधातुं शक्यते। आगमिका ह्यूरीकुर्वन्ति यत् सर्वे विशेषाः सामान्ये शेरते हि शक्त्यात्मना, सामान्यञ्च सर्वेषु विशेषेषु कनककुण्डलवत् सर्वदा सर्वत्र च प्रकाशते। एवञ्च गजवृषभचित्रवत् विशेषसामान्ययोः शक्तिशक्तिमतोरन्तरमप्यनन्तरमपि च। ततश्च मतेनानेनापि पार्यन्तिकप्रतीतौ विगलितवेद्यान्तरता सिद्धा। इत्थञ्चायमभिप्रायो यन्मुक्तकप्रबंधगतरसचर्वणयोर्नास्ति कश्चिद् भेदः—इति सम्यक विचारितो गृहीतः पक्षः॥



# हेतुकरणविवेकः

पं० उमाशङ्करशर्मा 'ऋषिः'

( संस्कृतविभागाध्यापकः, बि० एन० कालेजस्थः, पटना )

कारकेषु प्रकृष्टोपकारकत्वेन करणस्य क्रियानिष्पत्तिं प्रत्यव्यवधानेन पूर्ववर्तिव्यापारवत्त्वान्नैयायिकैश्च 'प्रकृष्टं कारणं करणम्' इत्येवं जोघुष्यमाणत्वाच्च दृश्यते खलु करणकारणयोर्महानेव लौकिकोऽविवेकः। तथा हि—कारणमप्यन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्तीति लक्षितं न्यायनयज्ञैः। यथा तन्तुतन्तुसंयोगादिकं पटं प्रति कारणम्। करणं च भर्तृहरिणा स्ववाक्यपदीये तथाप्रायमेव—

'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणत्वं तदा स्मृतम्॥ (वा० प० ३।७।९०)

इत्येवं व्याख्यातम्। दात्रेण छिनत्तीति दात्रस्य करणत्वमवयवविघटनरूपां छिदिक्रियानिष्पत्तिं प्रति तद्व्यापारस्यैवानुप्रवेशाद्यात्मकस्य सकलसाधनव्यापारापेक्षयाव्यवहितपूर्ववर्तित्वेन विवक्षितत्वात्। करणे च कारके विवक्षा व्याप्रियते। न हि किञ्चिद् वस्तु चिराय करणमिति व्यवस्थितं विधात्रा। यथोक्तं हरिणा—

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥

( वा० पा० ३।७।९१ ) इति ।

यद्यपि कार्यात्पूर्ववर्तितया तृतीयाविभक्तिर्निरूप्यतया च साम्यमनयोर्हेतुकारणयोरवलोक्यते, परं भूयाँस्तु भेदो जागर्ति वैयाकरणनिकाये । तथा हि—प्रथमप्रमाणभूतेनैवाचार्येण पाणिनिनोभययोस्तृतीयाविधायके सूत्रे ( कर्तृकरणयोस्तृतीया, हेतौ २।३।१८,२३ ) पृथगेवोपन्यासिषातामेतद्भेदस्य च तत्रैव पूर्वावतरः कृतः । हेतुशब्दश्चेह कारणपरः, न तु 'तत्प्रयोजको हेतुश्च' ( १।४।५५ ) इति पारिभाषिकी संज्ञा गृह्यते । 'हेतुरिह कारणं, न शास्त्रीयः, तस्य कर्तृसंज्ञाया अपि सत्त्वेन कर्तृतृतीययैव सिद्धेः' इति हेतुसूत्रस्थे शब्देन्दुशेखरे स्पष्टमुक्तत्वात् । पुनरपि 'समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम्' इति भाषापरिच्छेदे ( का० १७ ) विश्वनाथेनापि हेतुकारणशब्दयोरनर्थान्तरत्वेन प्रयुक्तत्वाच्च । तदिह हेत्वर्थे तृतीयैका, करणे चापरेति तन्मतम् ।

अथ भवति कश्चित्क्रियारूपो व्यापारः । यथा गमेरुत्तरदेशसंयोगानुकूलः पादप्रक्षेपणाद्यात्मकः । पचेश्चान्नविक्लित्त्यनुकूलः काष्ठसंस्थापनाद्यात्मकः । द्रव्यनिष्ठो व्यापारोऽयं यथा क्रियामाश्रित्य तथैव द्रव्यादीनपीति न विस्मर्तव्यम् । करणस्य च कारकत्वात्तत्र क्रियान्वयित्वस्य वृत्तिरवश्यमूरीकर्तव्या । अत एव करणत्वं क्रियामात्रविषयव्यापारनियतं चेति दीक्षितभणितिः । उक्तोदाहरणे क्रियामेव विषयीकरोति दात्रं स्वव्यापारेणातस्तत्करणमेव । न केवलायां क्रियायामेव शब्दप्रवृत्तिरपि तु द्रव्यगुणावपि तन्निमित्तत्वेनाश्रीयेते । तथा च त्रितयमेव शब्दप्रवृत्तिनिमित्तमिह युज्यते । तत्र तिसृभिरेव द्रव्यगुणक्रियाभिर्निरूपितो भवति हेतुः, न करणवत्केवलया क्रियया । व्यापारविषयेऽपि हेतुः सव्यापारो निर्व्यापारश्चेत्युभयथा प्रवर्तते, करणं तु सव्यापारमेवेत्यनयोर्भेदः । यत्तु हरिणा—

अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते । (वा० प० ३।७।२४ पू०)

इत्युक्तं तदव्याप्तविषयकं, क्रियाजनकताविषयकमिति यावत् । द्रव्यगुणयोस्तु जनकत्वप्रसङ्गे सव्यापारस्यापि हेतुत्वदर्शनात् ।

तत्र द्रव्यविषयको हेतुर्यथा—दण्डेन घटः । दण्डहेतुको घट इति बोधः । सत्यप्यत्र दण्डस्थे व्यापारे साक्षात्क्रियान्वयित्वाभावात् करणत्वं नास्त्येवेति शेखरकारः ।

गुणविषयको हेतुर्यथा–पुण्येन गौरवर्णः । इह पुण्यशब्दः परमापूर्वमाचष्टे । अत्र नास्ति क्रियाजनकत्वं, नापि सव्यापारत्वम् । अतो न पुण्यशब्दस्य करणत्वम् । गौरवर्णस्य गुणत्वं तु—

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

इति 'वोतो गुणवचनात्' ( अष्टा० ४।१।४४ ) इति सूत्रस्थभाष्यकारिकयैव स्फुटीभवति । क्रियाविषयको हेतुर्यथा—पुण्येन दृष्टो हरिः । पुण्यशब्दस्य परमापूर्व-वाच्यत्वपक्षे हरिदर्शनरूपक्रियान्वयित्वसम्भवेऽपि सव्यापारत्वाभावः । अत एव करणत्वं नास्ति । यदि तु पुण्यशब्दस्य यागादिको धार्मिकः क्रियाकलापोऽर्थोऽभिधीयते प्राकरणि-कस्तदाऽस्य व्यापारवत्त्वं निर्विवादम् । तत्राऽस्य करणत्वे 'कर्तृकरणयोस्तृतीया' ( अष्टा० २।३।१८ ) इति शास्त्रेणैव तृतीयाविभक्त्युत्पत्तिः ।

तदिदं भेदकरणमधोनिर्दिष्टेन चक्रेण स्फुटस्फुटायिष्यते—

| | | | | |
|---|---|---|---|---|
| १. निर्व्यापारः | सव्यापारः | सन् द्रव्यस्य | जनकः | } हेतुः । |
| २. | ,, | ,, गुणस्य | ,, | |
| ३. | ,, | ,, क्रियायाः | ,, | |
| ४. — | सव्यापारं सत | | जनकं | करणम् । |

इत्थं द्रव्यगुणौ पुरस्कृत्य तु महानेव विवेको वरीवर्ति । क्रियामपि विषयीकृत्य तज्जनकत्वसामर्थ्ये विद्यमानेऽप्युभयोर्विरोधः । तथा हि— हेतुर्निर्व्यापारः सन्नेव क्रियां जनयति, न सव्यापारः । करणं तु सव्यापारं सदेव क्रियाजनकं, न निर्व्यापारम् । यद्यपि व्यापारसत्त्वं हेतौ करणे च भवति तथापि तस्य व्यापारस्य क्रियात्मकस्य भाक्तप्रयोगाद् द्रव्यादीनां क्रियान्तानां विशेषणत्वेनोपयुज्यमानत्वेऽपि न क्षतिः ।

अत एव 'पुण्येन दृष्टः' इत्यादावर्थभेदवशात् करणत्वं हेतुत्वं चोभयं समर्थनीयं भवति । हेलाराजोऽपि वाक्यपदीय ( ३।७।२४ )व्याख्यायाम् 'अध्ययनेन वसति' इति हेतूदाहरणत्वेनोपन्यस्यति, 'विद्यया वसति' इति तु करणकारकदृष्टान्तत्वेन । अत्र भेदबीजम्—व्यापारमनाश्रित्य विवक्षितार्थसिद्धौ योग्यतामात्रेण निमित्तत्वेनाश्रीयते यः स हेतुः । अवमकारकविभक्तेर्विषयः । यत्तु क्रियापदोपात्तायाः क्रियाया निमित्तं तत् कारकमेवेत्यनुपदं विवृणोति हेलाराजः । नैयायिकानां हेतुस्तु द्रव्यगुणयोर्निमित्तभूत

एव । अयमप्यकारकविभक्तिविषयः । यावत्कालपर्यन्तं हेतुर्न क्रियया संनिधानं करोति तावच्छुद्धो हेतुरेव, न करणम् । यदैवैतस्य क्रियया संनिधानं साक्षादन्वयित्वरूपमुपजायते तदायं करणकक्षामनुविशति । 'द्रव्यादिविषयो हेतुः, कारकं नियतक्रियम्' ( वा० प० ३।७।२५ उ० ) इति हरिवचनप्रामाण्यात् ।

यद्यपि जनकतासम्बन्धो हेतावपि समुपलभ्यते किन्तु न तावत् साक्षात्क्रिययायमन्वेति । अतो बीजेनाङ्कुरः, धनेन कुलम्, विद्यया यशः, कन्यया शोकः, शिल्पाभ्यासेन नैपुण्यम्, अग्निना पाकः—इत्यादिषु बीजादीनां सत्यपि जनकतावत्त्वे न करणत्वम् । निर्व्यापारस्यैव क्रियाविषयस्य हेतुत्वमिति निष्कर्षः । व्यापाराविष्टस्य क्रियाविषयस्य हेतुकल्पनायां तु शास्त्रीयो हेतुर्भवति, न खलु लौकिकः । यथोक्तम्—

कर्ता कर्त्रन्तरापेक्षः क्रियायां हेतुरिष्यते । (वा० प० ३।७।२५ उ० )इति । सेयमन्या वार्ता ।

जगदीशस्तु शब्दशक्तिप्रकाशिकायां करणशब्दं व्यापारप्रत्यासत्त्या जनकस्य वाचकं मन्वानश्चाक्षुषादौ चक्षुरादिः संयोगेन, अनुमित्यादौ व्याप्तिज्ञानादिः परामर्शादिना, स्मृत्यादावनुभवादिः संस्कारादिना स्वव्यापारेणैव सम्बन्धेन हेतुरिति ( श० श० प्र०, कारिका ७१ ) प्रतिपिपादयिषुर्न करणकारणयोर्विवेकं वितनुते, प्रत्युत 'दण्डेन घटः' इत्यत्र तृतीयार्थः करणत्वमूरीकृत्यापि कारकत्वस्यात्राभावं व्याचष्टे । एतस्य न्यायविदो मतमिदं यत्प्रकृष्टं कारणमेव करणमिति क्रियानिष्पत्तिं प्रति वा स्याद् द्रव्यगुणोत्पत्तिं प्रति वा स्यात् प्रकृष्टोपकारकत्वेन यन्नियतं तत्करणमेव । क्रियानन्वयित्वात्तन्न कारकमित्यन्यद् । पाणिनिमतानुयायिनस्तु गदाधरप्रभृतयो नैतद् बहु मन्यन्ते । तथा हि व्युत्पत्तिवादे 'धनेन कुलं, विद्यया यशः' इत्यादिकं हेतुत्वेनोदाहृतम् । लिङ्गज्ञानस्यानुमितिकरणत्वमिति न्यायसिद्धान्तः ! एतेन 'धूमेन वह्निमनुमिनोति' इत्यत्र केषाञ्चन न्यायविदां मतेन धूमपदस्य तज्ज्ञानपरतया व्याप्तिविशिष्टहेतुज्ञानस्य व्यापारोऽतः करणत्वमबाधितम् । परमपरेषां मतेन सत्यपि लिङ्गज्ञानस्य करणत्वे 'धूमेनानुमिनोति' इत्यत्र धूमपदस्य मुख्यार्थपरतया ( न ज्ञानपरतया ) हेतुत्वमेवेति सारतो निरूपणम् ।

कारणकरणविवेके निर्गलितोऽयं विनोदभूतोऽर्थः ।
संक्षिप्तार्थशरीरो न्यरूपि केनापि बालेन ॥

●

# शाङ्करमोक्षबोधः

शिक्षाशास्त्री श्रीब्रजेशः एस० डी० ओ०

( अनुमण्डलीय पदाधिकारी, पटना सिटी )

'तत्तु समन्वयादि'त्यस्य श्रीमद्बादरायणप्रणीतस्य चतुर्थब्रह्मसूत्रस्य भाष्यप्रसङ्गे शङ्करः स्वकीयं मोक्षबोधमित्थं स्फुटं विवृणोति—'इदं तु पारमार्थिकं कूटस्थं नित्यं व्योमवत् सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिःस्वभावम्। यत्र धर्माधर्मौ सह कार्येण कालत्रयं च नोपावर्तेते। तदेतदशरीरत्वं मोक्षाख्यम्। 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् अन्यत्र भूताच्च भव्याच्च' (क० २।१४) इत्यादि-श्रुतिभ्यः।' शङ्करस्य मते मोक्षस्तु ब्रह्मसाक्षात्कारः, स तु अत्रापि अस्मिन्नेव कालेऽपि सम्भवोऽस्ति। 'अनवच्छिन्नानन्दप्राप्तिस्तु मोक्ष' इति चित्सुखाचार्यो ब्रूते। वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रेण मोक्षस्येयं परिभाषा विहिता—'आनन्दात्मकब्रह्मावाप्तिस्तु मोक्षः, शोकनिवृत्तिश्च, 'तरतिशोकमात्मवित्' इत्यादिश्रुतेः। न तु लोकान्तरावाप्तिः तज्जन्यवैषयिकानन्दो वा मोक्षः, तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः। सामान्यलोकव्यवहारे प्राप्तेस्तु योऽर्थो विहितः तस्मिन्नर्थे मोक्षः प्राप्तिर्नास्ति। अत्र प्राप्तेरर्थः ज्ञानमिति—'ज्ञानप्राप्त्योरेकार्थत्वम्' ( शाङ्करभाष्यम् बृहद० १।१।४ )। ब्रह्मानन्दस्य प्राप्यत्ववादं सुष्ठु निरूपयति सदाशिवेन्द्रसरस्वती सिद्धान्तकल्पवल्ल्याम्—

'नित्यप्राप्तोऽप्ययमानन्दः स्वाविद्यया तिरोभूतः।
तन्नाशे प्राप्यत इव कण्ठाभरणं यथेत्याहुः॥'

आत्मा तु नित्यशुद्धबुद्धमुक्तस्वभावो विद्यते। तस्य ईदृग्रूपस्य साक्षात्कारो मोक्षोऽस्ति शङ्करस्य मते। शङ्करः स्वीयं मोक्षसिद्धान्तं श्रुतिप्रमाणेन प्रतिपादयति—'ब्रह्म वेद ब्रह्मैव भवति', तरति शोकमात्मवित्', 'क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिश्रुतिभ्यः।

शङ्करस्य जीवन्मुक्तावपि द्रढीयान् विश्वासः । "यावदधिकारमवस्थितिराधिकारिकाणामि'त्यस्य ब्रह्मसूत्रस्य भाष्ये शङ्करः स्पष्टं व्याहरति, 'ननु विद्यायाः साधनभूतायाः सम्पत्तौ कैवल्यनिर्वृतिः स्यान्नवेति नेयं चिन्तोपपद्यते । न हि पाकसाधनसम्पत्तावोदनो भवेन्नवेति चिन्ता सम्भवति नापि भुञ्जानस्तृप्येन्नवेति चिन्त्यते । उपपन्ना त्वियं चिन्ता, ब्रह्मविदामपि केषाञ्चिदितिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात् ।...एवमपान्तरतमः-प्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते, तदवसाने चाऽपवृज्यन्ते । जीवन्मुक्तौ सार्वलौकिकी प्रसिद्धिरव्याहता । देहावसाने विद्वांसो विदेहमुक्तिं लभन्ते । ते संसारचक्रान्मुक्ताः भवन्ति । 'अनावृत्तिः शब्दादनावृत्तिः शब्दादि'त्यन्त्यब्रह्मसूत्रभाष्ये शङ्करेण स्पष्टं व्याहृतम्' । सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवाऽनावृत्तिः । तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति । 'तेषां न पुनरावृत्तिः' ( बृह० ६।२।१५ ), 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' ( छान्दो० ४।१५।१ ) 'ब्रह्मलोकमभिसंपद्यते' ( छान्दो० ८।१५।१ ), 'न च पुनरावर्तते' ( छान्दो० ८।१५।१ ) इत्येताः श्रुतयस्तत्र प्रमाणम् ।



# रोग-निदानम्

श्रीकाशीनाथशास्त्री

( प्राध्यापकः, वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी )

आयुर्वेदीयचिकित्साग्रन्थे सर्वत्र—

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ज्ञानपूर्वं ततः पश्चाद् भिषक् कर्म समाचरेत् ॥

इत्युक्तदिशा रोगज्ञानानन्तरं चिकित्साकर्मणः उपदेशो वरिवर्ति तद् रोगज्ञानं कथं संभाव्यतेऽत्र संहिताकाराणामाचार्याणां बहूनि मतानि सन्ति, किन्तु दार्शनिकयुगे समुत्पन्नेन श्रीचरकाचार्येण दार्शनिकदृष्ट्यैव रोगज्ञानं तच्चिकित्सा च निर्दिष्टा ।

विद्वज्जनमनोरञ्जनाय, दार्शनिकशिरोमणेः शिवसायुज्यप्राप्तस्य च गुरुदेवस्य शताब्दीसमारोहे सा सरणिर्निर्दिश्यते—

चरके विमानस्थानस्य चतुर्थाध्याये—

त्रिविधं खलु रोगविशेषविज्ञानं भवति, तद्यथा—आप्तोदेशः प्रत्यक्षमनुमानश्चेति ।

यथा सर्वप्रमेयवस्तूनां प्रमाणार्थं प्रमाणत्रयं दार्शनिका आमनन्ति तथैव चरकाचार्योऽपि उपमानप्रमाणस्यानुमानेऽन्तर्भावं कृत्वा प्रमाणत्रयं स्वीकरोति, यद्यपि युक्तिमपि प्रमाणत्वेन स्वीकरोति चरकाचार्यः यथा—बुद्धिः पश्यति या भावान् बहुकारण योगजान् । युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते यया । उदाहरणञ्चात्र—

'जलकर्षणबीजर्तुसंयोगात् सस्यसंभवः ।
युक्तिः षड्धातुसंयोगाद् गर्भाणां सम्भवस्तथा ॥
मथ्यमन्थनमन्थान - संयोगादग्निसम्भवः ।
युक्तियुक्ता चतुष्पाद-संपद् व्याधिनिबर्हणी' ॥

इति प्रदत्तम् किन्तु अनुमानं खलु—तर्को युक्त्यपेक्षः, तर्कश्चात्र—'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तिस्तत्त्वज्ञानार्थमूहस्तर्कः' इति तर्कलक्षणेनानुमानेऽस्यान्त-

र्भावं कृत्वा प्रमाणत्रयमेव स्वीकरोति। आप्तोपदेशादेव सर्वरोगाणां याथातथ्यं प्रत्यक्षानुमानाभ्यां साध्यते।

आप्तोपदेशः— किं नाम आप्तत्वं, किं नाम च तस्योपदेशत्वमिति जिज्ञासायामाह—

रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा॥
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्।
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः॥

तथा तत्राप्तोपदेशो नाम-आप्तवचनम्।

आप्ता ह्यवितर्कस्मृतिविभागविदो निष्प्रीत्युपतापदर्शिनश्च, तेषामेवंगुणयोगाद् यद्वचनं तत्प्रमाणम्। अप्रमाणं पुनर्मत्तोन्मत्तमूर्खवक्तृदृष्टादृष्टवचनम्।

एवंगुणयोगादाप्तात् सकलरोगकारणीभूतनिदानपूर्वरूपरूपोपशयसम्प्राप्तयो विज्ञायन्ते, यदि हि आप्ता आचार्याः संहितासु रोगाणां एते निदानादीन् नोपदिशन्ति तर्हि तेषां ज्ञानं कथमपि न स्यादिति कृत्वा संहितासु शास्त्रेषु च रोगज्ञानविषये यावन्तो भावविशेषाः प्रतिपादितास्तावतोऽवहितबुद्धचा सम्यगवेक्ष्यावेक्ष्य रोगनिश्चयकरणे प्रयत्नो विधीयते चिकित्सकैः, आप्तोदेशाद्धि ज्ञायते—रोगमेकैकमेवंप्रकोपणमेवं योनिमेवमात्मानमेवमधिष्ठानमेवंवेदनमेवंसंस्थानमेवंवृद्धिस्थानक्षयसमन्वितमेवमुदर्कमेवंनामानमेवंयोगं विद्यात् तस्मिन्नियं प्रतीकारार्था प्रवृत्तिरथवा निवृत्तिरिति, इत्येवं शास्त्रतः ज्ञाने संजाते तस्य परीक्षा प्रमाणद्वयेन क्रियते, किं ह्यनुपदिष्टे पूर्वं प्रत्यक्षानुमानाभ्यां परीक्षमाणो विद्यात्। तस्माद् द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षमनुमानं चेति।

अतः सर्वप्रथमम् आप्तोपदेशात् ज्ञायते—'स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणं तथा। युगपद् यत्र रोगे तु स ज्वरो व्यपदिश्यते' यदेककालावच्छेदेन यत्र रोगे एतल्लक्षणत्रयस्य सम्प्राप्तिः स ज्वर इति। सत्येवं ज्ञाने प्रत्यक्षानुमानाभ्यां ज्वरितस्य ज्ञानं भवति।

आप्तस्तु यथार्थंवक्तेति लक्षणे सर्वे सत्यवक्तार आप्ताः, 'इयं गौः, अयं वह्निः, अयं धूमः' इत्यादयः सर्वे भावाः पूर्वं आप्तोपदेशादेव विज्ञायन्ते ततः 'इयं गौः नासौ महिषी, अयं वह्निः नासौ सूर्यः, अयं धूमः नासौ नीहारः' इति प्रत्यक्षेण निर्धार्यंते, ततः धूमविशिष्टस्य वह्नेः प्रत्यक्षानन्तरं वह्नेरप्रत्यक्ष-स्थले लिङ्गस्य प्रत्यक्षे ज्ञानेऽनुमानेन 'पर्वतो वह्निमान्' इत्यवधार्यंते।

अतः प्रमाणत्रये आप्तोपदेशप्रमाणं सर्वातिशायि वर्तते।

प्रत्यक्षम्—किं नाम प्रत्यक्षम्—इति प्रश्ने—चरकाचार्यः—

आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्तते।

व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते॥ यद्यपि—अनुमाने, स्मृतौ च परम्परया आत्मादिसन्निकर्षंजत्वमस्ति तथापि तद्वारणाय तदात्वमिति पदम्, ग्रीष्मे सूर्यमरीचयः भौमेन ऊष्मणा संसृष्टाः स्पन्दमानाः लक्ष्यन्ते तत्रे-न्द्रियार्थंसन्निकर्षात्तत्कालं उदकमिति ज्ञानं उत्पद्यते—तच्च अतस्मिन् तत् इति ज्ञानं भ्रमः। तथा—दूरात् चक्षुषा अर्थं पश्यन् कश्चित् तत्कालं नावधार-यति—स्थाणुः पुरुषो वेति, तच्च अनवधारणज्ञानं संशयः, एवं भ्रमे संशये च आत्मेन्द्रियमनोऽर्थानां तात्कालिकसन्निकर्षस्य सत्त्वात् प्रत्यक्षत्वमेवैषामिति तद्वारणाय व्यक्तेति पदम्।

आत्मादिचतुष्टयसन्निकर्षात् तत्कालं यद् अवितथं ज्ञानमुत्पद्यते तत् प्रत्यक्षप्रमाणमिति।

पुनः विमानप्रकरणे—

प्रत्यक्षं तु खलु यत्स्वयमिन्द्रियैर्मनसा चोपलभ्यते। इन्द्रियैरुपलभ्यते इति वदता आचार्येण इन्द्रियज्ञानभेदात् पञ्चविधं प्रत्यक्षं निर्दिष्टम्। तदनुसार-मुक्तञ्च प्रत्यक्षतस्तु खलु रोगतत्त्वं बुभुत्सुः सर्वैरिन्द्रियैः सर्वानिन्द्रियार्था-नातुरशरीरगतान् परीक्षेतान्यत्र रसज्ञानात्।

ततश्च पञ्चविधं प्रत्यक्षम्। यथा—

१ श्रोत्रप्रत्यक्षम्, २ चक्षुःप्रत्यक्षम्, ३ रसनाप्रत्यक्षम् ४ घ्राण-प्रत्यक्षम्, ५—स्पर्शप्रत्यक्षम्।

१ अन्त्रकूजनं सन्धिस्फोटनमङ्गुलिपर्वणां च स्वरविशेषाः—यथा—प्रकृतिविकृतिस्वरा इन्द्रियाधिकारे—

हंस-क्रौञ्चनेमिदुन्दुभिकलविङ्ककाककपोतझर्झरानुकाराः प्रकृतिस्वरा भवन्ति, यांश्चापरानुपेक्षमाणोऽपि विद्यादनूकतोऽन्यथा वापि निर्दिश्य-मानांस्तज्ज्ञैः।

एडककलग्रस्ताव्यक्तगद्गदक्षामदीनानुकीर्णास्त्वातुराणां स्वरा वैकारिका भवन्ति, यांश्चापरानुपेक्षमाणोऽपि विद्यात्प्राग्विकृतानभूत्वोत्पन्नान् इति । ये चान्येऽपि केचिच्छरीरोपगताः शब्दाः स्युस्ताञ्श्रोत्रेण जानीयादिति निर्देशेन पुप्फुस-हृदयादिप्रदेशेषु जायमानाः शब्दाः श्रवण-यन्त्रद्वारा श्रोत्रेणैवेदानीमपि परीक्षमाणं दृश्यते नेयं नूतना सरणिः। अपि च प्राचीनानुमतैवेति । वर्णसंस्थानप्रमाणच्छायाशरीरप्रकृतिविकारान् चक्षुर्वैषयिकाणि यानि चान्यानि तानि चक्षुषा परीक्षेत ।

**वर्णो यथा**—कृष्णः, कृष्णश्यामः, श्यामावदातोऽवदातश्चेति प्रकृतवर्णाः शरीरस्य भवन्ति, यांश्चापरानुपेक्षमाणो-विद्यादनूकतोऽन्यथा वापि निर्दिश्य-मानांस्तज्ज्ञैः ।

नीलश्यामताम्रहरितशुक्लाश्च वर्णाः शरीरस्य वैकारिका भवन्ति यांश्चापरानुपेक्षमाणो विद्यात् प्राग्विकृतानभूत्वोत्पन्नान् ।

एवं प्राकृतवैकृतवर्णभेदं निर्दिश्य चक्षुषा विशेषविज्ञानार्थं लक्षणानि स्वयमेवोपदिष्टानि । तद्यथा—

यस्य वैकारिको वर्णः शरीर उपजायते ।
अर्द्धे वा यदि वा कृत्स्ने निमित्तं न च नास्ति सः ॥
नीलं वा यदि वा श्यावं ताम्रं वा यदि वाऽसूणम ॥
मुखार्धमन्यथावर्णो मुखार्धेऽरिष्टमुच्यते ॥

स्नेहो मुखार्धे सुव्यक्तो रौक्ष्यमर्धमुखे भृशम् ।
ग्लानिरर्धे तथा हर्षो मुखार्धे प्रेतलक्षणम् ॥
तिलकाः पिप्लवो व्यङ्गा राजयश्च पृथग्विधाः ।
आतुरस्याशु जायन्ते मुखे प्राणान्मुमुक्षतः ॥

पुष्पाणि नखदन्ते वा पङ्को वा दन्तसंश्रितः ।
चूर्णको वापि दन्तेषु लक्षणं मरणस्य तत् ॥
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः ।
नखेष्वपि च वैवर्ण्यमेतत्क्षीणबलेऽन्तकृत् ॥
यस्य नीलावुभावोष्ठौ पक्वजाम्बवसन्निभौ ।
मुमूर्षुरिति तं विद्यान्नरो धीरो गतायुषम् ॥

एते सर्वे चक्षुःप्रत्यक्षविषयाः ।

अन्येऽपि बहवो भावविशेषा यथा—कामलापाण्डुरोगेषु वर्णविशेषाः, व्रणेषु शोथो रक्तिमा, जलोदरोदररोगेषु उदरवृद्धिः, मूत्रे पीतिमादयो वर्णाः, पुरीषे कृमयः वर्णविशेषाश्च, साम्प्रतिकैः वैज्ञानिकैः सूक्ष्मदर्शकयन्त्रेण मूत्र-पुरीष-लाला-सिङ्घाणक-रक्तादीनां या, परीक्षा, क्रियते सापि चक्षुर्द्वारैव तथा क्ष-किरण (एक्सरे) कार्डियोग्रामादिविविधयन्त्रेण क्रियमाणा परीक्षा—चक्षुःप्रत्यक्षेणैव प्रमाणपथमानयन्तीति प्राचां पद्धत्यनुसारमेवेति किन्तु—उपनेत्रवत् तानि साधनानि सहायकानि अनुकरणीयानीति ।

(क्रमशः)



## संस्मृतिः

श्रीखड्गनाथमिश्रः

(प्रधानाचार्यः, महाराणासंस्कृतमहाविद्यालयः, उदयपुर)

महतोऽपि महान् कोऽपि ह्युपाध्यायो द्विवेदिवा ।
अद्वैतोऽद्वैतवेदान्ते कृपालुर्हरिणा हरः ॥ १ ॥
संस्मृत्यै लिख्यते तस्य निबन्धो नातिविस्तृतः ।
आश्रित्य दर्शनान्यत्र खड्गनाथेन यत्नतः ॥ २ ॥

अथ दार्शनिकशिरोमणिसम्बद्धतया संक्षेपतो दर्शनमेवेह विविच्यते—तथाहि दर्शनपदस्य ज्ञानसामान्यार्थकदृश्‌धातुतो निष्पन्नतया चेतनाचेतनभेदेन द्विविध-पदार्थानां पुरुषार्थप्रयोजकतत्त्वानुसन्धानमर्थस्तत्त्वानुसन्धानस्य च प्रमेयसिद्धेः

प्रमाणाधीनत्वेन प्रमाणसापेक्षतया प्रमाणानां प्रत्यक्षानुमानशब्दादिभेदेन भेदात् तत्र तत्र बुद्धिभेदविश्वासभेदाधिकारिभेदादिकारणेभ्यस्तत्त्वानुसन्धायकानां दर्शनकाराणां भेदस्तत्प्रयुक्तो दर्शनभेदश्च ।

तत्र प्रथमं दर्शनकाराणां नास्तिकास्तिकभेदेन भेदः, नास्तिकानामपि आध्यक्षिकतार्किकभेदेन द्वैविध्यम् । तत्र प्रत्यक्षमात्रवादी चार्वाकः—आध्यक्षिकः, तार्किकनास्तिकास्तु योगाचारमाध्यमिकसौत्रान्तिकवैभाषिकेतिचतुष्प्रकारकाः क्रमेण शून्यताक्षणिकविज्ञानानुमेयबाह्यार्थ-प्रत्यक्षक्षणिक-बाह्यार्थवादिनो बौद्धाः, तथा अनेकान्तवादात्मकस्याद्वादं वदन्तो जैनाः । एते सर्वेऽपि सर्वथैव श्रुतेरनङ्गीकारेण नास्तिकाः केवलमसद्विपक्षपक्षपरिज्ञापकतयैवोपयुक्ता अन्यथा अतीव हेया वस्तुतो न दर्शनकारा अपितु दर्शनाभासकारा वस्तुतोऽनर्थकारिण एव । आस्तिकास्तु रामानुजनिम्बार्कशुद्धाद्वैतमाध्वनकुलीशपाशुपत - शैवप्रत्यभिज्ञा - रसेश्वरवैशेषिकनैयायिकमीमांसकवैयाकरणसांख्यपातञ्जलशाङ्करभेदेन अष्टादश, ततोऽधिका वा सगुणात्मवादित्वेन, निर्गुणात्मवादित्वेन, तार्किकत्वेन, श्रौतत्वेन, प्रच्छन्नतार्किकत्वेन, स्पष्टतार्किकत्वेन, प्रच्छन्नद्वैतत्वेन, स्पष्टद्वैतत्वेन, भोगसाधनादृष्टवादित्वेन, उत्पत्तिसाधनादृष्टवादित्वेन, विदेहमुक्तिवादित्वेन, जीवन्मुक्तिवादित्वेन, आत्मभेदवादित्वेन, आत्मैक्यवादित्वेन, कर्मानपेक्षेश्वरवादित्वेन, कर्मसापेक्षेश्वरवादित्वेन, पदार्थवादित्वेन, वाक्यार्थवादित्वेन, निरीश्वरत्वेन, सेश्वरत्वेन, एवमादिना एषां भेदः । श्रुतेरर्थकरणे तत्समन्वयकरणे तन्मूलके ततोऽन्यत्र वा एषां यथा तथा मतभेदेऽपि श्रुत्यङ्गीकारे नास्तिकमतनिरसने च मतभेदाभावेन अमी सर्वेऽपि आस्तिका एव । एषु कर्मकाण्ड-ज्ञानकाण्डभेदेन श्रुतेर्द्वैविध्यात् श्रौतदर्शनकाराणां श्रौतदर्शनानां च द्वैविध्यं, तत्र कर्मकाण्डमादाय तत्त्वानुसन्धानपरं मीमांसादर्शनं तद्दर्शनकाराश्च मीमांसकाः, ज्ञानकाण्डमादाय तत्त्वानुसन्धानपरं वेदान्तस्तद्दर्शनकारा वेदान्तिनः, तेऽपि द्विधा द्वैतवादिनोऽद्वैतवादिनश्च, तत्र प्रच्छन्नद्वैतवादिनो विशिष्टाद्वैतवादिनो रामानुजीयास्तदीयं दर्शनं रामानुजवेदान्त इति, द्वैताद्वैतवादिनो निम्बार्कदर्शनकाराः, शुद्धाद्वैतवादिनो वल्लभवेदान्तदर्शनकाराश्च प्रच्छन्नद्वैतवादिन एव, स्पष्टद्वैतवादिनो माध्वाः पूर्णप्रज्ञाः आनन्दतीर्थीयाः मध्व-पूर्णप्रज्ञ-आनन्दतीर्थेति, एकस्यैव संज्ञाभेदः । अद्वैतवादिनः श्रीशंकराचार्याः इदमीयं दर्शनं शांकराद्वैत-वेदान्त इति प्रसिद्धमितरसर्वदर्शनमूर्धन्यम् ।

प्रसङ्गात् संक्षेपतः ख्यातयो वादाश्च दर्श्यन्ते-मृत्तन्त्वाद्यात्मकघटपटादिकार्यस्थले शून्यतावादिनो बौद्धस्य असत्ख्यातिः, विज्ञानवादिनो बौद्धस्य आत्मख्यातिः। बाह्यार्थवादिनो बौद्धस्य सङ्घातवादः, नैयायिकवैशेषिकयोः आरम्भवादः, सांख्यपातञ्जलयोः परिणामवादः, अद्वैतवेदान्तिनो विवर्तवादोऽनिर्वचनीयतावादश्च, शुक्त्यादौ इदं रजतमित्यादिज्ञानस्थले च नैयायिकवैशेषिकमते अन्यथाख्यातिः। रामानुजमते सत्ख्यातिः। माध्वमते असत्ख्यातिः, मीमांसकमते अख्यातिः अद्वैतवेदान्तिमते अनिर्वचनीयख्यातिरिति।

विस्तरभिया विशेषतोऽप्रक्रान्ततया च वेदान्तेतरदर्शनानां मतानि संक्षेपतोऽप्यनुक्त्वैव रामानुजनिम्बार्कवल्लभपूर्णप्रज्ञेतिचतुर्णां द्वैतवेदान्तिनां मतानि संक्षेपतो यथा—

एषु प्रथमो विशिष्टाद्वैतवादो, द्वयोर्भावो द्विता, द्वितैव द्वैतम्, न द्वैतमद्वैतं, विशिष्टयोः—सूक्ष्मचिदचिद्विशिष्ट - स्थूलचिदचिद्विशिष्टयोरद्वैतं, विशिष्टाद्वैतमिति व्युत्पत्त्या 'ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः। ईश्वरश्चिदिति प्रोक्तो जीवोऽदृश्यमचित् पुनः॥'

इत्यादिना भेद-अभेद-भेदाभेदेतित्रितयस्वीकारेण स्वीयं मतमुपपादयति।

द्वितीयस्तु द्वैताद्वैतवादी सगुणत्वनिर्गुणत्वोभयविधश्रुतिस्मृत्यादिवाक्यानां तुल्यबलत्वाभ्युपगमेन परस्परबाध्यबाधकभावानङ्गीकारेण चिदचिद्भ्यां स्वाभाविकभिन्नाभिन्नं ब्रह्म प्रतिपादयति।

तृतीयस्तु—आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः।
भक्त्या त्वाद्यो द्वितीयस्तु तदभावाद्धरौ सदा॥
सर्वाकारस्वरूपेण भविष्यामीति या हरेः।
वीक्षा यथा यतो येन तथा प्रादुर्भवत्यजः॥
मृदादि भगवद्-रूपं घटाद्याकारसंयुतम्।
मूलेच्छातस्तथा तस्मिन् प्रादुर्भावो हरेस्तदा॥
तिरोभावस्तथैव स्याद् रूपान्तरविभेदतः।

इत्यादिभिः मायासम्बन्धराहित्यार्थक - शुद्धपदसम्बन्धेन जीवं पूर्ववदेव अणुमेव मन्वानोऽखिलपदार्थस्वरूपं परमात्मानं श्रीकृष्णं स्वीकरोति। विभिन्नश्रुतिभिर्भगवति भासमानं विरोधं भूषणमेव न तु दूषणमिति चोदीरयति। स्पष्टभेद-

वादी तुरीयः पूर्णप्रज्ञाभिधस्तु जीवाणुत्वादि-प्रपञ्च-भेदसत्यत्वान्तं रामानुजवदेव स्वीकुर्वन्नपि भेद-अभेद-भेदाभेदेतित्रयं जैनमतमिव परस्परविरुद्धत्वेनानङ्गीकुर्वन् 'स्वतन्त्रं परतन्त्रं च द्विविधं तत्त्वमिष्यते। स्वतन्त्रो भगवान् विष्णुर्निर्दोषोऽशेषसद्-गुणः ॥' इत्यादिना ब्रह्म सगुणं, जीवन्तु ततो भिन्नमणुं वर्णयति।

## शाङ्कर (अद्वैत) वेदान्तस्य सर्वदर्शनातिशायित्वेन—मूर्धन्यत्वम्

श्रुतेः क्वचिदतिदुर्बोधत्वेन, क्वचित् पूर्वापरसम्बन्धराहित्येन, क्वचिदनारभ्याधीतवाक्योपलम्भेन, क्वचिद् वाक्यविपर्यासस्य आलक्षितत्वेन, क्वचिन्नित्यसाकाङ्क्षार्थस्थले आकाङ्क्षापूरकवाक्यान्तरादर्शनेन, क्वचिदावश्यकहेतोरपि निर्देशाभावेन, श्रुत्यर्थस्य अतिगम्भीरत्वात् ज्ञातुमशक्यतया तज्ज्ञनाय वेदव्यासैर्बादरायणैर्ब्रह्मसूत्रकारैः सूत्ररचनायां प्रवृत्तम्, ते च ब्रह्मसूत्रकाराः सर्वथा श्रौता एव, न तु अंशतोऽपि तार्किकाः, जगत्कारणस्य शब्दैकप्रमाणकत्वात् तत्स्वरूपं श्रुतित एव निर्णयमर्थकेन 'श्रुतेस्तु शब्दमूलत्वात्' इत्यनेन स्वरचितसूत्रेण तत्त्वज्ञानार्थं श्रुतेरेव प्रमाणत्वप्रदर्शनात्, तादृशश्रुतिबोधितं स्वरूपं लौकिकयुक्तिविरुद्धमपि श्रद्धेयं तादृशस्थले विरुद्धा युक्तिरुपेक्षणीयैवेति सूत्रतात्पर्यं यद्यपि रामानुजनिम्बार्कवल्लभश्रीशंकराचार्याणां समेषां ब्रह्मसूत्रभाष्यकृतां समानतयैव सम्मतम्।

परन्तु रामानुजादयो बहुतरश्रुतीनां बहुतरब्रह्मसूत्राणां चार्थान् महान्तमायासं कृत्वा स्वस्वपक्षोपपत्त्यर्थतथा परस्परविभिन्नानेव कुर्वन्ति तथाविधानां सर्वेषामेवार्थानां सूत्रकृत्तात्पर्यविषयत्वासम्भवे श्रुतिनिगूढपूर्वाचार्यश्रीगौडपादश्रीशंकरादिभाषिततात्पर्यविषय एवार्थः सर्वथा समन्वितोऽक्लेशेनोपपादितो युक्तियुक्तश्च महत्तमः—यतो हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यम् अन्यद्वेषानधीनद्वेषविषयदुःखात्यन्तोच्छेदात्मकस्याऽन्येच्छानधीनेच्छाविषयनित्यनिरतिशयाद्वितीयसुखस्वरूपनिर्विशेषात्मनो मोक्षस्य परमपुरुषार्थस्य प्रदर्शनपरं सर्वतो मूलं, तदुपपादनपराणि 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधोपरोधात्, तदनन्यत्वमारम्भणशब्दादिभ्यः, प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः' इत्यादिकतिपयब्रह्मसूत्राणि, तथा—'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव तु सत्यम्, सदेव सौम्य इदमग्र आसीत्, तत्त्वमसि श्वेतकेतो, द्वितीयाद्वै भयं भवति, यत्र सर्वमात्मैवाभूत् तत् केन कं पश्येत् नेति, नेति, नेह नानास्ति किंचने'त्यादि निर्विशेषब्रह्मपरश्रुतिवाक्यानि च इतरदर्शनेषु इतरद्वैतवेदान्तेषु च सामञ्जस्यं नाश्नुवते।

'यतो वा इमानि भूतानि जायन्ते' इति श्रुतौ 'जनिकर्तुः प्रकृतिरि'ति सूत्रेण विहिता पञ्चमी विभक्तिः ब्रह्मणोऽप्रकृतित्वे नोपपद्यते, 'सोऽकामयत, बहु स्यां प्रजायेय, तदैक्षत बहु स्यां प्रजायेय' इत्यादिभ्यो बोधितं ब्रह्मणो बहुभवनाभिध्यानमपि तस्याप्रकृतित्वे अनुपपन्नमेव कार्यबहुत्वेऽपि निमित्तबहुत्वाभावात्।



# शक्ति-विवेचनम्

डॉ॰ गजाननशास्त्री मुसलगांवकरः
( अध्यापकः, काशीहिन्दूविश्वविद्यालयः )

"या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता।"

सर्वेऽपि प्राणिनः स्वहिताय यत्किमपि कार्यं सम्पादयन्ति। उपनतमप्रियम्प्रतिकुर्वन्ति। बहवस्तथाविधा अपि सन्ति, ये समुपनतमपि अप्रियम्परिहातुं दूरीकर्तुं वा न पारयन्ति। स हि कथं तवैवं दशा इति मित्रगणैः पृष्टो ब्रवीति—अङ्ग ! शक्तिर्नास्ति, किमिव अप्रियमपि दुःखमपनेतुम्पारयेयम्।

तथैव यदा कश्चन जनो लोकोत्तरं कर्म सम्पादयति तदा जनास्तं स्तुवन्तो वदन्ति—शक्तिमानेषः। इत्थमेव बहुभिर्बहुत्र शक्तिशब्दः प्रयुज्यते। अतो जिज्ञासा जायते—'कोऽयं शक्तिपदार्थः'।

प्रायशो व्युत्पत्तिनिमित्ताधीनत्वाच्छब्दार्थस्य प्रथमं व्युत्पत्तिनिमित्तमेव निरूपणीयम्, ततश्च प्रवृत्तिनिमित्तम्। निघण्टुटीकाकृता शक्तिशब्द इत्थं व्याकृतः—"शक्नोतेः स्त्रियां क्तिन् शक्यते कर्तुं शक्यते वाऽनया परलोकं जेतुम्" इति। यया कर्मणः सम्पादनं क्रियते, या च स्वयं कार्यरूपेण परिणमनधर्मविशिष्टा सा शक्तिः। एतदेव अभिप्रेत्य भगवान् शङ्करः प्राह—"कारणस्य आत्मभूता शक्तिः, शक्तेश्च आत्मभूतं कार्यम्" इति। एतेन विज्ञायते कारणस्य आत्मभूता या सा—शक्तिः; शक्तेश्च यदात्मभूतं तत् कार्यम्, अतश्च शक्तेरेव व्यक्तरूपं कर्मेति सिध्यति।

वेदेष्वपि शक्तिशब्दस्य प्रयोग उपलभ्यते। केष्वर्थेषु अयं शब्दः प्रयुक्त इति तावद् विचारयामः।

"स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसी प्राम्। तमु कृण्वँ-स्त्रेधा भुवे कंस ओषधीः पचति विश्वरूपाः॥" ऋ. सं.

निरुक्तकारेण अस्य मन्त्रस्य व्याख्यानमेवमकारि स्तोमेन हि यं दिवि देवा अग्निमजीजनञ्छक्तिभिः कर्मभिर्द्यावापृथिव्योः पूरणं तमकुर्वंस्त्रेधाभावाय— पृथिव्यामन्तरिक्षे दिवीति शाकपूणिर्यदस्य दिवि तृतीयं तदसावादित्य इति ब्राह्मणम्।—निरु०।

देवाः स्तुतिभिः शक्तिभिः कर्मभिश्च त्रिभुवनव्यापकं—त्रिभुवनपूरकञ्च दिवि सूर्यात्मकं यमग्निं ससर्जुः, तमेव लोकयात्रानिर्वाहाय आदित्यविद्युदग्निरूपेण त्रेधा विभेजिरे। एते त्रयोऽपि सर्वत्र समं व्याप्ता लोककल्याणाय ओषधीः पाचयन्ति। मनुष्यस्य सकलं व्यवहारजातं सदा अग्निरेव सम्पादयति।

'आपः स्त्री भूम्नि वार् वारी'ति कोषप्रामाण्यात् 'वार्' शब्दो हि जलवाचकः तत्र को हेतुरिति विवरणपरः कोऽपि मन्त्रो दृश्यते अथर्ववेदे—

अपकामं स्पन्दमाना अवीवरत् वोहिकम्।
इन्द्रो वः शक्तिभिर्देवी तस्माद् वार नाम वोहितम्॥

—अथर्व० सं०

श्रीसायणाचार्येण इत्थं व्याख्यातोऽयं मन्त्रः—

"इन्द्रो वः युष्माकं शक्तिभिर्हेतुभिः अवीवरत्, वृतवान् युष्मान् स्वात्मसात्कर्तुमैच्छत्"।

स्वेच्छया स्पन्दमाना आपोऽवीवरदिन्द्रः इन्द्रेण वृता एता, अस्मात् 'वार्' नाम्ना व्यवहार आसाम्। अत्र शक्तिशब्दो हेत्वर्थे प्रयुक्तो दृश्यते।

श्वेताश्वतरे शक्तिशब्दस्य प्रयोगः—

"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः॥ श्वे. उ.

अत्र हि प्रयुक्तः शक्तिशब्दस्त्रिगुणमयीम्प्रकृतिं बोधयति, इयं परमात्मनिषण्णा जगतः सृष्टिस्थितिप्रलयकरीति गीयते।

योगवाशिष्ठेऽपि शक्तिशब्दप्रयोगः—

अप्रमेयस्य शान्तस्य शिवस्य परमात्मनः।
सौम्यचिन्मात्ररूपस्य सर्वस्यानाकृतेरपि॥

इच्छासत्ता व्योमसत्ता कालसत्ता तथैव च ।
तथा नियतिसत्ता च महासत्ता च सुव्रत ॥
ज्ञानशक्तिः क्रियाशक्तिः कर्तृताऽकर्तृताऽपि च ।
इत्यादिकानां शक्तीनामन्तो नास्ति शिवात्मनः ॥ निर्वा. प्र.

वशिष्ठो हि परमात्मानमपृच्छत्——महतो देवस्य शक्तेः किं स्वरूपम् ? के च तस्या भेदाः ? कानि च तत्कार्याणि ? इत्थं पृष्टः परमात्मा प्रोवाच——सौम्य ! प्रथमं शान्तस्य अप्रमेयस्य चिन्मात्रस्य निर्विकारस्य मङ्गलात्मनः परमात्मन इच्छासत्ता अभिव्यक्ता भवति । ततश्च व्योमसत्ता, कालसत्ता, नियतिसत्ता क्रमेण अभिव्यज्यते । इमाः सत्ता अधिष्ठाय वर्तमाना सत्ता महासत्तापदेन अभिधीयते । अतश्च परमात्मनो ज्ञानक्रियाकर्तृत्वाऽकर्तृत्वरूपाः शक्तयो याथार्थ्येन गणयितुमशक्याः ।

अनेन वस्तुतः शक्ति-शक्तिमतोरभेद एव विज्ञायते । मायैव शक्तिभेदकारिणी सा हि परब्रह्मणोऽनन्तस्य गुणेन शक्त्या कार्येण च आनन्त्यं ख्यापयति ।

योगवाशिष्ठरामायणतो ज्ञायते——परिच्छिन्ना अपरिच्छिन्ना च सत्तैव शक्ति-पदार्थः । सर्वेष्वेव पदार्थेषु अस्ति शक्तिः । शक्त्यैव द्रव्यगुणादिभिर्नामभिः पदार्थानां व्यवहारो भवति । इयमेव च देशकालमनोबुद्धिकर्मेन्द्रियप्राणाभिधानैरभिधीयते । एवं च सत्तैव शक्तिरिति फलति ।

## सांख्यदर्शनेऽपि

"शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः"——सां. सू. १-११ सर्वेषां पदार्थानां स्वभावः अनपायी । स्वभावस्य नाशः कदापि न भवति । आत्मा यदि स्वभावेन बद्धस्तदा न शक्यते कदापि तस्य मोक्षः कर्तुम् । अत्र सन्देहः सावकाशो भवति——कथं नाम स्वभावोऽनपायीत्युच्यते ? शुक्लस्य पटस्य स्वाभाविकी शुक्लता वर्णान्तरतां नीयते, बीजानां स्वाभाविकी अङ्कुरोद्गमकारिणी शक्तिश्च विनाश्यते । एवञ्च स्वभावाऽनपायित्वसिद्धान्तो न शोभते ।

सन्देहमिममपनयति सांख्यप्रवचनभाष्ये भिक्षुः——न तु शौक्ल्याङ्कुरशक्त्योरभावो भवति, रजकव्यापारैर्योगि-संकल्पादिभिश्च रक्तपट-भ्रष्टबीजयोः पुनः शौक्ल्याङ्कुर-शक्त्याविर्भावदर्शनात् । 'कार्यशक्तिमत्त्वमेवोपादानकारणत्वम्, सा शक्तिः कार्यस्य अनागतावस्थैवे'ति विज्ञानभिक्षुः ।

## पूर्वमीमांसादर्शने

"तदशक्तिश्चानुरूपत्वात्"—१।३।२

अत्र शक्तिशब्दः सामर्थ्यरूपे अर्थे प्रयुक्तो महर्षिणा जैमिनिना। साधुशब्देभ्यः समानरूपाणामपशब्दानामुत्पत्तिं बोधयति सूत्रमिदम्। शक्तिवैकल्यात् गोशब्द एव केनापि गावीरूपेण प्रयुक्तः। शक्तिवैकल्य-प्रयुक्तोऽयं शब्दो वस्तुतस्तु गोशब्द एवेति बुद्ध्या गोरूपवाचको भवति अयं गावीशब्दोऽपि। इत्थमेव अपभ्रष्टशब्दानामुत्पत्तिर्जाता।

## उत्तरमीमांसादर्शने

"शक्तिविपर्ययात्"—२।३।३८

क्रियासंपादिका शक्तिः। कर्तृकरणादीनि क्रिया निष्पादयन्ति, अतश्च तान्येव शक्तिः। "स्वतन्त्रः कर्ता" इति सूत्रयन् महर्षिः पाणिनिरपि क्रियासिद्धौ प्रकृष्टोपकारिकां शक्तिमेव कर्त्रीं व्याकरोत्। सांख्या हि बुद्धिमेव कर्त्रीमाचक्षते। असंगत्वात् पुरुषस्यात्मनो वा कर्तृत्वं न संभाव्यते। अत्र बादरायणो वदति—बुद्धिः करणम्, अनया जनो विजानाति। अतश्च नेयं कर्तृरूपेण ग्रहीतुं शक्यते। तथाग्रहणे च शक्तिविपर्ययो दुर्निवारः स्यात्, बुद्धेः कर्तृत्वाङ्गीकारे तस्यापि करणान्तर-कल्पना कर्तव्या भवेत्। तस्मात् आत्मैव कर्ता। अत्रापि प्रयुक्तः शक्तिशब्दः सामर्थ्यार्थवाची।

(क्रमशः)



# प्राशस्तिकम्

पं० शैलेन्द्रनाथ-सिद्धनाथपाठकः ( तराना उज्जयिनी )

ज्योतिष्मती शुद्धगुणात्मशक्ति ज्ञानश्रियः शान्तविलासहासाम् ।
मनीषिवृन्दैरभिनन्दनीयां वन्दामहे कामपि चित्स्वरूपाम् ॥

ज्ञानज्योतिःस्वरूपो विमलसुमनसाञ्जन्मभूरत्नसूतिः
क्षोणीसिन्दूरबिन्दुर्विलसितसुयशः - सिन्धुदिव्यप्रभेन्दुः ।
आत्मज्योतिष्मतां सच्चिति सुमतिमतां पुण्यभूमिर्विभूनां
श्वेतच्छत्राभिरामो हिमनगमुकुटो भारतो भारतोऽयम् ॥

गुणप्रकर्षोर्वरबीजभूमिर्विधेः स्वकीया सूरसुन्दरश्रीः ।
सरस्वतीहास्यकलाग्रभूमी रमानटीविभ्रमरंगभूमिः ॥

स्वर्गो भुवः सुरपतेर्नवनन्दनं त्वं
सौभाग्यमेव शुभकीर्त्यमराङ्गनायाः ।
रत्नाकरोऽसि तव रत्नपरम्परा सा,
स्रष्टुः प्रगल्भवचसोऽपि दवीयसीव ॥

त्वां सूर्य्यचन्द्रकृतदीप-भ-पुष्पमाला
नित्यं समर्चयति सृष्टि–सुवासिनीयम् ।
लक्ष्मीपितुः करतलार्पितपाद्यमन्ते
मन्दानिलैः स्तुतमतीव दिगङ्गनाभिः ॥

दिव्यात्मसात्त्विकगुणादिविहारभूमे
किं वर्णयामि महतीं विरुदावलिं ते ।
वाण्याः प्रयाति सततं क्वणनेन वीणा-
तन्त्रीप्रमण्डनकृते निजबाहुवल्ली ॥

वेदस्वरूपोदयः

सद्भूतेः कुलधाम पोषणरसः सारस्वतज्योतिषां,
सर्वाङ्गोज्ज्वलसत्यतत्त्वधिषणालीलाविलासः सताम् ।

विद्यारत्नपरम्परा - प्रतिनिधिः सौभाग्यभानुर्धिय-
स्तत्त्वज्ञानरसायनं विजयते वेदस्वरूपोदयः ॥

वेदामृतं पीयताम्

शुद्धार्षप्रतिभाप्रसूतमहसा, ज्ञानश्रियं हासयद्-
यत् सन्मौक्तिकधीषु जीवनरसं सञ्चारयद् राजते ।
सत्यान्वेषणतत्परागमगणे जीवातुरेवात्मन-
स्तद् दिव्यात्मगुणौजसैकममलं वेदामृतं पीयताम् ॥

अयि मधुकर ! केलिं मा कुरु त्वं वनेऽस्मिन्
सुमधुर-मधु पीत्वाऽऽभिः समं पद्मिनीभिः ।
वसतिरिह गजानां द्राक् स्वदेशं प्रयाहि,
स्मरसि ? कुटिलहृद्भिर्दुस्सहस्सद्विलासः ॥

प्रज्ञोपस्नुतवेदमातृपयसा पुष्टात्मवर्चस्विनो
विप्राः सद्गुणसम्पदः प्रकृतितः स्वत्वाभिमानोन्नताः ।
तैर्हित्वा कुलदेवतामथ कदा प्रह्वीकृतं मस्तकं
पादैर्लाञ्छितभर्तृकामभिपरां हीनाङ्कगां चञ्चलाम् ॥

अभिनव-वर्षपदन्यासे शुभाशंसा-

कान्ता विशुद्धरविगौरतनुर्विशाला
सस्यैक-नीलवसना नवतारहारा ।
मुग्धा-रसाल-कलकाकलिकानिनादा
सेयं वसन्ततिलका नववत्सरश्रीः ॥

मुग्धारविन्दवनकान्तिहरा मुखे मे हृद्यानवद्यचरिता कविता चकास्तु ।
वाणीविलासपदलास्यविधानदक्षा सा काऽपि शक्तिरनिशं मम शं तनोतु ॥
सा वीरशक्तिरमला प्रतिभा कवीनां वाणी स्वभावमधुरा चतुराननस्य ।
विद्यावधूवरचिदात्मसुखैककोषः सारस्वतस्वमखिलं जनभूतयेऽस्तु ॥



# सूत्रप्रस्थानतत्त्वविमर्शः ( न्यायप्रस्थानम् )

श्रीकृष्णमोहनठक्कुरः

( प्रधानाचार्यः काशीहिन्दूविश्वविद्यालयीय-रणवीरसंस्कृतविद्यालयस्य )

तत्र ब्रह्मसूत्रोद्देश्यम्—

धर्मार्थकाममोक्षचतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थो नेतरे, तेषामनित्यत्वात्। अर्थकामयोरनित्यत्वं प्रत्यक्षेणैवावगम्यते। धर्मोऽप्येवम् 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' छा. ८ १.६ इति श्रुतेः। मोक्षस्तु न तथा 'न स पुनरावर्त्तते' छा. ८.१५.१ इति श्रुत्या तस्य नित्यत्वावगमात्। स्मृतिरपि—

'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते।' ( गीता ८.१६ ) 'यद्गत्वा न निवर्त्तन्ते'। कर्णापाटवादिपुन्दोषसम्पद्रहितपुरुषप्रणीतत्वाद्वेदस्यैव प्रामाण्ये प्राधान्यम्।

प्रत्यक्षाद्यगोचरे अर्थे वेदस्मृत्योरेव प्रमाणत्वात्। प्रत्यक्षितस्य नभोनीलिम-वितस्तिप्रमाणार्केन्दुमण्डलगान्धर्वनगरादेर्मिथ्यात्वावगमेनार्थबाधादिन्द्रियार्थसन्निकर्षजन्यं प्रत्यक्षं न गुरुमानम्। पुरुष-बुद्धिवैचित्र्येणानियतावस्थानप्रतिष्ठानात् सर्वविद्यानुग्राहक-मनुमीयतेऽनेनेति व्युत्पत्त्याऽनुमानं न्यायापरपर्यायं न बलीयो मानम्। उक्तञ्च—

'यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥' इति।

अत एव न्यायभाष्यकृताऽपि 'प्रत्यक्षागममाश्रितमनुमानम्, यत् पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स' इत्युक्तम्। कूर्मपुराणेऽपि[1] प्रदर्शितार्थ एव प्रतिपादितः। तस्माच्च श्रुतिप्रमाणमेव मुख्यम्। तदनुसारि गीतावाक्यञ्च।

तदेवं वैदिके ब्राह्मणग्रन्थप्रतिपादितयज्ञकर्मणि लोकानां कदाचिदेवं बुद्धिः स्याद्यद् 'यज्ञादि कर्म कृत्वा स्वर्गादिफलसम्पादनमेव मुख्यः पुरुषार्थ' इति। तन्निरासाय श्रुतावुप-

---

१. "श्रुतिसहायरहितमनुमानं न कुत्रचित्।
निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च॥
श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम्।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा॥" इति ( कूर्मपुराणम् )

निषदामभिव्यक्तिः । उपनिषत्सु च लोकानां ब्रह्मज्ञानाय यथाशक्ति विधिमुखेन निषेधमुखेन चेति प्रकारद्वयेन ब्रह्म वर्णितम् ।

श्रुतिश्चात्यन्तं दुरवबोधा, यतः श्रुतिवाक्यं संक्षिप्तं सङ्गतिप्रदर्शकवाक्यैः प्रायो विरहितं च । भाषा चातिपुराणी, लोकाश्चोत्तरोत्तरं मन्दबुद्धयः । श्रुतिप्रदर्शिते मार्गे श्रद्धालूनां विश्वासेन प्रवृत्तावप्यन्येषां लोकानां ज्ञानमार्गे कर्ममार्गे च प्रवृत्तिः शिथिला समजनि । नास्तिकमतमाक्रान्तं सर्वत्र । ततो वेदार्थज्ञानाय ऋषयस्तपश्चेरुः । तत्प्रभावेण जैमिनिना द्वादशाध्यायी षोडशाध्यायी वा मीमांसा सूत्रप्रणीता । तया श्रुतिवाक्यार्थज्ञानं समजनि, तस्यां वाक्यार्थयोजनोपयोगिबहुविधन्यायसंगृहीतत्वात् । तेन कर्मस्वादरेण पुनः प्रवृत्तिः सञ्जाता, तद्वृद्धिः परां काष्ठां गता । यथा च "उपनिषद्भागोऽयं न श्रुतिशिरोभूतः किन्तु जीवात्मनोऽविनाशित्वप्रतिपादनेन स्वर्गादिपारलौकिके सुखे विश्वासोत्पादनद्वारा यज्ञादिकर्मकाण्डस्यैवोपोद्बलकस्तदङ्गभूतः" इत्येवं लोकानां सुदृढा बुद्धिः समजायत । उपनिषत्प्रदर्शितो मोक्षमार्गश्च कण्टकानुविद्ध इव लोकानामगम्यः समजनि । नास्तिका इव वेदान्तिनोऽपि मीमांसकतीक्ष्णकटाक्षैकलक्ष्याः समभूवन् ।

एवं लोकप्रत्ययं निराकुर्वन् मोक्षमार्गे च लोकानां प्रवृत्तिमुत्पादयन् भगवान् बादरायणो ब्रह्मसूत्राणि 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिः शब्दात्' इत्यन्तानि प्रणिनाय । जैमिनिप्रतिपादिताश्च वाक्यार्थोपयोगिनो न्यायाः प्रायः सर्वे बादरायणस्य सम्मता एव, उपनिषद्भागः कर्मकाण्डस्याङ्गभूतः इत्येतावानेवांशः परं बादरायणस्यासम्मतः । बादरायणश्च जैमिनिप्रतिपादितैरेव न्यायैरुपनिषदर्थं प्रतिपाद्य तस्य च श्रुतिशिरोभागत्वं व्यवस्थाप्य मोक्षद्वारमप्रतिबन्धं चकार । तत एवोपनिषत्प्रदर्शितो मोक्षमार्गश्च निष्कण्टकः समभूत् ।

अपि च श्रुतिवाक्यानां मिथः समन्वयो यावन्नाधिगतो भवेद्, यावच्च लोके प्रसिद्धिमागतैः कापिलादिदर्शनैः सह प्रतिभासमानस्य विरोधस्याकिञ्चनकारित्वं नावगतं भवेद्, यावच्चात्मज्ञानमोक्षयोः साधनसाध्यभावः कया विधया सम्भवतीत्येतन्न निश्चितं भवेद्, यावच्च मोक्षस्य सर्वातिशायित्वं प्रतीतिपथं नावतरेत्तावदुपनिषदः स्वोद्देश्यं साधयितुं न प्रभवन्तीत्यालक्ष्य श्रीमद्बादरायणाचार्यैरध्यायचतुष्टयात्मकेन क्रमशः समन्वयाविरोधसाधनफलविचारः कृतः । अतश्चोपनिषदो ब्रह्मसूत्राणि च वेदान्तशास्त्रीयग्रन्थेषु प्रामुख्येन गणनामर्हन्त्येव ।

मनसीन्द्रियेषु प्राणे देहादौ चात्मत्वमारोपितमेव भ्रमेण भासते। भ्रमनिवृत्तिमन्तरा मोक्षो दुर्लभः। भ्रमनिवृत्तिश्च ब्रह्मज्ञानेनैव। तत्र हि 'तस्माच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्' (बृह. ४. ४. २३) इत्युक्तदिशा शमदमादिसाधनचतुष्टयसम्पन्न एवाधिकारीति प्रतीयते। इदञ्च साधनचतुष्टयमन्तरङ्गसाधनम्। कर्म तु चित्तशुद्धिद्वारा ज्ञानसाधनमिति बहिरङ्गसाधनम्। अन्तरङ्गसाधनन्तु श्रवण-मनन-निदिध्यासनरूपं त्रयम्, "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृह. २.४.५) इति श्रुतेः। एतदर्थमेवाह—

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥" इति।

तत्र वेदान्तवाक्यान्यद्वितीये ब्रह्मणि प्रमाणं न वेति संशयः श्रवणेन निवर्त्तते। मननेन त्वनेके संशया निवर्त्तन्ते। यथा—प्रपञ्चः सत्यो मिथ्या वा? आत्माऽऽनन्दस्वरूपो न वा? आत्मा देहातिरिक्तो न वा? जीवस्य परमात्मना सहैक्यं सम्भवति न वा? आत्मज्ञानं मोक्षसाधनं न वा? मोक्षसाधनत्वेऽपि कर्मसमुच्चितं तन्मोक्षसाधनमथवा केवलम्, आत्मा ज्ञानस्वरूपो वा ज्ञानगुणको वेत्येवमादयः।

मननं हि तर्कात्मकम्। यदि प्रपञ्चः सत्यः स्यात्तर्ह्यद्वितीयश्रुतिविरोधः स्यादिति तर्केण प्रपञ्चे सत्यत्वधीर्निवर्त्तते। आत्माऽऽनन्दस्वरूपो न स्याच्चेत्तत्प्राप्तये न कोऽपि व्याप्रियेतेति तर्क आत्मानन्दस्वरूपतयां प्रमाणम्। देह एव आत्मा चेत्कृतहानाकृताभ्यागमप्रसङ्गः। आत्मज्ञानस्य मोक्षसाधनत्वाभावे कर्मसमुच्चितस्य वा तस्य मोक्षसाधनत्वे 'नान्यः पन्था विद्यतेऽयनाय' इति (श्वेता. ३।८) श्रुतेरप्रामाण्यापत्तिः। आत्मा ज्ञानगुणकश्चेत् 'निर्गुणं निष्क्रियम्' इत्यादिश्रुतिर्न सङ्गच्छेत। न चैतत्सर्वमिष्टापत्तिरिति स्वीकर्तुं शक्यते श्रुतिप्रामाण्यस्यैव प्रबलतमप्रमाणत्वेनाभ्युपगमात्। उपपादितञ्चैतदुपरिष्टात्।

निदिध्यासनेन तु 'अहमज्ञः कर्तृत्वात्' इति विपरीतभ्रमो निवर्त्तते। तदेवं—

"संसाराब्धौ येन लब्धं साधनानां चतुष्टयम्।
तस्यैव ब्रह्मजिज्ञासा नौकावदुपयुज्यते॥" इति।

अत्रेदं विचारणीयम्—पूर्वमीमांसायां साध्यरूपः क्रियादिधर्मः प्रतिपाद्यते। उत्तरमीमांसायां तु सिद्धो धर्मो ब्रह्मरूप इति।

# पावन स्मृति में

## श्रीगणेश प्रसाद दूबे

( निदेशक : राज्य-शिक्षा-संस्थान, पटना, बिहार )

प्रकृति का लास्य विचित्रताओं का निदर्शन है। अतः प्रत्येक व्यक्ति के जीवन में परम महनीय क्षण आते ही रहते हैं। मैं भी अपने को बड़भागी समझता हूँ कि ऋषियों के पूत एवं उज्ज्वल चरित्र से गरिष्ठ इस तपोभूमि भारत के काव्य-गहनारण्य केसरी, संस्कृत सरस्वती के वरदपुत्र, अवदातचरित, पूज्यास्पद विद्वद्वरेण्य महामहोपाध्याय पं० श्री हरिहरकृपालु द्विवेदी जी जैसे मनीषी को श्रद्धाभिभूत विचार-सुमन समर्पित करने का सुअवसर प्राप्त हुआ। उन महान् अध्यवसायी साहित्य साधकों का मैं चिर कृतज्ञ हूं जिन्होंने ऐसे महापुरुष के संस्मरण का पुनीत पर्व प्रस्तुत किया है।

मान्य आचार्य महर्षि पतञ्जलि के अधीतबोधाचरणप्रचारणैः की प्रतिमूर्त्ति थे। त्याग और तपस्या की बलिवेदी पर बैठकर उदारतापूर्ण विद्यादान आपकी अपनी विशेषता थी। शिष्यगण आपकी छत्रच्छाया में गुरुवचनामृत का पान कर संतुष्ट होते थे, साथ-साथ महामहोपाध्याय जी से पिता का वरेण्य वात्सल्य भी उन्हें प्राप्त होता था।

पारसमणि के स्पर्श से लोहा स्वर्ण बन जाता है पर इनके दर्शन मात्र से ही अयोग्य शिष्य भी अपने सारे कल्मष से मुक्त हो सारदा का एक महान् साधक बन जाता था।

साक्षर-निरक्षर संत-असंत सेठ-रंक सन्यासी गृहस्थ सभी राग-द्वेष से रहित हो इनसे विद्यारूपी अमृत का पान करते थे। व्याकरण, साहित्य, न्याय, दर्शन, धर्मशास्त्र अर्थात शास्त्र के सभी क्षेत्रों में इनकी एक सी प्रखर गति थी। इनके दर्शन-शास्त्रीय चमत्कृत विचारों को सुनकर बड़े—बड़े यतियों को भी इनके समक्ष घुटना टेक देना पड़ता था।

